# वेतालपञ्चविंशतिः।


पण्डितकुलपतिना,

वि, ए, उपाधिधारिणा

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

विरचिता।



तदात्मजाभ्यां

पण्डित-श्रीमदाशुबोध-विद्याभूषण-

पण्डित-श्रीमन्नित्यबोध-विद्यारत्नाभ्यां

सुललिताख्यया व्याख्यया समलङ्कृत्य

प्रकाशिता च।



चतुर्थसंस्करणम्।

कलिकातामहानगर्य्याम्

श्रीचसत्ययन्त्रे

मुद्रिता।

खृं १९२४।

प्रकाशक— पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान— २न०, रमानाथ मजुमदार ष्ट्रीट्, आम्हा[illegible]
ष्ट्रीट् पोष्ट-अफिस। कलिकाता।

प्रिण्टर—वि, वि, मुखर्ज्जी।

२ न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# सूचीपत्रम् ।



## सूचीपत्रम् ।

# वेतालपञ्चविंशतिः।

## उपक्रमणिका।

अस्ति (क) गोदावरीतटे प्रतिष्ठानाख्यो जनपदः। तत्र विक्रमसेनस्य (ख) भूपतेः पुत्रः शक्रपराक्रमः त्रिविक्रमसेनो नाम विख्यातकीर्त्तिरभूत् नृपतिः। तस्य (ग) सभाऽऽसीनस्य नृपस्य सेवार्थं प्रत्यहं क्षान्तिशीलो नाम भिक्षुः एकैकं फलमुपानयत्। सोऽपि

---

(क) गोदावरीतटे—गोदावर्य्याः,—तदाख्याया नद्याः, तटे—तीरे (६ष्ठी तत्पु०। अधिकरणे ७मी)। प्रतिष्ठानाख्यः,—प्रतिष्ठानम् (प्रति+स्था+भावे ल्युट्) इति आख्या—नाम यस्य सः (बहुव्री०)। जनाः पद्यन्ते गच्छन्ति यत्र सः जनपदः,—देशः, दाक्षिणात्यस्थनगरविशेषः इति यावत्, ("भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी। जन+पद+अधिकरणे घः। वि० पु०)।

(ख) भूपतेः,—राज्ञः (शेषे ६ष्ठी)। पुत्रः,—तनयः (पु०। विश०। पुत्+त्रै+कर्त्तरि कः) "पुन्नाम्नो नरकात् यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति ख्यातः—॥" शक्रपराक्रमः,—शक्रस्य—इन्द्रस्य, पराक्रम इव पराक्रमः,—वीर्य्यं यस्य सः (बहुव्री०)। विख्यातकीर्त्तिः,—विख्याता—प्रसिद्धा (वि+ख्या+कर्म्मणि क्तः) कीर्त्तिः,—यशः (कृत+भावे क्तिन्) यस्य सः (बहुव्री०)। अभूत्—आसीत् (भू+कर्त्तरि लुङ्-द)। नृपतिः,—राजा (वि०)।

(ग) सभाऽऽसीनस्य—सभायाम् आसीनः,—उपविष्टः (आस+कर्त्तरि शानच्) तस्य। (विश०) नृपस्य—राज्ञः (शेषे ६ष्ठी)। सेवार्थम्—आराधनार्थं, (सेवायै इदमिति नित्यसमासः)। क्षान्तिशीलः,—क्षान्तिः,—क्षमापूर्वं, शीलं—चरित्रं यस्य सः (बहुव्री०), भिक्षुः,—सन्न्यासी (पु०। भिक्ष+कर्त्तरि उः)। उपानयत्—उपनीतवान्, उपहारीकृतवानित्यर्थः (उप+आ+नी+लङ् द)।

(घ) तदादाय आसन्नचरस्य कोशाधिकारिणो हस्ते प्रतिदिनं न्यक्षिपत्।

(ङ) इत्थं द्वादशसु वर्षेषु गतेषु एकदा सभागतोऽसौ भिक्षुः राज्ञे यथायथं फलं दत्त्वा सभागृहात् निरगात्। राजा तु तस्मिन्नहनि (च) दैवात् प्रविष्टाय रक्षिणां हस्तच्युताय क्रीड़ामर्कटपोताय तत् फलं प्रादात्। स मर्कटः

---

(घ) तत्—फलम्। आदाय—गृहीत्वा (आ+दा+ल्यप्) आसन्नचरस्य—आसन्ने—समीपे, चरति—वर्त्तते यः तस्य (आसन्न+चर+कर्त्तरि टः) निकटवर्त्तिनः। कोशाधिकारिणः,—कोशस्य—अर्थौघस्य, धनसमूहस्येत्यर्थः, ("कोशो(षो)-ऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः) अधिकारः,—स्वामित्वं, रक्षकतया इति भावः, विद्यते अस्य इति (मत्वर्थे इनिः) कोशम् अधिकरोति रक्षकतया इति भावः, यस्तस्य इति वा [अधि+कृ+कर्त्तरि णिनिः, "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (३।१।१३४ पा०) इति ग्रहादित्वात् णिनिः] धनागाराध्यक्षस्येत्यर्थः। न्यक्षिपत्—निहितवान् (नि+क्षिप्+लङ्-द)।

(ङ) इत्थम्—अनेन प्रकारेण, पूर्वोक्तफलदानरीत्या इत्यर्थः, [अव्य०। "इदमस्थमुः" (५।३।२४ पा०) इति इदम्+थमुः]। वर्षेषु—अब्देषु (भावे ७मी), गतेषु—अतिक्रान्तेषु (विश०)। सभागतः,—सभां—संसदं, गतः,—प्राप्तः (विश० २या तत्पु०) सभायामागत इति वा, (७मी तत्पु०) सभास्थित इत्यर्थः। राज्ञे—नृपाय, (सम्प्र० ४र्थी) यथायथं—नियमितमित्यर्थः, (अव्य०)। दत्त्वा—प्रदाय (दा+क्त्वा)। सभागृहात्—सभायै गृहं (४र्थी तत्पु०) तस्मात् (अपा० ५मी)। निरगात्—निरगमत् [निर्+इण्+लुङ्-द "इणो गा लुङि" (२।४।४५ पा०) इति इणो गा आदेशः; "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]।

(च) दैवात्—सहसा (अव्य०)। प्रविष्टाय—कृतप्रवेशाय (विश०। प्र+विश्+क्तः)। रक्षिणां—रक्षकाणां (संबंधे ६ष्ठी), हस्तात् च्युतः (५मी तत्पु०) तस्मै हस्तच्युताय—करभ्रष्टाय (विश०)। क्रीड़ामर्कटपोताय—क्रीड़ायै—खेलायै, ("क्रीड़ा खेला च नर्म च" इत्यमरः) मर्कटपोतः,—वानरशिशुः (४र्थी तत्पु०) ("पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः) तस्मै (सम्प्र० ४र्थी) चित्तविनोदार्थं संगृहीतवानरशिशवे इत्यर्थः। प्रादात्—प्रायच्छत् (प्र+दा+लुङ्-द)।

(छ) यावत् तत् फलमश्नाति, तावत् तस्मात् फलात् विदलितात् अनर्घम् उत्तमं रत्नं निरगात्। तद्दृष्ट्वा राजा तदादाय तं (ज) भाण्डागारिकं पप्रच्छ,—"भिक्षुणा उपनीतानि यानि फलानि मया तव हस्ते दत्तानि, तानि त्वया सदा क्व स्थापितानि?"। (झ) तदाकर्ण्य कोशाध्यक्षः सभयस्तं व्यजिज्ञपत्,—"देव! मया तानि अखण्डानि च गवाक्षतः क्षिप्तानि, यदि आदिशति देवः, तदा तानि साम्प्रतं गवेषये"

---

(छ) यावत—यदा इत्यर्थः। अश्नाति—भक्ष (क्र्यादि अश्+लट्-ति)। तावत्—तदा इत्यर्थः। फलात् (वि०। अपा० ५मी), विदलितात्—खण्डितात, भोजनार्थं भग्नादिति यावत (विण० वि+दल्+क्तः), अनर्घं—नास्ति अर्घः,—मूल्यं यस्य तादृशम् अमूल्यं, मूल्येनापि दुष्प्रापमित्यर्थः, महामूल्यमिति यावत्। रत्नं—माणिक्यं (वि० नपु०)।

(ज) भाण्डागारिकं—भाण्डानां—भूषणादिद्रव्यजातानां ("भाण्डं मूलवणिग्वित्ते तुरङ्गाणाञ्च मण्डने। नदीकूलद्वयोर्मध्ये भूषणे भाजनेऽपि च" इति हैमः) आगारं—तद्रक्षणार्थं गृहविशेषः, तत्र नियुक्तः इति ("तत्र नियुक्तः" (४।४।६९ पा०) इति ठक्) तं, कोशाधिकारिणं, पप्रच्छ—जिज्ञासितवान् (प्रच्छ+लिट्-णल्)। भिक्षुणा—क्षान्तिशीलाख्यसन्न्यासिना। उपनीतानि—उप—समीपे, नीतानि—आनीतानि, (विण०। उप+नी+क्तः) दत्तानि—अर्पितानि, [दा+क्तः, "दो दद्घोः" (७।४।४६ पा०) इति दा इत्यस्य ददादेशः]। क्व—कुत्र (अव्य०)। स्थापितानि?—रक्षितानि? (स्था+णिच्+क्तः)।

(झ) आकर्ण्य—श्रुत्वा, (आ+कर्ण+णिच्+ल्यप्)। कोशाध्यक्षः,—भाण्डागारिकः, सभयः,—भयेन सह वर्त्तमानः (बहुव्री०) सन्तः सन्। व्यजिज्ञपत्—विज्ञापितवान् (वि+ज्ञा+णिच्+लुङ्-द)। तानि—फलानि, अखण्डानि—अभग्नानि। गवाक्षतः,—वातायनात्, गवाक्षरन्ध्रमाश्रित्येत्यर्थः, [गवाम् अक्षीव इति गो+अक्षि "अच्क्ष्णोऽदर्शनात्" (५।४।७६ पा०) इति अचि गवाक्षः तस्मात्, ल्यब्लोपे पञ्चमी। "पञ्चम्यास्तसिल्" (५।३।७ पा०) इति तसिल्। "वातायनं गवाक्षः" इत्यमरः]। क्षिप्तानि—पातितानि (क्षिप्+क्तः)। आदिशति—आज्ञापयति (आ+दिश+लट्-तिप्)। साम्प्रतम्—अधुना (अव्य०। "एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः)। गवेषये—अन्विष्यामि (गवेष+स्वार्थे णिच्+

इत्यूचिवान् स राज्ञाऽनुमतो गत्वा क्षणादेव प्रत्याहृत्य पुनः व्यज्ञापयत्,—"देव! तानि कोषे शीर्णानि फलानि, तेषु च रश्मिज्वालाऽऽकुलान् रत्नराशीन् पश्यामि"। तदाकर्ण्य (ञ) सन्तुष्टः तान् मणीन् कोषरक्षिणे दत्त्वा अन्येद्युरागतं तं भिक्षुं पर्य्यपृच्छत्,—"भिक्षो! कथमेवं धनव्ययेन नित्यं मां सेवसे? यावत् कारणं न वक्ष्यसि, तावत् ते फलं न ग्रहीष्ये"।

(ट) इत्युक्तवन्तं तं नृपं स भिक्षुः विजनं नीत्वाऽब्रवीत्,—"वीर! किमपि साधनं साचिव्यसापेक्षमस्ति, तत्र वीरेन्द्रेण

---

लट्-इट्)। ऊचिवान्—उक्तवान्। (वच+क्वसु+१मा १व०)। अनुमतः,—गवेषय इति अनुज्ञातः (अनु+मन+क्तः), गत्वा—यात्वा (गम+क्त्वा), क्षणात्—क्षण-माश्रित्य, कियत्कालमध्ये एव इत्यर्थः, (ल्यब्लोपे पञ्चमी) प्रत्याहृत्य—प्रत्यागत्य (प्रति+आ+हृञ+ल्यप्)। व्यज्ञापयत्—न्यवेदयत्, (वि+ज्ञा+णिच्+लङ्-द)। कोषे—हिरण्यादिस्थापनगृहे, भाण्डागारे इत्यर्थः, शीर्णानि—भग्नानि शुष्कतां गतानि वा (शॄ+क्तः)। रश्मिज्वालाऽऽकुलान्—रश्मीनां—किरणानां, ज्वालाभिः,—शिखाभिः, आकुलान्—व्याप्तानित्यर्थः, (विश०) रत्नराशीन्—माणिक्यसमूहान्, पश्यामि—अवलोकयामि, (दृश+लट्-मिप्)।

(ञ) सन्तुष्टः,—प्रीतः (सम्+तुष+क्तः)। कोषरक्षिणे (सम्प्र० ४र्थी)। अन्येद्युः,—अन्यस्मिन् दिने (अव्य०)। पर्य्यपृच्छत्—अजिज्ञासत (परि+प्रच्छ+लङ्-द)। कथं—कस्मात्। धनव्ययेन—अर्थत्यागेन, (करणे ३या) सेवसे?—परिचरसि? प्रीणयसीत्यर्थः। (सेव+लट्-से)। यावत्—यत्कालपर्य्यन्तम् (अव्य०)। वक्ष्यसि—कथयिष्यसि (वच्+लृट्-स्यसि), तावत्—तत्कालपर्य्यन्तम्, (अव्य०) ते—तव (शेषे ६ष्ठी)। ग्रहीष्ये—आदास्यामि (ग्रह+लृट्-स्ये)।

(ट) उक्तवन्तं—कथितवन्तं [विश०। वच्+क्तवतु "वचिस्वपियजादीनां किति" (६।१।१५ पा०) इति वचेः सम्प्रसारणम्]। विजनं—निर्जनं स्थानं, नीत्वा—प्रापय्य [नी+क्त्वा, नयतेर्द्विकर्म्मकत्वात् नृपं विजनमिति च कर्मद्वयम्] अब्रवीत्—अकथयत् (ब्रू+लङ्-द)। किमपि—किञ्चित्, साम्प्रतमप्रकाश्यमित्यर्थः, साधनं—निर्वर्त्तनं, सम्पाद्यकार्य्यमित्यर्थः, ("मारणे मृतसंस्कारे गतौ द्रव्योपपादने। निर्वर्त्तनोपकरणानुव्रज्यासु च साधनम्॥" इत्यमरः) सिद्धिरिति वा, कार्य्यसिद्धिरित्यर्थः,

त्वया क्रियमाणं साहाय्यमर्थये।" इति (ठ) श्रुत्वा राजा "तथा" इति तस्य साहाय्याय प्रत्यपद्यत। ततः स (ड) श्रमणस्तुष्टः पुनस्तं नृपमवादीत्,—"प्रभो! अस्याम् आगामिन्यां कृष्णचतुर्दश्यां निशाऽऽगमे इतो महाश्मशानं गत्वा वटतरोरधः स्थितस्य मे सकाशं त्वया गन्तव्यम्" इति। तत-

---

("निर्वर्त्तौ दापने सिद्धौ गतावनुगमे धने। उपायव्रतसंस्कारवधमेढ्रेषु साधनम्॥" इति शाश्वतः) [साध्यते यत् तत् साधनं, साध+कर्म्मणि ल्युट्]। साचिव्यसापेक्षं—सचिवः,—सहायः ("मन्त्री सहायसचिवौ" इत्यमरः), तस्य भावः साचिव्यं—साहायकं, सह—साकल्येन, सम्पूर्णतयेत्यर्थः, अपेक्षते—अनुवर्त्तते इति सापेक्षं (सह+अप+ईक्ष+कर्त्तरि पचाद्यच्) साचिव्यस्य सापेक्षं साचिव्यसापेक्षं—सहायसाध्यमित्यर्थः। वीरेन्द्रेण—वीरश्रेष्ठेन, [वीरेषु इन्द्रः तेन ७मी तत्पु०] क्रियमाणम्—अनुष्ठीयमानं, (कृ+कर्म्मणि शानच्) साहाय्यं—सहायताम्, अर्थये—याचे (अर्थ+स्वार्थे णिच्+लट्-इट्)। यच्चिकीर्षुरहं, तत् कस्यापि साहाय्यं विना न भवितुमर्हति, अतः वीरश्रेष्ठस्य ते साहाय्यं प्रार्थये इति निष्कर्षः।

(ठ) श्रुत्वा—आकर्ण्य (श्रु+क्त्वा)। तथा—तदेवास्तु, साहाय्यं करिष्यामीत्यर्थः। साहाय्याय—साहाय्यं कर्त्तुं ["क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" (२।३।१४ पा०) इति तुमुनः कर्म्मणि ४र्थी]। प्रत्यपद्यत—स्वीकृतवान् (प्रति+पद+लङ्-त)।

(ड) श्रमणः,—यतिभेदः, भिक्षुरिति यावत्, ("श्रमणो यतिभेदे ना निन्द्यजीविनि तु त्रिषु" इत्यमरः) तुष्टः,—प्रीतः (तुष+क्तः)। अवादीत्—अभाषिष्ट (वद+लुङ्-द्)। प्रभो!—स्वामिन्! राजन्! इत्यर्थः, आगामिन्यां—भाविन्यां (विण०। आ+गम+णिनि, स्त्रियां ङीप् आगामिनी तस्याम्) कृष्णचतुर्द्दश्यां—कृष्णपक्षीयचतुर्द्दश्यां तिथौ। (कालाधिकरणे ७मी) निशाऽऽगमे—निशायाः,—रात्रेः, आगमः,—आगमनं, प्रारम्भ इत्यर्थः, (६ष्ठी तत्पु०) तत्र, रजनीमुखे इत्यर्थः (अधिकरणे ७मी), इतः,—अस्मात् स्थानात्, (अव्य०। इदम्+"पञ्चम्यास्तसिल्" (५।३।७ पा०) इति तसिल्। "इदम इश्" (५।३।३ पा०) इति इश्)। वटतरोः,—वटवृक्षस्य, अधः,—अधस्तात् ["षष्ठ्यतसर्थप्रत्ययेन" (२।३।३० पा०) इति अधःशब्दयोगे षष्ठी] स्थितस्य—आसीनस्य (विण०। स्था+क्तः), मे—मम (शेषे षष्ठी)। गन्तव्यं—यातव्यं (गम+भावे तव्यत्)।

स्तेन राज्ञा (ढ) "बाढ़मेवं करिष्यामि" इति अभिहिते स क्षान्तिशीलो भिक्षुः प्रहृष्टः स्वं निलयं ययौ।

अथाऽऽगतायां कृष्णचतुर्दश्यां स (ण) महासत्त्वो नरपतिः भिक्षोस्तां प्रार्थनां प्रतिपन्नां स्मरन् प्रदोषे नीलवसनेन समलङ्कृतशिराः खड्गपाणिरलक्षितः तत् महाश्मशानमगात्। गत्वा (त) इतस्ततोऽन्विष्यन् वटतरोरधः स्थितं तं मन्त्रन्यासं कुर्वाणं भिक्षुं दृष्ट्वा समुपेत्य च जगाद,—"भिक्षो! एषोऽस्मि

(ढ) बाढं—स्वीकारार्थकमव्ययमेतत्, प्रतिजाने, प्रतिज्ञां करोमीत्यर्थः, ("बाढं दृढ़प्रतिज्ञयोः" इति मेदिनी)। करिष्यामि—अनुष्ठास्यामि (कृ+लृट्-स्यामि)। अभिहिते—कथिते [अभि+धा+कर्म्मणि क्तः "दधातेर्हिः" (७।४।४२ पा०) इति धाधातोर्हिः]। प्रहृष्टः,—सन्तुष्टः, (प्र+हृष्+कर्त्तरि क्तः)। स्वं—निजं, निलीयतेऽस्मिन् इति निलयं—गृहं, [नि+ली+अधिकरणे घः। "निलयोऽस्तमये गृहे। गोपनस्य प्रदेशेऽपि—" इति हैमः] ययौ—जगाम, (या+लिट्-णल्)।

(ण) महासत्त्वः,—महत्—प्रभूतं, सत्त्वं—बलं यस्य सः महाबलः, (विण०। बहुव्री०। "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति मेदिनी)। प्रतिपन्नाम्—अङ्गीकृतां, (विण०। प्रति+पद्+कर्म्मणि क्तः, ताम्। "प्रतिपन्नोऽन्यथित्वः स्याद्विज्ञातेऽङ्गीकृतेऽपि च" इति मेदिनी)। स्मरन्—चिन्तयन् (स्मृ+शतृ)। प्रदोषे—रजनीमुखे, रात्रिप्रारम्भे इत्यर्थः (कालाधिकरणे ७मी०। "प्रदोषो रजनीमुखम्" इत्यमरः)। नीलञ्च तत् वसनं तेन—कृष्णवस्त्रेण, कृष्णवर्णोष्णीषेणेति यावत्, (कर्म्मधा०। करणे ३या); कृष्णपक्षीयरात्रौ कृष्णवसनेन शिरःसंच्छादनमन्यैरलक्षिततया गमनार्थं ज्ञातव्यम्। समलङ्कृतं—भूषितं, शिरः,—मस्तकं येन यस्य वा तथाभूतः, समाच्छादितमस्तकः इत्यर्थः (बहुव्री०)। खड्गपाणिः,—खड्गः,—असिः, पाणौ—हस्ते यस्य तथाविधः, (व्यधिकरणबहुव्री०)। अलक्षितः,—केनापि अदृष्टः (विण०। नञ्+लक्ष+कर्म्मणि क्तः)।

(त) इतस्ततः,—अस्यां तस्यां दिशि, समन्तादित्यर्थः (अव्य०)। अन्विष्यन्—अनुसन्दधानः (अनु+इष्+शतृ)। मन्त्रन्यासं—मन्त्रेण—मन्त्रोच्चारणेन, मन्त्रपाठपूर्वकमित्यर्थः, न्यासं—करषडङ्गादिन्यासं, (३या तत्पु०) कुर्वाणम्—अनुतिष्ठन्तं (विण०। कृ+कर्त्तरि शानच्)। दृष्ट्वा—अवलोक्य, (दृश्+क्त्वा)।

आगतः, किन्ते करवाणि? वद"। तदाकर्ण्य स भिक्षुर्नृपं दृष्ट्वा हृष्टः (थ) प्रोवाच,—"राजन्। यदि प्रसादस्ते कर्त्तव्यः, तदा इतो दक्षिणामुखं गत्वा एकाकी विदूरे यं शिंशपातरुं द्रक्ष्यसि, तस्मिन् प्रलम्बितो मृतः कोऽपि तिष्ठति, तमिहानीय मे साहाय्यं कुरु।"

तदाकर्ण्य स वीरो नृपतिः "तथा" इति (द) उक्त्वा सत्यसङ्गरः दक्षिणादिशमालम्ब्य तत्र प्रययौ। (ध) कथञ्चित्त तेन श्मशानमार्गेण गच्छन् विदूरे तं शिंशपातरुं प्राप्य तदुपरि

---

समुपेत्य—समीपं गत्वा, (सम्+उप+इ+ल्यप्)। जगाद—उवाच (गद+लिट्-णल्)। अस्मि—अहम् (अव्य०)। आगतः,—उपस्थितः, (आ+गम+कर्त्तरि क्तः)। करवाणि—अनुतिष्ठामि, (कृ+सम्प्रश्ने लोट्-निप्) वद—ब्रूहि, (वद+प्रार्थनायां लोट्-हि)।

(थ) प्रोवाच—बभाषे (प्र+वच्+लिट्-णल् "लिटि अभ्यासस्योभयेषाम्" (६।१।१७ पा०) इति अभ्यासस्य सम्प्रसारणम्)। प्रसादः,—अनुग्रहः (प्र+सद+भावे घञ्), ते—त्वया ("कृत्यानां कर्त्तरि वा" (२।३।७१ पा०) इति कर्त्तरि षष्ठी)। कर्त्तव्यः,—सम्पादयितव्य इत्यर्थः (कृ+कर्म्मणि तव्य)। एकाकी—असहायः, सहचररहितः इत्यर्थः, (विण०) विदूरे—बहुदूरे (दूरार्थे ७ मी), स्थितमिति शेषः। शिंशपातरुं—"शिशु" इति नाम्ना ख्यातं वृक्षं, द्रक्ष्यसि—द्रक्ष्यसि (दृश्+लृट्-स्यसि)। प्रलम्बितः,—प्रकर्षेण लम्बमानतया अवस्थापितः (प्र+लबि+कर्म्मणि क्तः)। इह—अस्मिन् स्थाने (अव्य०), आनीय—प्रापय्य (आ+नी+ल्यप्)। कुरु—सम्पादय (कृ+प्रार्थनायां लोट्-हि)।

(द) उक्त्वा—कथयित्वा [वच+क्त्वा "वचिस्वपियजादीनां किति" (६।१।१५ पा०) इति वचेः सम्प्रसारणम्]। सत्यः,—तथ्यः, अवितथ इत्यर्थः, सङ्गरः,—प्रतिज्ञा यस्य सः (बहुव्रीहिः। "प्रतिज्ञाऽऽजिसंविदापत्सु सङ्गरः" इत्यमरः) दृढप्रतिज्ञः इत्यर्थः। आलम्ब्य—आश्रित्य, लक्ष्यीकृत्येत्यर्थः, (आ+लबि+ल्यप्) प्रययौ—गतवान् (प्र+या+लिट्-णल्)।

(ध) कथञ्चित्—गाढान्धकारतया अविज्ञातमार्गतया च अतिक्लेशेनेत्यर्थः (अव्य०)। श्मशानः,—शवाः शेरतेऽस्मिन् इति (श्मन्+शी+आनच् डिच्च) श्मशानं

लम्बमानं शवमेकमद्राक्षीत्। दृष्ट्वा तं तरुम् (न) आरुह्य छिन्नरज्जुं तं भूमौ अपातयत्। (प) पातितश्च सः अकस्मात् जीवित इव भृशं चक्रन्द। ततोऽसौ राजा (फ) अवरुह्य कृपया तज्जीविताकाङ्क्षी यावत् तस्य अङ्गानि परामृषत्, तावत् स शवः अट्टहासमकरोत्। ततः स राजा तं (ब) वेतालाधिष्ठितं मत्वा,—"कथं हससि ? एहि, गच्छावः"

—"श्मन्-शब्देन शवः प्रोक्तः शानं तत्स्थानमुच्यते" इतिनिरुक्तं शवदाहस्थानं तस्मिन् श्मशाने, स्थितः मार्गः,—पन्थाः (मध्यपदलोपिकर्मधा०) तेन श्मशानमार्गेण —पितृवनपथेन (करणे ३ या। "श्मशानं स्यात् पितृवनम्" इत्यमरः)। गच्छन् —चलन् (गम्+शतृ)। प्राप्य—लब्ध्वा (प्र+आप्+ल्यप्), तदुपरि—तस्योपरि (उपश्लेषे ७ मी), लम्बमानं—लम्बितभावेन स्थितं (लम्बि+शानच्), शवं—मृतदेहम्, अद्राक्षीत्—ऐक्षिष्ट (दृश्+लुङ्-द)।

(न) आरुह्य—उत्थाय, आरोहणं कृत्वेत्यर्थः, छिन्ना—त्रुटिता, रज्जुः,—बन्धनतन्तुः यस्य तं छिन्नरज्जुं (बहुव्री०)। भूमौ—पृथिव्याम् (उपश्लेषे ७मी), अपातयत् —अक्षिपत् (पत+णिच्+लङ्-द)।

(प) पातितः,—निक्षिप्तः, (विण०। पत+णिच्+क्तः) राज्ञा इति शेषः। सः,—शवः, अकस्मात्—सहसा, (अव्य०) जीवितः,—जीवनवान् (जीव+भावे क्तः)। भृशम्—अत्यर्थम्, (अव्य०) चक्रन्द—रुरोद (क्रन्द+लिट्-णल्)।

(फ) अवरुह्य—अवतीर्य्य, (अव+रुह+ल्यप्) कृपया—दयया (इत्थं तृया), तस्य—शवस्य, जीवितं—जीवनम्, आकाङ्क्षते यः तादृशः तज्जीविताकाङ्क्षी—क्रन्दनश्रवणेन अधुनाऽप्ययं न मृतः इति मत्वा तस्य जीवनमभिलषन्नित्यर्थः, (विण०। आ+काङ्क्ष+कर्त्तरि णिनिः)। परामृषत्—अस्पृशत्, (परा+मृष+लङ्-द) "परामृशत्" इत्यपि भवितुमर्हति। अट्टहासम्—अट्टेन—अत्यर्थं यथा तथा, अतिशयेन इत्यर्थः, ("अत्यर्थगर्हयोरट्टः" इति शाश्वतः) हासः,—हास्यं (३या तत्पु०) तम्, उच्चहासम्, अकरोत्—कृतवान् (कृ+लङ्-द)।

(ब) वेतालेति।—वेतालेन—भूतविशेषेण, अधिष्ठितम्—आविष्टं (३या तत्पु०। अधि+स्था+क्तः) वेतालाधिष्ठित—भूताविष्टं (विण०), मत्वा—विविच्य (मन+क्त्वा "अनुदात्तोपदेश—" (६।४।३७ पा०) इति अनुनासिकलोपः)। एहि—आगच्छ (आ+इ+प्रार्थनायां लोट्-हि), गच्छावः,—यावः (गम+

इति निर्भयं यावत् ब्रवीति, तावत् तं वेतालं न भूमौ समवैक्षत, ऐक्षत च तस्यैव तरोरुपरि यथापूर्वं लम्बमानम्। ततो (भ) भूयोऽपि तरुमारुह्य स राजा यत्नतः तं शवमवारोहयत्; वीराणां चित्तं वज्रादपि अखण्डितम् अकम्प्यम्। ततः तं वेतालाधिष्ठितं शवं स्कन्धम् (म) आरोप्य मौनेन गन्तुम् उपचक्रमे। (य) यान्तञ्च शवाधिष्ठितो वेतालस्तं राजानमब्रवीत्,—"राजन्! अध्वविनोदाय कथामाख्यामि, शृणु।—

लट्-वस्), आवामिति शेषः। निर्भयं—निः,—नास्ति, भयं—त्रासः यस्मिन् कर्म्मणि तद् यथा तथा (क्रिया विश०), ब्रवीति—कथयति (ब्रू+लट्-तिप्)। वेतालं—भूताधिष्ठितशवविशेषम्। समवैक्षत—समपश्यत (सम्+अव+ईक्ष+लङ्-त)। यथापूर्वं—पूर्वमनतिक्रम्य (अनतिक्रमे अव्ययी०), पूर्व्ववदित्यर्थः।

(भ) भूयः,—पुनः (अव्य०)। यत्नतः,—यत्नमाश्रित्य, (ल्यब्लोपे पञ्चमी) निर्बन्धातिशयपूर्वकमित्यर्थः। अवारोहयत्—अवातारयत्, (अव+रुह+णिच्+लङ्-द्)। वीराणां—शूराणां (शेषे ६ष्ठी), चित्तं—मनः (वि०। कर्त्तृ), वज्रादपि—कुलिशादपि, वज्रं दृष्ट्वाऽपीत्यर्थः (ल्यब्लोपे पञ्चमी), अखण्डितं—न खण्डितं, न भग्नमित्यर्थः, न भयेन विदलितमिति यावत्, (विश०। नञ् तत्पु०। न+खण्ड+कर्म्मणि क्तः) अकम्प्यं—कम्पनानर्हम्, अचञ्चलमित्यर्थः (विश०। न+कम्प+कर्म्मणि यत्), न कम्पितं भवतीति यावत्।

(म) आरोप्य—उत्थाप्य (आ+रुह+णिच्+ल्यप्), मौनेन—किमप्यनाभाष्य, तूष्णीभूतेन सता इत्यर्थः, (उपलक्षणे ३या। "अथ मौनमभाषणम्" इत्यमरः) गन्तुं—गमनाय (गम+भावे तुमुन्), उपचक्रमे—आरेभे (उप+क्रम+लिट्-ए "प्रोपाभ्यां समर्थाभ्याम्" (१।३।४२ पा०) इत्यात्मनेपदम्)।

(य) यान्तं—गच्छन्तं (विश०। या+शतृ+२या १ वचनम्)। शवाधिष्ठितः,—शवं—मृतदेहम्, अधिष्ठितः,—आश्रितः [२या तत्पु०] अध्वविनोदाय—अध्वनि—मार्गे, विनोदाय—श्रमापनोदनाय इत्यर्थः, पथि श्रमपरिहारं कर्त्तुं ["क्रियार्थोपपदस्य कर्म्मणि स्थानिनः" (२।३।१४ पा०) इति तुमुनः कर्म्मणि ४र्थी]। कथा—रचितं प्रबन्धविशेषं, ("प्रबन्धकल्पना कथा" इत्यमरः। "प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः" इति कोलाहलाचार्य्यः) किञ्चित् सत्यघटनासंवलित-

# अथ प्रथमकथा।

"अस्ति (क) वाराणसी नाम शङ्करवसतिः पुरी, या कैलासस्य स्थलीव पुण्यजनसेविता, हारयष्टिरिव यस्याः स्वर्गतरङ्गिणी विभाति। तस्यां (ख) प्रतापानलनिर्दग्धविपक्षकुलकाननः प्रतापमुकुटो नाम नृपतिः प्रतिवसति स्म। तस्य

---

प्रबन्धविशेषमित्यर्थः, आख्यामि—कथयामि (आ+ख्या+लट्-मिप्)। शृणु—आकर्णय (श्रु+लोट्-हि)।

---

(क) वाराणसी—काशी। शङ्करवसतिः,—शङ्करस्य—शिवस्य, वसतिः,—निकेतनं, गृहमित्यर्थः, ("वसतिः स्यात् स्त्रियां वासे यामिन्याञ्च निकेतने" इति मेदिनी)। कैलासस्य—तदाख्यपर्व्वतस्य, स्थलीव—अकृत्रिमभूभाग इव, पुण्यजनसेविता—पुण्यजनेन—सज्जनेन, सुकृतिशालिजनेन इति यावत्, अन्यत्र कैलासपक्षे—यक्षगणेन, ("अथ पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च" इति मेदिनी) सेविता—आराधिता, आश्रिता च (सेव+कर्म्मणि क्तः)। हारयष्टिः,—हारगुच्छ इव, [उपमा] यस्याः,—वाराणस्याः (शेषे ६ ष्ठी), स्वर्गतरङ्गिणी—स्वर्गात्—सुरलोकात् अवतीर्णा तरङ्गिणी—नदी, (मध्यपदलोपिकर्मधा०) गङ्गा इत्यर्थः, विष्णुपदप्रसूतायाः तस्याः सुरलोकादवतीर्णत्वात्। स्वर्गस्य तरङ्गिणी इति वा (६ ष्ठी समासः), तस्याः सुरनिम्नगात्वात्। विभाति—राजते (वि+भा+लट्-तिप्)।

(ख) प्रतापेति।—प्रतापः,—कोषदण्डजं तेजः ("स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमरः), अनलः,—अग्निरिव, (उपमितिसमासः) तेन निर्दग्धानि—निःशेषेण भस्मीकृतानि, (निर्+दह+कर्म्मणि क्तः) विपक्षकुलानि—अरिसमूहाः, काननानीव—वनानीव (उपमितिसमासः) येन सः (बहुव्री०), प्रतापमुकुटः,—प्रताप एव मुकुटः प्रतापभूषितः वा मुकुटः,—शिरोभूषणं

स्य (ग) वज्रमुकुटो नाम तनयः आरस्य च जनस्य च रूप-शौर्य्ययोर्दर्पदलन आसीत्। तस्य राजपुत्रस्य सखा (घ) महामतिः मन्त्रिपुत्रः कश्चिदास्त। कदाचित् स नृपात्मजः तेन (ङ) सख्या सह क्रीड़न् मृगयाप्रसङ्गेन अतिदूरमध्वानं जगाम। स (च) तत्र सिंहानां मस्तकानां सटाजालानि शौर्य्यश्रीचामराणीव शनैश्छिन्दन् महावनमेकमाससाद। तत्र

---

यस्य सः (बहुव्रीहिः), शौर्य्यबलेनैव स्वमुकुटरत्नतया तथाविधाख्यया प्रथितः इत्यर्थः। प्रतिवसति स्म—उवास [प्रति+वस+लट्-तिप् "लट् स्मे" (३।२।११८ पा०) इति स्मयोगे भूते लट्]।

(ग) वज्रमुकुटः,—वज्रयुक्तः,—हीरकमण्डितः इति यावत्, मुकुटः यस्य साहृशः। आरस्य—कामस्य (शेषे ६ष्ठी)। रूपशौर्य्ययोः,—रूपं—सौन्दर्य्यं, शौर्य्यं—पराक्रमश्च (द्वन्द्वः) तयोः, दर्पः,—अहङ्कारः, तस्य दलनः,—खण्डकः, नाशकः इत्यर्थः, (६ष्ठी तत्पु०) दर्पं दालयति—विदारयति इति वा (नन्द्यादित्वात् ल्यु) रूपेण आरस्य शौर्य्येण जनस्य च दर्पदलन इत्यर्थः, सर्वाधिकरूपवान् निरतिशय-शौर्य्यवांश्च इति समुदितार्थः।

(घ) महामतिः,—महती—उदारा, मतिः,—बुद्धिः यस्य सः [बहुव्री०। "पुंवत् कर्मधारयजातीयदेशीयेषु" (६।३।४२ पा०) इति पुंवद्भावे कृते "आन्महतः समानाधिकरणजातीययोः" (६।३।४६ पा०) इति महतस्तकारस्याकारः]। आस—आसीत् (आस+लङ्-त)।

(ङ) सख्या—मित्रेण, मन्त्रिपुत्रेण इति यावत् (सहयोगे ३या) क्रीड़न्—खेलन् (क्रीड़+शतृ)। मृगया—आखेटः, मृगवधफलकः व्यापारः इति यावत्, तस्याः प्रसङ्गः,—अभ्यासः (६ष्ठी तत्पु०) तेन, मृगयायां प्रसङ्गः,—आसक्तिर्वा (७मी तत्पु०) तेन मृगयाप्रसङ्गेन—मृगयाभ्यासेन मृगयासक्त्या वा। अध्वानं—मार्गं, जगाम—ययौ (गम+लिट्-णल्)।

(च) तत्र—अध्वनि (उपश्लेषे ७मी)। सटाजालानि—केशरसमूहान् (६ष्ठी तत्पु० "सटा जटाकेशरयोः" इति मेदिनी)। शौर्य्येति।—शौर्य्यश्रीः,—शौर्य्यमेव श्रीः सुन्दररूपा सम्पत् इत्यर्थः, (रूपककर्मधा०) शौर्य्येण लब्धा वा श्रीः,—सम्पद्विभूतिर्वा (३या तत्पु०) तस्याः चामराणि—वालव्यजनानि इव, पराक्रमलब्धायाः शोभायाः चामराणीवेत्यर्थः, शनैः,—मन्दं मन्दम्, अनायासेनेत्यर्थः, एतेन तस्य

सरोवरमेकं दृष्ट्वा (झ) श्रान्तः स तेन सुहृदा मन्त्रिपुत्रेण तज्जलं पीत्वा प्रक्षालितकरचरणः कस्यापि तीरतरोर्मूले समुपाविशत्।

(ञ) अत्रान्तरे काऽपि स्नानार्थमागता, दिव्याकृतिः, सुपरिच्छदा, पूरयन्तीव लावण्यनिर्झरेण सरोवरं, दृष्टिपातैः सृजन्तीव तत्रोत्पलवनानि, प्रत्यादिशन्तीव मुखेन जितेन्दुना

---

महावीर्यत्वं सूचितम्। छिन्दन्—कृन्तन् (छिद+शतृ)। आससाद—प्राप, (आ+सद+लिट्-णल्)।

(झ) श्रान्तः,—श्रमक्लिष्टः (विश०। श्रम+क्तः)। मन्त्रिपुत्रेण (सहार्थे तृतीया)। करौ च चरणौ च तेषां समाहारः करचरणं (प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः), प्रक्षालितं—विधौतं, करचरणं—हस्तपादं येन तथाभूतः प्रक्षालितकरचरणः,—विधौतपाणिपादः, हस्तपादं प्रक्षाल्येत्यर्थः। तीरतरोः,—तीरे—पुष्करिणीतटे, यः तरुः तस्य (शेषे षष्ठी), मूले—मूलदेशे, (औपश्लेषिकाधिकरणे सप्तमी) समुपाविशत्—समुपविष्टवान् (सम्+उप+विश+लङ्-द)।

(ञ) अत्रान्तरे—अस्मिन्नवसरे, राजपुत्रस्य उपवेशनकाले इत्यर्थः (अव्य०)। स्नानार्थं—स्नानं कर्तुमित्यर्थः, (स्नानाय इदमिति नित्यसमासः)। दिव्या—दिवि—स्वर्गे भवा (दिव्-शब्दात् भवार्थे यत्प्रत्ययः) मनोहारिणीत्यर्थः, आकृतिर्यस्याः सा दिव्याकृतिः,—सुरूपा इत्यर्थः, (बहुव्री०। "दिव्यं लवङ्गे धात्र्यां स्त्री वन्द्यो दिवि भवे त्रिषु" इति मेदिनी)। सुपरिच्छदा—सु—शोभनः, परिच्छदः,—वस्त्रादिभूषणं यस्याः सा, सुवेशा इत्यर्थः (विश०)। पूरयन्तीव—परिपूर्णं कारयन्तीव (विश०। पूर+णिच्+शतृ+स्त्रियां ङीप्)। लावण्यम्—अङ्गप्रभाविशेषः, "मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तलक्षणः कान्तिविशेषः इति यावत्, तदेव निर्झरः,—वारिप्रवाहः ("उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः" इत्यमरः) तेन, (करणे तृतीया) निर्मलत्वादिति भावः। दृष्टिपातैः,—दृष्टेः,—चक्षुषः, ("दृष्टिर्ज्ञानेऽक्ष्णि दर्शने" इति हैमः) पाताः,—पतनानि दृष्टिपाताः (षष्ठी तत्पु०) तैः नेत्रविक्षेपैः, सृजन्तीव—रचयन्तीव, (सृज+शतृ+स्त्रियां ङीप्) तत्र—सरोवरे (अभिव्याप्तौ सप्तमी), उत्पलवनानि—इन्दीवरकाननानि, ("इन्दीवरे मांसशून्ये उत्पलं कुष्ठभूरुहे" इति रभसः) इन्दीवरशोभनायताक्ष्याः दृष्टिसम्पातेन सर्वत्र उत्पल-

अम्बुजानि, कन्यका तेन ददृशे। (झ) दृष्टैव सा तस्य राजपुत्रस्य मनो जहार तत्क्षणम्। सोऽपि (ञ) राजसूनुस्तस्या विलोचने अहार्षीत्।

सा तु कन्या तद्दर्शनेन (ट) सञ्जातविकारा लज्जया किमपि वक्तुमशक्नुवती हृद्गतमाकूतं सङ्केतेन बोधयन्ती एकमुत्पलं कर्णे गृहीत्वा, दन्तरचनां विधाय, पद्मं शिरसि कृत्वा

---

वनसञ्जनोत्प्रेक्षा इति बोद्धव्यम्। प्रत्यादिशन्तीव—प्रत्याख्यान्तीव, दूरीकुर्वन्तीवेत्यर्थः, (प्रति+आ+दिश+शतृ+स्त्रियां ङीप्) मुखेन (करणे ३या)। जितः,—सौन्दर्य्येण पराजितः, अधरीकृत इत्यर्थः, इन्दुः,—चन्द्रः येन तादृशेन (विश०। बहुव्री०)। जितेन्दुना—चन्द्रविजयिना, अम्बुजानि—पद्मानि, मुखसुषमया अधरीकृतचन्द्रपद्मा इति समुदिताथः। तेन—राजपुत्रेण (कर्तरि ३या), ददृशे—दृष्टा (दृश+कर्म्मणि लिट्-ए)।

(झ) दृष्टैव—अवलोकितैव (दृश्+कर्म्मणि क्तः+स्त्रियां टाप्), राजपुत्रेणेति शेषः। राजपुत्रस्य (शेषे षष्ठी)। जहार—चोरयामास (हृ+लिट् णल्)। स एव क्षणो यस्मिन् तत्क्षणं—दर्शनमात्रमेव, दर्शनसमकालमेव, न तु किञ्चित् विलम्बमित्यर्थः, (क्रिया विश०)।

(ञ) राज्ञः सूनुः राजसूनुः,—राजकुमारः (६ष्ठी तत्पु०)। विलोचने—नयने (कर्म०), अहार्षीत्—अचूचुरत् (हृ+लुङ्-द्), सा कन्यका राजपुत्रं दृष्ट्वा तत्सौन्दर्य्यगुणविमुग्धा सत्येव स्वलोचने अन्यतो व्यापारयितुं न शशाक परन्तु तदाकृष्टहृदया तमेव अनिमेषलोचनं ददर्श इत्यर्थः।

(ट) सञ्जातः,—समुत्पन्नः, विकारः,—अन्यथाभावः, स्मरावेशजनिता मनसो विक्रिया इत्यर्थः यस्याः सा सञ्जातविकारा—आविर्भूतकामावेशा (बहुव्री०), लज्जया (हेतौ ३या), वक्तुं—कथयितुं, (वच्+तुमुन्) अशक्नुवती—अपारयन्ती [विश०। न+शक+शतृ+"स्वादिभ्यः श्नुः" (३।१।७३ पा०) इति श्नुः, स्त्रियां ङीप्]। आकूतम्—अभिप्रायं, सङ्केतेन—इङ्गितेन, हस्तनेत्रादीनां चेष्टाविशेषेणेत्यर्थः, (करणे ३या) बोधयन्ती—ज्ञापयन्ती (विश०। बुध+णिच्+शतृ+स्त्रियां ङीप्)। गृहीत्वा—धृत्वा इत्यर्थः (ग्रह+क्त्वा "ग्रहिज्यावयि—" (६।१।१६ पा०) इति सम्प्रसारणम्)। दन्तस्य रचना (६ष्ठी तत्पु०) तां दन्तरचना—दन्तनिर्माणं, दन्तविन्यासविशेषमित्यर्थः, उत्पलेनेति शेषः, विधाय—कृत्वा (वि+धा+ल्यप्)।

हृदये करमदात्। राजपुत्रस्तु तस्यास्तां (ठ) संज्ञां न विवेद, मन्त्रिपुत्र एव केवलं बुद्धिमान् सर्वं बुबुधे। (ड) क्षणेन च सा कन्या अनुगैर्नीयमाना प्रययौ; गत्वा च स्वं गृहं पर्य्यङ्क-निषण्णा तस्थौ। चित्तन्तु तस्यास्तस्मिन् (ढ) नृपात्मजे एव स्थितम्। सोऽपि राजसुतः (ण) कष्टेण स्वनगरीं गत्वा तया विना नितरां व्यथितो दिने दिने कृशतामवाप।

---

कृत्वा—स्थापयित्वा इत्यर्थः (कृ+क्त्वा)। अदात्—अस्थापयदित्यर्थः [दा+लुङ्-द् "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]।

(ठ) संज्ञा—हस्तनेत्रादिभिरर्थसूचना, सङ्केतमिति यावत, ("संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः) विवेद—बुबुधे (विद+लिट्-णल्)। प्रशस्ता बुद्धिरस्यास्य इति बुद्धिमान् (प्रशंसायां मतुप्) ज्ञानवानित्यर्थः। बुबुधे—जज्ञौ, ज्ञातवानित्यर्थः, (बुध+लिट्-ए)।

(ड) क्षणेन—अचिरेण कालेन (प्रकृत्यादिभ्यः तृतीया)। अनु—पश्चात, गच्छन्तीति अनुगाः (अनु+गम—"अन्यत्रापि दृश्यते इति वक्तव्यम्" (वा०) इति डः), तैः अनुगैः,—अनुचरैः, भृत्यादिभिरिति यावत, नीयमाना—प्राप्यमाणा (विण०। नी+कर्म्मणि शानच्+स्त्रियां टाप्), प्रययौ—जगाम [प्र+या+लिट्-णल् "आत औ णलः" (७।१।३४ पा०) इति औ], गृहमिति शेषः। गत्वा—यात्वा, [गम+क्त्वा "अनुदात्तोपदेश—" (६।४।३७ पा०) इत्यनुनासिक-लोपः]। पर्य्यङ्के—खट्वायां, निषण्णा—आसीना, [७मी तत्पु०। नि+सद+क्तः "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" (८।२।४२ पा०) इति निष्ठातस्य सदो दकारस्य च नः, स्त्रियां टाप् च]। तस्थौ—स्थितवती [स्था+लिट्-णल् "आत औ णलः" (७।१।३४ पा०) इति औः]।

(ढ) नृपात्मजे (अधिकरणे ७मी)। स्थित—तस्थौ [स्था+कर्त्तरि क्तः "स्थाघ्वोरिच्च" (१।२।१७ पा०) इति इदादेशे "आतो लोप इटि च" (६।४।६४ पा०) इति आतो लोपः]।

(ण) कष्टेण—क्लेशेन, [प्रकृत्यादिभ्य उपसङ्ख्यानम्" (वा०) इति तृतीया] तया—कुमार्य्या (विनार्थयोगे ३या)। नितराम्—अतिशयेन (क्रियाविशेषणम्। अव्य०), व्यथितः,—पीडितः [व्यथ+कर्त्तरि क्तः; यद्वा—व्यथा सञ्जाता अस्य इति "तदस्य सञ्जातं तारकादिभ्य इतच्" (५।२।३६ पा०) इति इतच्], दुःखितः इत्यर्थः,

दृष्ट्वा च (त) तत् मन्त्रिपुत्रेण तेन रहसि तामदुष्प्रापां शंसता समाश्वासितस्त्यक्तधैर्य्यः प्रोवाच,—"सखे! यस्या नाम न, ग्रामो न, अन्वयश्च नावबुध्यते, सा कथं प्राप्यते? तन्मृषा मां किमाश्वासयसि?"। इति राजपुत्रेण (थ) उक्तो मन्त्रिपुत्रस्तमभ्यधात्,—"देव! किं न दृष्टं त्वया यत् यत् तया संज्ञया सूचितम्? यत्तया कर्णे उत्पलं न्यस्तं, तेन एतत् सूचितं,—कर्णोत्पलस्य राज्ञः राष्ट्रे अहं निवसामीति। कृता च या दन्तरचना, तया एतत् सूचितं,—यथाऽहं तत्र (द) दन्तघाटकस्य कन्येति।

दिने दिने—प्रतिदिनं (कालाधिकरणे ७मी। वीप्सायां द्विर्वचनम्)। अवाप—लेभे (अव+आप्+लिट्-णल्)।

(त) तत्—राजपुत्रस्य कार्य्यम्। रहसि—निर्जने (अधिकरणे ७मी), अदुष्प्रापाम—अदुर्लभां, सुलभामित्यर्थः, (न+दुर्+प्र+आप्+कर्म्मणि खल्+स्त्रियां टाप्)। शंसता—कथयता (विण० शंस+शतृ)। समाश्वासितः,—सान्त्वितः [विण०। सम+आ+श्वस+णिच्+कर्म्मणि क्तः], राजपुत्र इति शेषः। त्यक्तम्—उज्झितं, धैर्य्यं—धीरत्वं येन सः त्यक्तधैर्य्यः,—धैर्य्यहीनः, व्याकुलः सन् इत्यर्थः। अन्वयः,—कुलं, यस्मिन् वंशे इयं समजनि, स वंशः इत्यर्थः ("सन्ततिर्गोत्रजनन-कुलान्यभिजनान्वयौ" इत्यमरः)। नावबुध्यते—न परिज्ञायते (अव+बुध+कर्म्मणि लट्-ते), अस्माभिरिति शेषः। प्राप्यते—लभ्यते (प्र+आप्+कर्म्मणि लट्-ते)। मृषा—मिथ्या (अव्य०। "मृषा मिथ्या च वितथे" इत्यमरः)। आश्वासयसि?—सान्त्वयसि? (आ+श्वस+णिच्+लट्-सिप्)।

(थ) उक्तः,—अभिहितः [वच्+कर्म्मणि क्तः "वचिस्वपियजादीनां किति" (६।१।१५ पा०) इति सम्प्रसारणम्]। अभ्यधात्—अवोचत [अभि+धा+लुङ्-द "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]। संज्ञया—हस्तनेत्रादिविकारेण, सङ्केतेनेति यावत्, सूचितं—ज्ञापितं (सूच+कर्म्मणि क्तः)। न्यस्तं—स्थापितं [नि+अस्+कर्म्मणि क्तः "यस्य विभाषा" (७।२।१५ पा०) इति इटप्रतिषेधः]। राष्ट्रे—विषये, अधिकृते देशे इत्यर्थः, (उपश्लेषे ७मी। "विषयोत्पातयो राष्ट्रम्" इति शाश्वतः)। निवसामि—अवतिष्ठे (नि+वस+लट्-मिप्)।

(द) दन्तान् घटयति—रचयति योजयति वा इति दन्तघाटकः (दन्त+

शिरसि पद्मं धृत्वा एतत् (ध) सङ्केतितं,—यथाऽहं नाम्ना पद्मावतीति। (न) हृदयार्पितहस्तया च तया,—त्वयि मे प्राणाः स्थिता इति सङ्केतितम्। अस्ति च कलिङ्गदेशे कर्णोत्पलो नाम नृपः। तस्य (प) चित्तप्रसादकः महासम्र्द्धिमान् दन्तघाटकः सङ्ग्रामवर्द्धनो नाम प्रतिवसति, तस्य कन्यारत्नमियं पद्मावती नाम प्राणाधिकप्रियम्, एतत् लोकमुखात् मया विदितम्। तस्मात् मया तस्याः (फ) देशादिसङ्गिनी संज्ञा ज्ञाता।" इति तेन मन्त्रिपुत्रेणोक्तो राजपुत्रः (ब) तस्मै सुधिये तुतोष, जहर्ष च लब्धोपायः।

घट+कर्त्तरि ण्वुल्) तस्य दन्तघाटकस्य—कृत्रिमदन्तनिर्मातुः शिल्पिनस्तया चलदन्तान योजयितव्यो इत्यर्थः।

(ध) सङ्केतितं—संज्ञापितं (सम्+कित+णिच्+कर्मणि क्तः)। नाम्ना—नामधेयेन ["प्रकृत्यादिभ्य उपसंख्यानम्" (वा०) इति इया]।

(न) हृदये—वक्षसि, अर्पितौ—स्थापितौ, हस्तौ—करौ यया तया हृदयार्पितहस्तया (बहुव्री०) वक्षःस्थलार्पितपाणिकया। त्वयि (अधिकरणे ७मी)। मे (शेषे ६ष्ठी)। प्राणाः,—असवः (नित्यबहुवचनम्। "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः)।

(प) चित्तं—मनः, प्रसादयति—रञ्जयति यः सः (चित्त+प्र+सद+कर्त्तरि ण्वुल्) चित्तप्रसादकः,—मनोरञ्जकः, दन्तघटनादिनेति भावः। महती सम्र्द्धिः,—सम्पत् ["पुंवत् कर्मधारयजातीयदेशीयेषु" (६।३।४२ पा०) इति पुंवद्भावे कृते "आन्महतः समानाधिकरणजातीययोः" (६।३।४६ पा०) इति तकारस्याकारः] सा अस्य अस्तीति महासम्र्द्धिमान्—प्रभूतैश्वर्य्यशाली (अस्त्यर्थे मतुप्)। कन्या रत्नमिव कन्यारत्नं—सुरूपा कन्येत्यर्थः (उपमितिसमासः। "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" इति मेदिनी)। प्राणेभ्यः अधिकप्रियम्—अतिशयेन प्रीत्यास्पदं (पञ्चमी तत्पु०) प्राणाधिकप्रियं (कन्यारत्नमित्यस्य विशेषणम्)। लोकमुखात्—लोकानां मुखं तस्मात् (६ष्ठी तत्पु०। अपादाने ५मी), विदितं—ज्ञातम्। (विद+कर्मणि क्तः)।

(फ) देशादेः सङ्गः (६ष्ठी तत्पु०) सः अस्त्यस्यामिति (अस्त्यर्थे इनिः, स्त्रियामीप्) देशादिसङ्गिनी—देशनामादिसम्बन्धिनीत्यर्थः (विश०)। संज्ञा—नाम।

(ब) तस्मै—मन्त्रिपुत्राय ["क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" (वा०)

अथ स तेन (भ) मन्त्रिपुत्रेण सम्मन्त्र्य प्रियाऽर्थी पुनर्मृगया-व्याजेन तत् सरोऽगमत्। (म) अर्द्धमार्गे च वाताश्ववेगात् सैनिकान् पार्श्वचरानतीत्य तेनैव मन्त्रिपुत्रेण युतः कलिङ्गाभिमुखं ययौ। प्राप्य तन्नगरं कर्णोत्पलनृपतेः, (य) अन्विष्य च दन्तघाटकस्य भवनं, दृष्ट्वा च तद्दूरे, वासार्थं कस्याश्चित् वृद्धाया योषितो गृहं तौ राजपुत्रमन्त्रिपुत्रौ प्राविशताम्।

---

इति सम्प्रदाने ४र्थी]। (ध्यायत्यनया इत्यर्थे ध्यै+करणे क्विपि धीशब्दः सिद्धः) सुधिये—सु—शोभना, धीः,—बुद्धिर्यस्य तस्मै (बहुव्री०)। तुतोष—पिप्रिये (तुष+लिट् णल्)। जहर्ष—मुमुदे (हृष+लिट्-णल्)। लब्धः,—प्राप्तः, ज्ञात इत्यर्थः, उपायः,—साधनं, तस्याः प्राप्तौ पन्था इति यावत्, येन सः लब्धोपायः,—विदित-परिचय इत्यर्थः (विण०। बहुव्री०)।

(भ) मन्त्रिपुत्रेण (सहार्थे ३या), सम्मन्त्र्य—मन्त्रयित्वा, रहसि अन्योऽन्य-मालप्य कर्त्तव्यार्थावधारणां कृत्वा इत्यर्थः (सम्+मन्त्र+ल्यप्), प्रियाम् अर्थयते—आकाङ्क्षते यः सः प्रियार्थी—प्रियाभिलाषी सन् (प्रिय+अर्थ+ग्रहादित्वात् णिनिः। अर्थयते इति अर्थी, प्रियाया अर्थी प्रियाऽर्थी इति वा विग्रहः)। मृगयायाः व्याजः,—छलं (६ष्ठी तत्पु०) तेन मृगयाव्याजेन—मृगयायां यामीति छलं कृत्वेत्यर्थः, [ "प्रकृत्यादिभ्यः उपसङ्ख्यानम्" (वा०) इति ३या ]। अगमत्—अगात् (गम+लुङ्-द)।

(म) अर्द्धं मार्गस्य—पथः अर्द्धमार्गः (एकदेशि तत्पु०) तस्मिन् अर्द्धमार्गे—अर्द्धपथे। वाताश्ववेगात्—वात इव अश्वः, (उपमितिसमासः) वायोरिवास्य शीघ्रगत्यादिमत्त्वादिति भावः, वाताश्वः,—अश्वोत्तमः, शीघ्रगामी घोटक इत्यर्थः, तस्य वेगात्—गतिवेगादित्यर्थः (६ष्ठी तत्पु०। हेत्वर्थे ५मी), पार्श्वे चरन्ति—गच्छन्ति पार्श्वचराः, [ पार्श्व+चर—"चरेष्टः" (३।२।१६ पा०) इति कर्त्तरि टः ] तान् पार्श्वचरान्—पार्श्वस्थान् (विण०), अतीत्य—अतिक्रम्य [ अति+इ+ल्यप् "ह्रस्वस्य पिति कृति तुक्" (६।१।१७ पा०) इति तुक् ]। युतः,—मिलितः (यु+क्तः), कलिङ्गाभिमुखं (क्रिया विण०) कलिङ्गस्य—तदाख्यदेशस्य, अभिमुखो भवति यस्मिन् कर्म्मणि तद्यथा स्यात् तथा (बहुव्री०। क्रिया विण०)।

(य) अन्विष्य—अनुसन्धाय (अनु+इष+ल्यप्)। तत्—दन्तघाटकभवन-मित्यर्थः। वासाय इदं वासार्थं—वासनिमित्तं (नित्यसमासः), योषितः,—स्त्रियाः (शेषे ६ष्ठी)। प्राविशतां—प्रविष्टवन्तौ (प्र+विश+लङ्-ताम्)।

तत्र च (र) वाहौ यवससलिलैः पूरयित्वा गुप्तमवस्थाप्य मन्त्रिपुत्रः तां वृद्धामपृच्छत्,—"वृद्धे ! कच्चित् अस्मिन् नगरे कमपि दन्तघाटकनामानं वेत्सि ?"। तदाकर्ण्य सा (ल) जरती सादरं तमभाषत,—"वत्स ! सुष्ठु वेद्मि, तस्याहं धात्री अस्मि, तेनैवाहं अस्यावत्याः स्वदुहितुः पार्श्वे स्थापिता ; किन्तु अहं तत्राधुना अपहृताम्बरा न गच्छामि, जातु कुपुत्रः कितवो मे

(र) वाहौ—अश्वौ, ("वाहो भुजे पुमान् मानभेदाश्ववृषवायुषु" इति मेदिनी)। यवसानि च—घासानि च ("घासो यवसम्" इत्यमरः) सलिलानि च तैः यवससलिलैः,—प्रभूतघासजलैः, पूरयित्वा—सन्तर्प्य, उदरपूर्त्तिं यावत् भोजयित्वा इत्यर्थः, (पूर+णिच्-क्त्वा) गुप्तं—गूढ़, निभृतमित्यर्थः, सुरक्षितं वा, (क्रिया-विश०। गुप+क्तः। "गुप्त स्यात् रक्षिते गूढ़े" इति मेदिनी)। अवस्थाप्य—निधाय [अव+स्था+णिच्-ल्यप्]। अपृच्छत्—अजिज्ञासत [प्रच्छ+लङ्-द "ग्रहिज्यावयि—" (६।१।१६ पा०) इति सम्प्रसारणम्]। कच्चित्—प्रश्नसूचकमव्ययं ("कच्चित् कामप्रवेदने। प्रश्ने हर्षे मङ्गले च" इति मेदिनी। कामप्रवेदने इष्टप्रश्ने इत्यर्थः)। वेत्सि ?—जानासि ? (विद+लट्-सिप्)।

(ल) जरती—वृद्धा (जॄ+शतृ+स्त्रियामीप्)। सादरम्—आदरेण सह वर्त्तमानं (क्रिया विश०। ३या तत्पु०)। अभाषत—अब्रवीत् (भाष+लङ्-त)। सुष्ठु—सम्यक्, विशेषेणेत्यर्थः (अव्य०। क्रियाविश०), वेद्मि—जानामि (विद+लट्-मिप्)। तस्य—दन्तघाटकस्य, धात्री—उपमाता, पालनकर्त्री इति यावत् ("धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि" इत्यमरः), अस्मि—भवामि (अस्+लट्-मिप्)। स्थापिता—नियोजिता, रक्षयितृत्वेनेति यावत् (स्था+णिच्+कर्म्मणि क्तः+स्त्रियां टाप्)। अपहृतं—बलपूर्वकं गृहीतम्, अम्बरं—वस्त्रम्, एकदा द्यूतकारकेण स्वपुत्रेणेति शेषः, यस्याः तादृशी अपहृताम्बरा—बलाद्गृहीतवस्त्रा (बहुव्री०), गच्छामि—यामि (गम+लट्-मिप्), यथा हि प्रायशः कुट्टिन्यः प्राभृतकग्रहणार्थं विटजनमेवमाभाषन्ते यत् मे सुयोग्यं वसनं नास्ति, यत् परिधायाहं यामीति, एतद्वचनमपि तथाविधाभिप्रायकमेवेति ज्ञेयम्। जातु—कदाचित् ("कदाचिज्जातु" इत्यमरः), कुपुत्रः,—कुत्सितः सुतः, तस्य द्यूताद्यासक्तत्वादिति भावः। कितवः,—धूर्त्तः, द्यूताद्यासक्तः इत्यर्थः, ("धूर्त्तोऽक्षदेवी कितवोऽक्षधूर्त्तो द्यूतकृत् समाः" इत्यमरः); एकदा द्यूतक्रीडायै द्यूतकारकेण कुपुत्रेण मे वस्त्रमपहृतम्, इदानीमपि

वस्त्रं दृष्ट्वैव सद्यः हरेत्" इति। एवमुक्तवतीं तां हृष्टः मन्त्रि-पुत्रः (ब) स्वोत्तरीयादिदानेन सन्तोष्य पुनरब्रवीत्,—"मातः! त्वम् आवाभ्यां यद् यत् कथ्यते, तत्तत् सुगुप्तं कुरुष्व; तां दन्तघाटसुतां पद्मावतीं गत्वा वद,—'यस्त्वया सरसीतटे राजपुत्रो दृष्टः, सोऽत्र आगतः, तेनार्थिताऽहं त्वदन्तिकं प्रणयादायाता' इति"।

तदाकर्ण्य सा वृद्धा (श) दानवशीकृता तदैव पद्मावती-पार्श्वं गत्वा अवसरं प्राप्य तां जगाद,—"वत्से! तौ राजसुत-मन्त्रिसुतौ त्वत्प्राप्तये अत्र समागतौ, साम्प्रतं करणीयमादिश"।

---

न यदि मां दृष्टा वस्त्रं हरेत् अतो न गच्छामीति तद्भार्या ताभ्यां वस्त्रादानार्थं चातुर्य्यवचनम्। हरेत्—मुष्णीयात् (हृ+आत्मशब्दयोगे लिङ्-यात्)।

(ब) स्वोत्तरीयादिदानेन—स्वस्य—आत्मनः, उत्तरीयं—प्रावारः, ऊर्द्ध्वाच्छादन-वस्त्रमित्यर्थः, (६ष्ठी तत्पु०। "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा। संव्यानमुत्तरीयञ्च" इत्यमरः) तदादिदानेन—तत्प्रभृत्यर्पणेन (करणे ३या), सन्तोष्य—प्रह्लाद्य, (सम्+तुष+णिच्+ल्यप्)। कथ्यते—उच्यते, (कथ+णिच्+कर्म्मणि लट्-ते)। सुगुप्तं—सुगूढम्, अप्रकाशितं यथा तथा (क्रिया विश०), कुरुष्व—सम्पादय (कृ+प्रार्थनायां लोट्-स्व)। वद—ब्रूहि (वद+लोट्-हि)। तेन—राजपुत्रेण, अर्थिता—याचिता, त्वं पद्मावतीसकाशं गत्वा एवं वद इति प्रार्थिता इत्यर्थः, (विश०। अर्थ+कर्म्मणि क्तः+स्त्रियां टाप्)। तव—भवतः, अन्तिकं—समीपं त्वदन्तिकं—तव सकाशं, (६ष्ठी तत्पु०) प्रणयात्—प्रेम्णः, त्वयि स्नेहाधिक्यादित्यर्थः, याञ्चार्थं वा, (हेतौ ५मी०। "प्रणयः प्रश्रये प्रेम्णि याञ्चा-विस्रम्भयोरपि" इति मेदिनी)। आयाता—आगता, (आ+या+कर्त्तरि क्तः+स्त्रियां टाप्)।

(श) अवशा वशा कृता वशीकृता (वश+अभूततद्भावे च्विः+कृ+कर्म्मणि क्तः+स्त्रियां टाप्) दानेन वशीकृता—आयत्तीकृता, मन्त्रिपुत्रेणेति शेषः, (विश०। ३या तत्पु०)। अवसरम्—अवकाशं, स्वाभिप्रायाविष्करणक्षणमित्यर्थः। तौ—सरसीरे पूर्वदृष्टौ इत्यर्थः। तव—भवत्याः, प्राप्तये—लाभाय, त्वां लब्धुमित्यर्थः, ["तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति ४र्थी]। साम्प्रतम्—अधुना

(घ) इत्यभिहिता सा तां निर्भर्त्स्य पाणिभ्यां द्वाभ्यां कर्पूरलिप्ताभ्यां द्वयोः कपोलयोराहन्। ततः सा (ङ) परिभवार्त्ता रुदती गृहमागम्य तावभाषत,—"पुत्रौ! पश्यतं मुखे मे तया एता अङ्गुलिमुद्रा दत्ताः"। एवं तयोक्ते (च) नैराश्यविषण्णं तं राजसुतं स महाबुद्धिर्मन्त्रिसुतः जनान्तिकमवादीत्,—"सखे! मा विषादं गमः, मन्त्रं रक्षन्त्या तया निर्भर्त्स्य यत् कर्पूरशुभ्रा

---

(अव्य०। "एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः)। करणीय—कर्त्तव्यं, (कृ+कर्म्मणि अनीयर्), आदिश—आज्ञापय (आ+दिश+लोट्-हि)।

(घ) अभिहिता—उक्ता, (अभि+धा+क्तः "दधातेर्हिः" (७।४।४२ पा०) इति दधातेर्हिः स्त्रियां टाप् च)। निर्भर्त्स्य—तर्ज्जयित्वा, भर्त्सनां कृत्वेत्यर्थः, (निर्+भर्त्स+णिच्-ल्यप्)। कर्पूरेण लिप्तः,—मृष्टः ताभ्यां (३या तत्पु०) कर्पूरलिप्ताभ्यां—कर्पूराक्ताभ्यां, करद्वये कर्पूरं लिप्त्वा ताभ्यां कराभ्यामित्यर्थः, कपोलयोः,—गण्डयोः (अवच्छेदे ७मी), आहन्—अताडयत् (आ+हन+लङ् द)।

(ङ) परिभवेण—अवमाननेन, ("अनादरः परिभवः परीभावस्तिरस्क्रिया। रीढावमाननाऽवज्ञाऽवहेलनमसूक्षणम्॥" इत्यमरः) आर्त्ता—दुःखिता परिभवार्त्ता (३या तत्पु०) अवमानिता, रुदती—क्रन्दन्ती (विण०। रुद+शतृ+स्त्रियां ङीप्)। आगम्य—आगत्य [आ+गम+ल्यप् "वा ल्यपि" (६।४।३८ पा०) इति वैकल्पिकः अनुनासिकलोपाभावः)। पश्यतम्—अवलोकयतं (दृश+लोट्-तम्)। तया—पद्मावत्या। अङ्गुलिमुद्रा,—अङ्गुलीभिः कृता मुद्राः,—चिह्नविशेषाः इत्यर्थः, (मध्यपदलोपिसमासः)। दत्ताः,—अर्पिताः, अङ्किता इत्यर्थः।

(च) नैराश्यविषण्ण—नैराश्येन—पद्मावत्या निराशतया, विषण्णः,—दुःखितः तं (३या तत्पु०)। जनान्तिकम्—अप्रकाशं, "त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत् स्यात् जनान्ते तज्जनान्तिकम्॥" इत्युक्तलक्षणानुसारेण ऊर्द्ध्वोत्तोलिताङ्गुलित्रयेण वृद्धामपवार्य्य राजपुत्रमामन्त्र्य गुप्तभावेनेत्यर्थः (क्रिया विण०)। मा गमः,—न गच्छ [गम्+लुङ्-सि "माङि लुङ्" (३।३।१७५ पा०) इति माङ्योगे लुङ् "न माङ्योगे" (६।४।७४ पा०) इति अडागमप्रतिषेधः]। मन्त्र—गुप्तिवादं, गुह्यभाषणमित्यर्थः, ("वेदभेदे गुप्तिवादे मन्त्रः" इत्यमरः), रक्षन्त्या—पालयन्त्या, मन्त्रः प्रकाशितः मा भूदिति चिन्तयन्त्या इत्यर्थः, (रक्ष+शतृ+स्त्रियां ङीप्)। कर्पूरशुभ्रा—कर्पूरवत्

अस्या मुखे दश स्वाङ्गुल्यो निहिताः, एतैरेतत् सूचितं,—यथा अस्मिन् शुक्ले पक्षे चन्द्रवतीरिमा दश रात्रीः सङ्गमानर्हाः प्रतीक्षस्व” इति।

इत्येवं राजपुत्रं (क) समाश्वास्य स मन्त्रिसुतः गुप्तं हस्तस्थं काञ्चनं किञ्चिद् आपणे विक्रीय तया वृद्धया महार्हं भोजनं साधयामास। ततस्तौ द्वौ सह तया वृद्धया( ख ) बुभुजाते। इत्थं ( ग ) दशाहानि नीत्वा पुनर्जिज्ञासार्थं स मन्त्रिपुत्रस्तां

शुक्लवर्णा, (उपमितिसमासः) कर्पूरेण—कर्पूरलेपनेन, शुभ्रा इति वा। (३या तत्पु०)। निहिताः,—स्थापिताः, अङ्किता इत्यर्थः, [ नि+धा+क्तः "दधातेर्हिः" (७।४।४२ पा०) इति हिः ] अस्मिन् शुक्ले पक्षे (कालाधिकरणे ७मी), चन्द्रः अस्यामस्तीति चन्द्रवान [ अस्त्यर्थे मतुपि कृते "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" (८।२।९ पा०) इति मतोर्मस्य वकारः ] ताः चन्द्रवतीः,—चन्द्रयुक्ताः, ज्योत्स्नीरिति यावत् (विश०), रात्रीः (कर्म्म), सङ्गमे—मेलनकर्म्मणि, अनर्हाः,—अयोग्याः सङ्गमानर्हाः,—मिलनानुपयोगिनीः, (विश०। ७मी तत्पु०)। प्रतीक्षस्व—परिपालय, अपेक्षां कुरु इत्यर्थः, (प्रति+ईक्ष+प्रार्थनायामनुज्ञायां वा लोट्-स्व)।

(क) समाश्वास्य—सान्त्वयित्वा (सम्+आ+श्वस+णिच्-ल्यप्)। गुप्तम्—अन्यैरज्ञातं (विक्रीय इति क्रियाया विशेषणम्)। हस्ते तिष्ठतीति हस्तस्थं—करस्थितमित्यर्थः, [ उपपदस०। हस्त+स्था—"सुपि स्थः" (३।२।४ पा०) इति के कृते "आतो लोप इटि च" (६।४।६४ पा०) इति आकारलोपः ]। काञ्चनं—सुवर्णं, सौवर्णभूषणम् इत्यर्थः। आपणे—निषद्यायां, पण्यशालायामित्यर्थः, विक्रीय—क्रेतुः मूल्यग्रहणपूर्व्वकं दत्त्वा इत्यर्थः (वि+क्री+ल्यप्)। वृद्धया (करणे ३या), महाऽर्हं—महान् अर्हो मूल्यं यस्य तत् महामूल्यं, राजोचितम् इत्यर्थः (विश०। "धातूनामनेकार्थत्वात् द्रव्यक्रययोग्यत्वात्तु अर्ह+कर्मणि घञ्, मूल्यं, महार्हशय्यापरिवर्त्तनच्युतैः" कुमा०। 'महानर्हो मूल्यमस्यास्तादृशी शय्या' इति मल्लिनाथः" इति वाचस्पत्यमहाकोषः)। साधयामास—पाचयामासेत्यर्थः (साध+णिच्+लिट्-णल्)।

(ख) बुभुजाते—खादतुः [ भुज+लिट्-आते "भुजोऽनवने" (१।३।६६ पा०) इति आत्मनेपदम् ]।

(ग) दश—दशसङ्ख्याकानि, अहानि—दिनानि (अत्यन्तसंयोगे २या), नीत्वा—यापयित्वा (नी+क्त्वा)। ज्ञातुमिच्छा जिज्ञासा—ज्ञानेच्छा [ ज्ञा+सन्

दूतीं पद्मावतीपार्श्वं प्रेषितवान्। साऽपि (च) मिष्टान्न-पानादिलुब्धा तदनुरोधात् तस्या वासगृहं गत्वा प्रतिनिवृत्य च तौ जगाद,—"वत्सौ! इतो गत्वाऽहं तत्पार्श्वं कियन्तं कालं तूष्णीं स्थिता; तया तु युष्मत्कथाऽपराधं स्वयमुद्गिरन्त्या पुनः सालक्तकाभिस्तिसृभिः कराङ्गुलिभिः उरसि हता तदन्तिकात् अपमानिता पुनरायाता"। तदाकर्ण्य स मन्त्रिपुत्रः तं राजपुत्रं (ङ) स्वैरमब्रवीत्,—

"अः प्रत्ययात्" (३।३।१०२ पा०) इति अप्रत्यये स्त्रियां टाप्], तस्यै इदं जिज्ञासार्थं—(नित्यस०। क्रियाविश०) कदा राजपुत्रो भवदन्तिकं गमिष्यतीति जिज्ञासां कर्तुमित्यर्थः। प्रेषितवान्—प्रेरितवान् [प्र+इष+क्तवतु:]।

(च) मिष्टान्न—मोदकलड्डुकादि, पानं—पानकादि, मिष्टान्नञ्च पानञ्च मिष्टान्नपाने (द्वन्द्व) ते आदिनी येषां (बहुव्री०) तेषु लुब्धा—लोलुपा, आकृष्टा इत्यर्थः (७मी तत्पु०। लुभ+कर्त्तरि क्तः+स्त्रियां टाप्) मिष्टान्नपानादि-लुब्धा—मोदकादिलोलुपा (विश०), तस्य—मन्त्रिपुत्रस्य, अनुरोधः,—अनुवर्त्तनं, चित्ताराधनमित्यर्थः, (६ष्ठी तत्पु०। "अनुरोधोऽनुवर्त्तनम्" इत्यमरः) तस्मात् तदनुरोधात्—मन्त्रिपुत्रस्य प्रीत्यर्थमित्यर्थः (हेत्वर्थे ५मी)। प्रतिनिवृत्य—प्रत्यागत्य, (प्रति+नि+वृत+ल्यप्), इतः,—अस्मात् स्थानात् (अव्य०। इदमः अपादाने पञ्चमी ततः तसिल्)। कालं ["कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति २या]। तूष्णीं—मौनम् (अव्य०। "मौने तु तूष्णीं तूष्णीकाम्—" इत्यमरः)। युवयोः कथा—युष्मत्सम्बन्धिप्रागुक्तवाक्यमित्यर्थः, तया यः अपराधः,—तत्कथनेन यः दोषः तम्, स्वयम्—आत्मनैव, मत्कथनात् प्रागेवेत्यर्थः (अव्य०), उद्गिरन्त्या—उद्वमन्त्या इव, त्वरितमुच्चारयन्त्या इत्यर्थः (विश०। उत्+गॄ+शतृ+स्त्रियां ङीप्)। अलक्तकेन—लाक्षया सह वर्त्तमानाभिः सालक्तकाभिः,—अलक्तक-रञ्जिताभिरित्यर्थः, (बहुव्री०। विश०), कराङ्गुलिभिः (करणे ३या), उरसि—वक्षसि (अवच्छेदे ७मी), हता—ताड़िता, (विश०। हन+कर्म्मणि क्तः अनुनासिक-लोपः, स्त्रियां टाप्), तस्याः अन्तिकात्—समीपात् तदन्तिकात् (६ष्ठी तत्पु०। अपादाने ५मी), आयाता—आगता (आ+या+कर्त्तरि क्तः स्त्रियां टाप्)।

(ङ) स्वैरं—मन्दं मन्दम्, अप्रकाशमित्यर्थः (क्रिया विश०। "स्वैरः स्वच्छन्द"

"सखे! माऽन्यथा शङ्कां कार्षीः, अस्या हृदये तया यदलक्तकाक्तम् अङ्गुलिमुद्रात्रयं विन्यस्तं, कौशलेन तेन रजस्वलास्तिस्रो निशाः स्थिताः इति सूचितम्"।

एवं राजसुतमाश्वास्य स मन्त्रिसुतः (च) त्र्यहे गते पुनरपि तां वृद्धां पद्मावतीसकाशं प्राहिणोत्। सा तस्मिन् (छ) दिने गता तया समादृत्य भोजिता, पानादिभिश्च दिनं सर्वं विनोदिता। (ज) यावत् सा सायं गृहमागन्तुमिच्छति,

---

मन्दयोः" इति मेदिनी)। अन्यथा—अन्यप्रकारा, त्वन्मनोरथवैफल्यरूपामित्यर्थः, शङ्कां—त्रासं वितर्कं वा ("शङ्का त्रासे वितर्के च" इति मेदिनी), मा कार्षीः,—न कुरु [मा+कृ+लुङ्-सि "माङि लुङ्" (३।३।१७५ पा०) इति लुङ् "न माङ्योगे" (६।४।७४ पा०) इति अडागमाभावः]। अलक्तकेन—लाक्षया, आक्तं—सिचितं, रञ्जितमित्यर्थः, अलक्तकाक्त—लाक्षारसरञ्जितं (विश०। ३या तत्पु०), अङ्गुलीभिः कृतं मुद्रात्रयं—रेखात्रयमित्यर्थः, (शाकपार्थिवादित्वात् समासः)। कौशलेन—नैपुण्येन, बुद्धिप्रभावेणेत्यर्थः, सङ्केतेनेति यावत्, (करणे ३या)। रजस्वलाः,—ऋतुमत्यः, ["रजःकृष्यासुतिपरिषदो वलच्" (५।२।११२ पा०) इत्यनेन रजस्+वलच्+स्त्रियां टाप्]। निशाः (अत्यन्तसंयोगे २या), स्थिताः,—पाल्याः, अपेक्षणीया इत्यर्थः, सर्वा एव रजस्वलाः त्रिरात्रं गमनानर्हाः भवन्तीति भावः; एतेन अहं रजस्वला सञ्जाता, अतः त्रिरात्रमपेक्षस्व इति आवेदितम्।

(च) त्रयाणामह्नां समाहारः इति त्र्यहः [त्रि+अहन्+"राजाहःसखिभ्यष्टच्" (५।४।९१ पा०) इति टच् "अह्नष्टखोरेव" (६।४।१४५ पा०) इति टिलोपः। तद्धितार्थे द्विगुः] तस्मिन् त्र्यहे (भावे ७मी०)। प्राहिणोत्—प्रैरयत्, प्रेषितवानित्यर्थः, (प्र+हि+लङ्-द)।

(छ) दिने (कालाधिकरणे ७मी)। समादृत्य—सम्मान्य, समादरं कृत्वेत्यर्थः, [सम्+आ+दृ+ल्यप् "ह्रस्वस्य पिति कृति तुक्" (६।१।७१ पा०) इति तुक्]। भोजिता—कारितभोजना (भुज+णिच्+क्तः+स्त्रियां टाप्)। दिनम् (अत्यन्तसंयोगे २या), विनोदिता—सन्तोषिता इत्यर्थः, (वि+नुद+णिच्+क्तः+स्त्रियां टाप्)।

(ज) यावत्—यदा (अव्य०), सायं—दिवान्ते, (अव्य०। "दिनान्ते तु सायम्" इत्यमरः)। आगन्तुम्—आयातुम् (आ+गम+तुमुन्), इच्छति—अभिलषति

तावत् तत्र बहिः भयङ्करः कोलाहलः समुदभूत्,—'हा! हा! अयं मत्तहस्ती स्वावासात् भ्रष्टः जनान् मथ्नन् प्रधावति' इति जना आक्रन्दन्तः पलायमानाः शुश्रुविरे। ततः सा पद्मावती तां वृद्धामभाषत,—(भ) "अम्ब! साम्प्रतं हस्तिरुद्धे पथि त्वया न गन्तव्यं, तत् त्वां पीठिकां समारोप्य आलम्बनरज्जुभिर्बद्ध्वा अनेन वृहता गवाक्षेण अत्र गृहोद्याने

---

(दृश+लट्-तिप्)। तावत्—तदा (अव्य०), भयङ्करः,—भयानकः [विश०। भय+कृ+"मेघर्तिभयेषु कृञः" (३।२।४३ पा०) इति खच् "अरुर्द्विषदजन्तस्य मुम्" (६।३।६७ पा०) इति मुमागमश्च]। कोलाहलः,—कलकलः (वि०। "कोलाहलः कलकलः" इत्यमरः)। समुदभूत्—समजनि [सम्+उत्+भू+लुङ्-द "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]। हा हा इति विषादव्यञ्जकमव्ययम्। मत्तः,—प्रभिन्नः, मदोन्मत्त इत्यर्थः, ("प्रभिन्नो गर्जितो मत्तः" इत्यमरः) स चासौ हस्ती चेति मत्तहस्ती—मदस्रावी गजः (कर्म्मधा०), स्वकीयः आवासः स्वस्य आवासः इति वा स्वावासः,—स्वगृहं (६ष्ठी तत्पु०) तस्मात् स्वावासात्—स्वगृहात्, (अपादाने ५मी), भ्रष्टः,—स्खलितः, च्युत इत्यर्थः, (भ्रंश+कर्त्तरि क्त)। मथ्नन्—विलोडयन्, व्याभयन्निति यावत् (मन्थ+शतृ), प्रधावति—द्रुतमागच्छति (प्र+धाव+लट्-तिप्)। जनाः (कर्म्म०), आक्रन्दन्तः,—रुदन्तः, (विश०। आ+क्रन्द+शतृ) पलायमानाः,—पलायनं कुर्व्वन्तः (विश०। परा+अय+शानच्, रस्य लः)। शुश्रुविरे—आकर्णयाम्बभूविरे। (श्रु+कर्म्मणि लिट्-इरे) ताभिरिति शेषः, मत्तहस्ती प्रधावति इति उच्चैर्वदतः पलायमानान् जनान् पद्मावतीप्रभृतयः शुश्रुवुरित्यर्थः।

(भ) अम्ब!—मातः! ("अम्बा माता" इत्यमरः), हस्तिरुद्धे—हस्तिना—हस्तिसञ्चारेणेत्यर्थः, रुद्धे—क्रमगतिरोधे, दुर्गमे इत्यर्थः, (विश०। ३या तत्पु०। रुध+क्तः)। गन्तव्यं—यातव्यं (गम+तव्य)। पीठिका—पीठ एव पीठका (अल्पार्थे कन् स्त्रिया टाप्) तां, क्षुद्रपीठमित्यर्थः, समारोप्य—उपवेश्य, (सम्+आ+रुह+णिच्-ल्यप्)। आलम्ब्यते—ध्रियते अनया आलम्बनी—बन्धनसाधनीत्यर्थः, (आ+लम्ब+करणे ल्युट्) ताश्च ताः रज्जवश्चेति आलम्बनरज्जवः (कर्म्मधा०) ताभिः आलम्बनरज्जुभिः,—बन्धनसाधनतन्तुभिः (करणे ३या)। बद्ध्वा—संयम्य

प्रक्षिपामि, ततो वृक्षमारुह्य विलङ्घ्य च प्राकारम् अन्येन वृक्षेण स्वगृहं व्रज" इति। एवमुक्त्वा सा (ञ) चेटीभिस्तां वृद्धां रज्जुपीठिकया गवाक्षात् उद्याने प्रक्षेपयामास। सा च गृहं गत्वा तत् सर्वं ताभ्यां (ट) राजपुत्रमन्त्रिपुत्राभ्यां शशंस।

तदा स मन्त्रिपुत्रस्तं राजपुत्रमभाषत,—"सखे! (ठ) सिद्धं ते अभिलषितं, युक्त्या तया मार्गो दर्शितः; तदद्यैव प्रदोषे त्वम् एतेनैव पथा तत् प्रियामन्दिरं गच्छ"। इत्युक्तस्तेनैव मन्त्रिपुत्रेण युतः स राजपुत्रः तेनैव पथा वृद्धया दर्शितेन तदुद्यानं ययौ, (ड) ददर्श च तत्र तां लम्बमानां सपीठिकां

(बन्ध+क्त्वा), गवाक्षेण—वातायनेन (करणे ३या), गृहस्य यद् उद्यानम्—उपवनम् गृहोद्यानं (६ष्ठी तत्पु०) तस्मिन् गृहोद्याने—प्रमोदवने इति यावत् (उपश्लेषे ७मी), प्रक्षिपामि—अवतारयामि इत्यर्थः (प्र+क्षिप+लट्-मिप्)। आरुह्य—उत्थाय, (आ+रुह+ल्यप्) विलङ्घ्य—उत्प्लुत्य, अतिक्रम्येत्यर्थः, (वि+लङ्घ+ल्यप्) प्राकारं—प्राचीरं ("प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिः" इत्यमरः), वृक्षेण—वृक्षारोहणेन, एकं वृक्षमारुह्य पुनस्तं परित्यज्य अन्य-वृक्षारोहणेनेत्यर्थः, (करणे ३या), व्रज—गच्छ (व्रज+अनुज्ञायां लोट्-हि)।

(ञ) चेटीभिः,—दासीभिः (प्रयोज्यकर्त्तरि ३या)। रज्जुपीठिका—रज्जुनिबद्धा पीठिका, (शाकपार्थिवादित्वात् समासः) तया (करणे ३या), गवाक्षात—वातायनप्रदेशात् (अपादाने ५मी०), प्रक्षेपयामास—पातयामास, अवतारया-मासेत्यर्थः (प्र+क्षिप+णिच्+लिट्-णल्)।

(ट) राजपुत्रमन्त्रिपुत्राभ्यां ["क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" (वा०) इति ४र्थी०]। शशंस—कथयामास (शंस+लिट्-णल्)।

(ठ) सिद्धं—पूर्णं, सफलं सञ्जातमित्यर्थः (सिध+कर्त्तरि क्तः), अभि-लषितम्—अभीष्टं ("कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् अभिलाष इत्यर्थः, अभि+लष+भावे क्तः)। युक्त्या—कौशलेन, बुद्धिनैपुण्येनेति यावत्, मार्गः,—पन्थाः, तद्गृहगमनोपाय इति भावः, दर्शितः,—निर्द्दिष्टः इत्यर्थः, (दृश+णिच्+कर्म्मणि क्तः)। प्रियायाः,—प्रणयिन्याः, मन्दिरं—गृहं (६ष्ठी तत्पु०) प्रियामन्दिरं—पद्मावतीभवनम्।

(ड) ददर्श—दृष्टवान्बभूव, (दृश+लिट्-णल्)। लम्बमानां—दोलायमानां,

मार्गोन्मुखाभिश्चेटीभिरुपरिष्टादधिष्ठितां रज्जुम्। स च तां दृष्ट्वैव (ढ) यावत् आरोहति स्म, तावत् ताभिः सखीभिः तया रज्ज्वा गवाक्षेणाकृष्टः प्रियान्तिकं प्राविशत्। तस्मिंश्च (ण) प्रविष्टे स मन्त्रिपुत्रस्तमेव वृक्षाऽऽवासं प्रायात्।

राजपुत्रस्तु तां पद्मावतीं (त) पूर्णेन्दुवदनां प्रसरत्कान्ति-चन्द्रिकां क्षणपश्चात् गुप्तं स्थितां राकाविभावरीमिव

लम्बितभावेनावस्थितां (लबि+शानच्), पीठिकया—क्षुद्रासनेन सह विद्यमानां सपीठिकाम्—आसननिबद्धां (विश०। बहुव्री०)। मार्गे—पथि, मार्गमभिलक्ष्य इत्यर्थः, उन्मुखाभिः,—ऊर्द्ध्वमुखीभिः, उत्सुकाभिरित्यर्थः (७मी तत्पु०), मार्गोन्मुखाभिः,—राजपुत्रस्य आगमनं प्रतीक्षमाणाभिरित्यर्थः (विश०)। उपरिष्टात्—ऊर्द्ध्वदेशे, रज्ज्वा ऊर्द्ध्वांशम् इत्यर्थः, ["उपर्य्युपरिष्टात्" (५।३।३१ पा०) इति सूत्रेण ऊर्द्ध्वशब्दस्य उपादेशः रिष्टातिल् प्रत्ययश्च] अधिष्ठिताम्—आश्रितामित्यर्थः, [अधि+स्था+कर्त्तरि क्तः "स्थाघ्वोरिच्च" (१।२।१७ पा०) इत्यनेन इदादेशे "आतो लोप इटि च" (६।४।६४ पा०) इति आकारलोपः "उपसर्गात् सुनोति—" (८।३।६५ पा०) इत्यनेन षत्वं, ततः स्त्रियां टाप्]।

(ढ) यावत्—यदा इत्यर्थः, आरोहति स्म—उदतिष्ठत् [आ+रुह+"लट् स्मे" (३।२।११८ पा०) इति अतीते लट्-तिप्]। तावत्—तदैवेत्यर्थः। तया—पीठिकानिबद्धया। आकृष्टः,—आकृष्य ऊर्द्ध्वं नीत इत्यर्थः (विश०। आ+कृष+कर्म्मणि क्तः)। प्राविशत्—प्रविष्टवान् (प्र+विश+लङ्-द)।

(ण) प्रविष्टे—गृहाभ्यन्तरं गते इत्यर्थः (विश०। प्र+विश्+कर्त्तरि क्तः), तस्मिन्—राजपुत्रे (भावे ७मी)। वृक्षाया आवासं (६ष्ठी तत्पु०) वृक्षाऽऽवासं —वृक्षाभवनं, प्रायात्—प्रातिष्ठत (प्र+या+लङ्-द)।

(त) पूर्णेन्दुरिव वदनं यस्यास्तां पूर्णेन्दुवदनां—पूर्णचन्द्रमुखीं (बहुव्री०); राकापक्षे,—पूर्णेन्दुरेव वदनं यस्यास्तां (बहुव्री०)। प्रसरन्ती—विस्फुरन्ती, समन्तात् विसृमरेत्यर्थः, कान्तिः,—अङ्गप्रभा, चन्द्रिका—कौमुदी इव यस्यास्तां, (बहुव्री०); अन्यत्र,—प्रसरन्ती—दिशः व्याप्नुवाना, कान्तिरिव चन्द्रिका यस्याः यत्र वा तां प्रसरत्कान्तिचन्द्रिकां—स्फुरत्प्रभापटलामित्यर्थः। क्षणपश्चात्—क्षणपश्चिमाभिराक्रान्तिभिया (अपादाने ५मी०), गुप्तं—निभृतं यथा तथा इत्यर्थः (क्रियाविश०), राकाविभावरीं—राका—पूर्णेन्दुतिथिः, तद्युक्ता इत्यर्थः;

अद्राक्षीत्। साऽपि तं दृष्ट्वा (थ) तत्कालोचितैः कण्ठग्रहादिभिस्तैस्तैः प्रौढ़ाचारै रमयामास। ततस्तत्र (द) गान्धर्वविधिना समूढ़या तया सह कान्तया गुप्तं विहरन् कतिचित् दिनानि स्थित्वा कदाचित् तां प्रियामवदत्,—"प्रिये! मम सखा मन्त्रिपुत्रः मयैव सहायातः अत्र वृद्धागृहे एकाकी तिष्ठति, तद् गत्वा तं सम्भाव्य पुनरेष्यामि" इति। तदाकर्ण्य सा

("राका नद्यन्तरे कच्छां नवजातरजःस्त्रियाम्। सम्पूर्णेन्दुतिथौ—" इति मेदिनी) विभावरी—रजनी, राकाविभावरी तामिव, (कर्म्मधा०)। अद्राक्षीत्—ऐक्षिष्ट (दृश+लुङ्-द्)।

(थ) स एव कालः तत्कालः (कर्म्मधा०) तस्मिन् उचिताः,—उपयुक्ताः (७मी तत्पु०) तैः तत्कालोचितैः,—प्रथममिलनसमयोपयोगिभिरित्यर्थः, कण्ठस्य कण्ठे वा ग्रहः,—ग्रहणं कण्ठग्रहः,—गलवेष्टनपूर्व्वकालिङ्गनमित्यर्थः, (६ष्ठी ७मी वा तत्पु०) स एव आदिः येषां तैः (बहुव्री०)। तैस्तैः,—प्रणयिनोः मिलने प्रसिद्धैरित्यर्थः, प्रौढ़ाः,—प्रगल्भाः, अप्रालीनाः इत्यर्थः, यद्वा,—प्रौढ़ाः,—निपुणाः, कामोद्दीपनदक्षाः इत्यर्थः, ये आचाराः,—आचरणानि, प्रागुक्तालिङ्गनादय इत्यर्थः, तैः (करणे ३या। कर्म्मधा०), यद्वा,—प्रौढ़ायाः,—प्रगल्भायाः,—"स्मरान्धा गाढ़तारुण्या समस्तरतकोविदा। भावोन्नता दरव्रीड़ा प्रगल्भाऽऽक्रान्तनायका॥" इत्युक्तलक्षणायाः नायिकायाः इत्यर्थः, आचारा इव ये आचाराः तैः (६ष्ठी तत्पु०), निर्लज्जव्यवहारैरित्यर्थः, रमयामास,—प्रीणयामास (रम+णिच्+लिट्-णल्)।

(द) गान्धर्व्वविधिना—"इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्व्वः स तु विज्ञेयः,—" इत्युक्तलक्षणकेन कन्यावरयोः कामजविवाहविशेषेणेत्यर्थः (करणे ३या), समूढ़या—परिणीतया, [विण०। सम्+वह+क्तः "वचिस्वपियजादीनां किति" (६।१।१५ पा०) इति वहेः सम्प्रसारणे कृते "हो ढ़ः" (८।२।३१ पा०) इति हस्य ढे कृते "झषस्तथोर्धोऽधः" (८।२।४० पा०) इति तस्य धे "ष्टुना ष्टुः" (८।४।४१ पा०) इति धस्य ढे "ढो ढे लोपः" (८।३।१३ पा०) इति प्रातिपदिकस्य ढलोपे "ढ्रलोपे पूर्व्वस्य दीर्घोऽणः" (६।३।१११ पा०) इति सम्प्रसारितोकारस्य दीर्घः, ततः स्त्रियां टाप् तया]। कान्तया—प्रियया (सहयोगे ३या), गुप्तम्—अन्यैरलक्षितं यथा स्यात्तथा (क्रियाविण०), विहरन्—क्रीड़न् (विण०। वि+हृ+शतृ]। आयातः,—आगतः (आ+या+कर्त्तरि क्तः)। सम्भाव्य—सम्भाष्य,

(थ) धूर्त्ता पद्मावती तं प्रियमाह स्म,—"नाथ! त्वामहं पृच्छामि, मत्कृतास्तास्ताः संज्ञास्त्वया ज्ञाताः? उत ते तेन मन्त्रिपुत्रेण?"। तथा (न) अभिदधतीं तां राजपुत्रोऽब्रवीत्,—"प्रिये! न ज्ञातं मया तत् सर्वं, तेनैव मे मित्रेण दिव्यज्ञानवता सर्वं विदित्वा मे समाख्यातम्"। एतदाकर्ण्य सा (प) भामिनी विचिन्त्य तं प्रत्यभाषत,—"नाथ! तर्हि अयुक्तं कृतं त्वया चिरात् तद्वार्त्तां कथयता, यस्ते सखा,

सम्भाषणादिना संवर्द्ध्य इत्यर्थः, (सम्+भू+णिच्-ल्यप्), एष्यामि—आगमिष्यामि (इ+लृट्-स्यामि)।

(थ) धूर्त्ता—मायाविनी, सुचतुरेत्यर्थः। आह स्म—उवाच [ब्रू+"लट् स्मे" (३।२।११८ पा०) इति अयोगे अतीते लट्-तिप्]। पृच्छामि—जिज्ञासे, [प्रच्छ+लट्-मिप् "ग्रहिज्या—" (६।१।१६ पा०) इति सम्प्रसारणम्]। उत—विकल्पे, अथवा इत्यर्थः, (अव्य०। "उताप्यर्थविकल्पयोः" इत्यमरः)।

(न) अभिदधतीं—वदन्तीम् (अभि+धा+शतृ+स्त्रियां ङीप्)। दिव्यं—वल्गु, सुन्दरमित्यर्थः, द्योतनात्मकमिति यावत्, यद्वा—दिव्यं—दिवि भवम्, अलौकिकमित्यर्थः, असाधारणमिति यावत्, ("दिव्यं लवङ्गे धात्र्यां स्त्री वल्गौ दिविभवे त्रिषु" इति मेदिनी) यत् ज्ञानं—बुद्धिः, (कर्म्मधा०) तदस्य अस्तीति तेन दिव्यज्ञानवता—अलौकिकमनीषिणा [विण०। प्रशंसायां मतुप् "मादुपधायाश्च—" (८।२।९ पा०) इति मतोर्मस्य वकारः]। विदित्वा—बुद्ध्वा (विद्+क्त्वा), मे—मह्यं ["क्रियया यमभिप्रैति—" (वा०) इति सम्प्रदाने ४र्थी]। समाख्यातं—कथितं (सम+आ+ख्या+भावे क्तः)।

(प) भामिनी—कोपनस्वभावा रमणी, ईर्ष्यावतीत्यर्थः, नायकस्य प्रेमपात्रान्तरमसहिष्णुरिति यावत्, ("कोपना सैव भामिनी" इत्यमरः) विचिन्त्य—विभाव्य (वि+चिन्त+ल्यप्), प्रत्यभाषत—प्रत्यवदत् (प्रति+भाष+लङ्-त)। तर्हि—तदा, यदा स एवंविध दिव्यज्ञानसम्पन्नः तव प्रियसुहृच्च तदा इत्यर्थः, ["अनद्यतने र्हिलन्यतरस्याम्" (५।३।२१ पा०) इति तत्+र्हिल्], अयुक्तम्—अन्याय्यं, ("युक्तमौपयिकं लभ्यं भजमानाभिनीतवत्। न्याय्यञ्च त्रिषु षट्" इत्यमरः)। चिरात्—चिरेण, कालविलम्बेनेत्यर्थः (अव्य०), तस्य—तव मित्रस्य, वार्त्तां—वृत्तान्तं (६ष्ठी तत्पु०) तद्वार्त्तां—तव मित्रवृत्तान्तं, कथयता—वदता (विण०। कथ+

स मे भ्राता, तस्य प्रथममेव मया ताम्बूलादिसमाचारेण सम्माननना कर्त्तव्याऽऽसीत्"। इति (फ) उक्तवत्या तयाऽनुमतः राजपुत्रस्तेनैव पथा तस्यां निशि सख्युरन्तिकमागात्, अकथयच्च तत् सर्वं प्रियया कथितम्। मन्त्रिपुत्रस्तु तदयुक्तमिति न तत् सादरमभ्यमन्यत। (ब) इत्थं परस्परमालपतोस्तयोः सा विभावरी पर्य्यगात्।

अथ तयोः (भ) सान्ध्ये विधौ निर्वृत्ते पक्वान्नताम्बूलहस्ता पद्मावतीसखी तत्राऽऽगात्। सा समागत्य तं मन्त्रिपुत्रं कुशलं

---

णिच्+अट)। ताम्बूलादिसमाचारेण—ताम्बूलादीनां समाचारः,—सम्यगाचरणं, तद्दानरूपः सुष्ठु व्यवहार इत्यर्थः, तेन (करणे ३या। षष्ठी तत्पु०), सम्माननना—संवर्द्धना, समादर इत्यर्थः, [सम्+मान+णिच् "ण्यासश्रन्थो युच्" (३।३।१०७ पा०) इति युच्, ततः स्त्रियां टाप्]। आसीत्—अभूत्।

(फ) उक्तवत्या—कथितवत्या [विण०। वच+क्तवतुः "वचिस्वपियजादीनां किति" (६।१।१५ पा०) इति उपेः सम्प्रसारणं, ततः स्त्रियां ङीप्, तया]। तेनैव पथा—गवाक्षमार्गेणेत्यर्थः (करणे ३या)। सख्युः,—मित्रस्य (शेषे ६ष्ठी)। आगात्—आगमत् [आ+इ+लुङ्-द "इणो गा लुङि" (२।४।४५ पा०) इति इणो गाऽऽदेशे "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]। अकथयत्—अवदत् (कथ+णिच्+लङ्-द)। कथितम्—उक्तं (कथ+क्तः)। अयुक्तम्—अन्याय्यं, समयानुपयोगि इत्यर्थः। अभ्यमन्यत—प्रत्यभ्यनन्दयत्, तद्वाक्यस्य अकपटतायाम् आस्थां नास्थापयदित्यर्थः, (अभि+मन+लङ्-त)।

.(ब) इत्थम्—अनेन प्रकारेण (अव्य०), आलपतोः,—आभाषमाणयोः, (विण०। आ+लप+शतृ, तयोः)। पर्य्यगात्—पर्य्यगमत्, अवसिता इत्यर्थः, (परि+इ+लुङ्-द)।

(भ) सन्ध्याया इदं सान्ध्यं तस्मिन् सान्ध्ये—सन्ध्याकालविहिते, विधौ—उपासनादिकर्म्मणि (भावे ७मी), निर्वृत्ते—निष्पन्ने सति (निर्+वृत+क्तः, तस्मिन्, विण०। "सिद्धे निर्वृत्तनिष्पन्नौ" इत्यमरः), पक्वान्नं—लड्डुकपिष्टकादिकं, ताम्बूलं—वीटिकेत्यर्थः, सज्जितताम्बूलमिति यावत्, ते हस्ते यस्याः सा (विण०। व्यधि० बहुव्री०)।

(म) पृष्ट्वा दत्तोपचारा, युक्तितः राजपुत्रस्य भोजनं निषेद्धुं "सा तव प्रिया भोजनादौ तदागमं प्रतीक्षमाणा आस्ते" इति आवेद्य क्षणात् ततः प्रायात्।

ततः स मन्त्रिपुत्रस्तं राजपुत्रमभाषत,—"देव! (य) कौतुकमेकं पश्य, त्वां दर्शयामि" इत्युक्त्वा स तस्मादेकं पक्वान्नमादाय सारमेयाय तत्र स्थिताय प्रादात्। स

(म) पृष्ट्वा—जिज्ञासित्वा, [प्रच्छ+क्त्वा "व्रश्चभ्रस्ज—" (८।२।३६ पा०) इति षकारादेशः, "ग्रहिज्या—" (६।१।१६ पा०) इति पृच्छतेः सम्प्रसारणम्], दत्तः,—अर्पितः, [दा+क्तः "दो दद्घोः" (७।४।४६ पा०) इति दथादेशे थकारस्य तकारः] मन्त्रिपुत्राय इति भावः, उपचारः,—पद्मावतीप्रेरितपक्वान्नादिसेवोपकरणं यया सा दत्तोपचारा—अर्पितपक्वान्नादिद्रव्यसमूहा (विण०। बहुव्री०), युक्तितः,—युक्तिमाश्रित्य, उपायेनेत्यर्थः, वाक्यच्छलेनेति यावत्, (ल्यब्लोपे ५मी०)। निषेद्धुं—निवारयितुं, (नि+षिध+तुमुन्)। भोजनादौ—भोजनकालोपस्थितेः प्रागेव (कालाधिकरणे ७मी०)। तदागमं—तव आगमम्—आगमनं (६ष्ठी तत्पु०), प्रतीक्षमाणा—प्रतिपालयन्ती [प्रति+ईक्ष+शानच्+"आने मुक्" (७।२।८२ पा०) इति मुगागमः, ततः स्त्रियां टाप्], आस्ते—तिष्ठति (आस+लट्-ते)। मन्त्रिपुत्रो महाप्राज्ञश्चेत् जीवेत्, तदा कदाचन स राजपुत्रं स्वदेशं नेष्यति, विनष्टे तु तस्मिन्, स्थूलधियं राजपुत्रं समादरादिना विमोह्य वशीकृत्य च यावज्जीवमेव स्वान्तिकं स्थापयिष्यामि, अतः तथाविधाऽऽशङ्काऽपि नङ्क्ष्यति इति विचिन्त्य पद्मावती मन्त्रिपुत्रं विनाशयितुं सविषपक्वान्नादिकं सखीहस्तेन प्रेरयत्, किन्तु राजपुत्रश्चेत् मित्रस्य भोजनकाले तत्र तिष्ठेत्, यदि वा मैत्र्यानुरोधेन भोजनस्य किञ्चिदंशं गृह्णीयात्, तदा महाननर्थो भविष्यति, प्रकाशश्च राजपुत्रं निषेद्धुमपि नैव युज्यते, इति उपायेन तस्मात् अपसारयितुं एवमवदत् इति बोद्धव्यम्। आवेद्य—विज्ञाप्य (आ+विद+णिच्-ल्यप्), क्षणात्—तत्क्षणादित्यर्थः (ल्यब्लोपे ५मी०), ततः,—तस्मात् स्थानात् (अपादाने ५मी०)।

(य) कौतुकम्—आश्चर्य्यम्, अपूर्व्वदर्शनमिति यावत्, पश्य—आलोकय (दृश+प्रार्थनायां लोट्-हि)। दर्शयामि—अवेक्षयामि, (दृश+णिच्+लट्-मिप्)। सारमेयाय—कुक्कुराय, (सम्प्रदाने ४र्थी०। "कौलेयकः सारमेयः कुक्कुरो मृगदंशकः" इत्यमरः)।

(र) भुक्त्वैव तत्क्षणात् व्यापद्यत। तदवलोक्य "किमिदं (ल) चित्रम्!!" इति तं मन्त्रिपुत्रं राजपुत्रः पर्य्यपृच्छत्। स चैनं प्रत्यभाषत,—"देव! (व) संज्ञाप्रकटनेन मां धूर्त्तं विदित्वा हन्तुकामया त्वदनुरक्तया तया,—'अस्मिन् सति राजपुत्रो मदेकायत्तचित्तो न भवेत्, एतद्वशश्च मां विहाय स्वां नगरीं व्रजेत्' इति विचारयन्त्या मम भक्षणार्थं विषान्नं प्रहितम्; तस्मात् त्वमेतस्यां मन्युं मुञ्च, अहं कामप्यत्र युक्तिं

(र) भुक्त्वा—खादित्वा (भुज+क्त्वा), पक्वान्नमिति शेषः। व्यापद्यत—अम्रियत (वि+आ+पद+लङ्-त)।

(ल) चित्रम्—अद्भुतं ("विस्मयोऽद्भुतमाश्चर्य्यं चित्रम्" इत्यमरः)। पर्य्यपृच्छत्—अजिज्ञासत (परि+प्रच्छ+लङ्-द)।

(व) संज्ञायाः,—प्राक् तया कृतस्य स्वाभिप्रायसूचकभावविशेषस्य, प्रकटनेन—अर्थप्रकाशनेन संज्ञाप्रकटनेन—तया सङ्केतितस्य निगूढार्थज्ञापनेन (६ष्ठी तत्पु०। करणे ३या)। विदित्वा—ज्ञात्वा, (विद्+क्त्वा)। हन्तुं—मां मारयितुं, कामः,—अभिलाषः यस्यास्तया हन्तुकामया—मारयितुमिच्छन्त्या (विण०। "तुम्कामनसोः—" इत्यनेन मकारलोपः), त्वयि अनुरक्ता—आसक्ता (७मी तत्पु०) त्वदनुरक्ता तया त्वदनुरक्तया—त्वदासक्तचित्तया (विण०)। अस्मिन्—मन्त्रिपुत्रे (भावे ७मी), सति—विद्यमाने (विण०)। मयि एव एकं—केवलं, न तु अन्यस्मिन् इति भावः ("एके मुख्यान्यकेवलाः" इत्यमरः), आयत्तम्—अधीनं, वशीभूतमित्यर्थः, (७मी तत्पु०। कर्म्मधा०) चित्तं—मनः यस्य तथाविधः मदेकायत्तचित्तः,—अन्यासक्तिं विहाय केवलं मय्येवानुरक्तः इत्यर्थः (बहुव्री०)। एतस्य—मन्त्रिपुत्रस्य, वशः,—अधीनः एतद्वशः,—मन्त्रिपुत्रानुरागी इत्यर्थः (६ष्ठी तत्पु०), विहाय—परित्यज्य (वि+हा+ल्यप्), स्वाम्—आत्मीयां (विण०)। व्रजेत्—गच्छेत् (व्रज+सम्भावनायां लिङ्)। विचारयन्त्या—वितर्कयन्त्या (विण०। वि+चर+णिच्+शतृ+स्त्रियां ङीप् तया) भक्षणाय इदं भक्षणार्थं—भोजननिमित्तम् (अर्थेन सह नित्यसमासः), विषान्नं—विषमिश्रितमन्नं (शाकपार्थिवादित्वात् समासः), प्रहितं—प्रेरितं (प्र+हि+कर्म्मणि क्तः)। एतस्यां—पद्मावत्यां (विषये ७मी०), मन्युं—क्रोधं, ("मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः) मुञ्च—त्यज (मुच+प्रार्थनायां लोट्-हि)। युक्तिं—योगम्,

पर्य्यालोचयामि"। इत्युक्तवन्तं मन्त्रिसुतं स राजपुत्रः "सत्यं त्वं (श) बुद्धिशरीरः" इति यावत् स्तौति, तावत् सहसा दुःखाकुलजनैरुदीरितः,—"हा धिक्! राज्ञो बालः सुतो विपन्नः" इति रवः श्रूयते स्म। तत् (ष) आकर्णनेन हृष्टः स मन्त्रिपुत्रस्तं नृपात्मजं जगाद,—"देव! अद्य पद्मावतीगेहं निशि व्रज, तत्र गत्वा तां तथा पाययेः, यावत् पानमदेन सा निःसंज्ञा नष्टचेष्टा गतजीवितेव स्यात्। ततस्तस्याः (स) सनिद्रायाः कटितटे शूलेन अग्नितप्तेन अङ्कं दत्त्वा

उपायमित्यर्थः ("युक्तिः स्त्री न्याययोगयोः" इति मेदिनी), पर्य्यालोचयामि—पर्य्यालोचयामि, उद्भावयामीत्यर्थः, (परि+आ+लुच+णिच्+लट्-मिप्)।

(श) बुद्धिरेव शरीरं यस्य सः बुद्धिशरीरः,—बुद्धिजीवीत्यर्थः (बहुव्री०); स्तौति—प्रशंसति (ष्टु+लट्-तिप्)। दुःखेति।—दुःखेन—वेदनया, मनःपीड़या इत्यर्थः, ("आबाधा वेदना दुःखम्" इति हलायुधः) आकुलाः,—कातरा इत्यर्थः, (३या तत्पु०) जनाः तैः दुःखाऽऽकुलजनैः,—आधिव्याकुललोकैः (कर्त्तरि ३या), उदीरितः,—उक्तः, (विश०। उत्+ईर+कर्म्मणि क्तः)। बालः,—शिशुः (कर्त्ता), विपन्नः,—मृतः (वि+पद+कर्त्तरि क्तः), श्रूयते स्म—आकर्ण्यते स्म, शुश्रुवे इति यावत् [श्रु+कर्म्मणि लट्-ते "लट् स्मे" (३।२।११८ पा०) इति प्रयोगे अतीते लट्]।

(ष) आकर्णनेन—श्रवणेन (आ+कर्ण+णिच्+भावे ल्युट्)। तां—राजसुतां (प्रयोज्यकर्त्तरि "गतिबुद्धिप्रत्यवसानार्थ—" इति द्वितीया), तथा—तावत्, तावत्पर्य्यन्तमित्यर्थः, पाययेः,—मद्यपानं कारयेः इत्यर्थः (पा+णिच्+विधौ लिङ्-यास्), यावत्—यावत्कालपर्य्यन्तं, पानेन पानजनितो वा मदः पानमदः (३या तत्पु०। शाकपार्थिवादि० वा) तेन पानमदेन—मद्यपानजनितोन्मत्ततया (करणे ३या), निः,—नास्ति, संज्ञा—चेतना यस्याः सा निःसंज्ञा—हतचेतना (बहुव्री०), नष्टा—अपगता, चेष्टा—पार्श्वपरिवर्त्तनादिरूपा कायक्रिया यस्याः सा नष्टचेष्टा—निरीहा, जड़प्राया इति यावत् (बहुव्री०), गतं—प्रस्थितं, जीवितं—जीवनं यस्याः सा गतजीविता इव—मृता इव, मृतकल्पा इति यावत् (बहुव्री०), स्यात्—भवेत् (अस+लिङ्-यात्)।

(स) निद्रया सह वर्त्तमाना सनिद्रा तस्याः सनिद्रायाः,—निद्रिताया इव ज्ञान-

आभरणानि च गृहीत्वा गवाक्षेण तेनैव प्रकारेण आगच्छेः, ततः परं यथा भद्रं भवेत् तथा करिष्यामि" इत्युक्त्वा कारयित्वा च त्रिशूलं तस्मै राजसूनवे प्रादात्। सोऽपि राजपुत्रस्तत् (ङ) कुटिलकर्कशं कालायसदृढं कान्तावयस्ययोश्चित्तमिव हस्ते गृहीत्वा पूर्ववत् रात्रौ पद्मावतीगृहमेत्य शुचेः स्वमन्त्रिणो वाक्यं प्रभूणामविचार्य्यमिति मत्वा तत्र मद्यपाननिश्चेष्टां तां जघने शूलेनाङ्कितां कृतालङ्करणाश्च हृत्वा सख्युरन्तिकमागात्, अशंसच्च आभरणानि दर्शयित्वा तत् सर्वम्।

रङ्किताया इत्यर्थः (बहुव्री०), कटितटे—कटिदेशे (औपश्लेषिके ७मी)। अग्निना तप्तम्—उष्णं (३या तत्पु०) तेन अग्नितप्तेन (विश०), अङ्कं—चिह्नं ("कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्" इत्यमरः)। आभरणानि—अलङ्कारान्। आगच्छेः,—एयाः, (आ+गम+लिङ्-यास्)। भद्रं—मङ्गलं ("श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः)। करिष्यामि—विधास्यामि (कृ+लृट्-स्यामि)। त्रीणि शूलानि—शिखाग्राणि यत्र तत् त्रिशूलं—स्वनामप्रसिद्धमस्त्रविशेषं (वि०। बहुव्री०)। राज्ञः सूनुः राजसूनुः (६ष्ठी तत्पु०) तस्मै राजसूनवे—राजपुत्राय (सम्प्र०४र्थी०)।

(ङ) कुटिलं—भङ्गिमत्, अन्यत्र—क्रूरं, कर्कशं—कठोरं, तीक्ष्णाग्रमित्यर्थः, अन्यत्र—साहसिकं, कार्य्यपरायणत्वेन निष्ठुरमित्यर्थः, कुटिलञ्च कर्कशञ्च तत् कुटिलकर्कशं (विश०। विशेषणकर्म्मधारयः), कालायसदृढं—कठिनकृष्णलौहनिर्म्मितमित्यर्थः, कालायसवत् दृढमिति वा (उपमितसमासः), कान्ता—प्रिया, पद्मावतीति यावत्, वयस्यः,—मित्रं, मन्त्रिपुत्र इति यावत्, तयोः कान्तावयस्ययोः,—पद्मावतीमन्त्रिपुत्रयोः (शेषे ६ष्ठी), कान्ताचित्तवत् कुटिलं, वयस्यचित्तवत् कर्कशमित्यर्थः। हस्ते गृहीत्वा (हस्ते इत्यव्ययेन सह गृहीत्वा इत्यस्य समासस्य वैभाषिकत्वेन न ल्यप्)। एत्य—आगत्य (आ+इ+ल्यप्), शुचेः,—निर्म्मलस्य, प्रभुभक्तस्येति यावत् (विश०)। प्रभूणां—प्रभुभिरित्यर्थः ["कर्त्तृकर्म्मणोः कृति" (२।३।६५ पा०) इति कृद्योगे कर्त्तरि ६ष्ठी], अविचार्य्यं—विचारानर्हं (न+वि+चर+ण्यत्)। जघने—कटिदेशे (औपश्लेषिके ७मी०। "जघनञ्च स्त्रियाः श्रोणिपुरोभागे कटावपि" इति मेदिनी)। अङ्कः,—चिह्नं सञ्जातः अस्याः अङ्किता ["तदस्य सञ्जातं तारकादिभ्य इतच्" (५।२।३६ पा०)

ततः स मन्त्रिपुत्रः स्वं (क) समीहितं सिद्धं मत्वा, प्रातः श्मशानं गत्वा, स्वयं तापसरूपभृदभवत्, अकरोच्च राजपुत्रं शिष्यरूपिणम्, अब्रवीच्च,—"त्वमेभ्योऽलङ्करणेभ्यः इमां मुक्तावलीं नीत्वा विक्रेतुम् आपणं व्रज, यदि त्वां पुररक्षिणो गृह्णीयुः, तदा इत्थं ब्रूयाः यत्,—'इयं मे गुरुणा विक्रयार्थं दत्ता' इति"। इति (ख) सन्दिष्टः स राजसुतः आपणं गत्वा तथैव मुक्तावलीं विक्रेतुमतिष्ठत्, अगृह्यत च तथाभूतः पुररक्षिभिः। ते च दन्तघाटसुतायाः (ग) अलङ्करणमोषा-

इति इतच्] ताम् अङ्किताम्—चिह्निताम् (विण॰), हृतानि—मुषितानि, अलङ्करणानि—भूषणानि यस्यास्तां हृतालङ्करणाम्—अलङ्कारविहीनामित्यर्थः (बहुव्री॰): अशंसत्—अकथयत् (अनु+शंस+लङ्-द)। दर्शयित्वा—अवलोकयित्वा (दृश+णिच्+क्त्वा)।

(क) समीहितम्—अभीप्सितं (सम्+ईह+कर्मणि क्तः तत्), सिद्धं—सफलं जातम्। तापसस्य—तपस्विनः, रूपमिव रूपं—मूर्त्तिं, दण्डकाषायकमण्डलुप्रभृतिभिः परिच्छदैः तापसवेशमित्यर्थः, बिभर्त्ति—धारयति इति तापसरूपभृत्—तपस्विवेशधृक् (विण॰। तापसरूप+भृ+क्विप्)। शिष्यस्य—छात्रस्य, रूपम्—आकारमिव, रूपं विद्यते अस्य इति तथाविधं शिष्यरूपिणं—शिष्यवेशधारिणं (विण॰। अस्त्यर्थे इनिः)। अलङ्करणेभ्यः,—भूषणेभ्यः ["पञ्चमी विभक्ते" (२।३।४२ पा॰) इति निर्द्धारे ५मी॰], मुक्तावलीं—मुक्ताहारं, विक्रेतुं—विक्रयं कर्त्तुं (वि+क्री+तुमुन्), आपणं—पण्यवीथिकां, क्रयविक्रयस्थानमित्यर्थः, ("आपणस्तु निषद्यायां विपणिः पण्यवीथिका" इत्यमरः)। पुरं—नगरं, रक्षन्ति ये ते पुररक्षिणः,—नगरपालाः (पुर+रक्ष+ग्रहादित्वात् णिनिः), गृह्णीयुः,—धारयेयुः, पीडयेयुरिति यावत्, [ग्रह+लिङ्-युस्, "क्र्यादिभ्यः श्ना" (३।१।८१ पा॰) इति श्ना "ई हल्यघोः" (६।४।११३ पा॰) इतीकारे "श्नाभ्यस्तयोः—" (६।४।११२ पा॰) इत्याकारलोपः। यदिशब्दयोगे लिङ्]। ब्रूयाः,—कथयेः (ब्रू+लिङ्-यास्)।

(ख) सन्दिष्टः,—वाचा आज्ञप्तः (विण॰। सम्+दिश्+कर्मणि क्तः)। अतिष्ठत्—अवर्त्तत (स्था+लङ्-द), अगृह्यत—अध्रियत (ग्रह+कर्मणि लङ्-त) तथाभूतः,—मुनिवेशेन हारविक्रयायावस्थितः (विण॰)।

(ग) अलङ्करणानि—भूषणानि, मुष्णाति—अपहरति इति अलङ्करणमोषः,

न्वेषणार्थिनः तं राजसुतं तत्क्षणं नगराध्यक्षान्तिकं निन्युः। स च नगराध्यक्षस्तं (घ) तापसाकारं दृष्ट्वा सान्त्वेन पप्रच्छ,—"भगवन्! कुत इयं मुक्तावली आसादिता? दन्तघाटकन्याया इदमाभरणं हृतम्"। तदाकर्ण्य राजपुत्र-स्तानवादीत्,— (ङ) "भद्राः! गुरुणा ममैषा विक्रेतुं दत्ता, तद्युष्माभिरेत्य स पृच्छ्यताम्" इति।

ततस्तं (च) समुपेत्य नगराधिपः पप्रच्छ,—"भगवन्! इयं मुक्तावली कुतस्तव शिष्यगता?"। एतदाकर्ण्य स धूर्त्तो

—भूषणचौरः, (अलङ्करण+मुष+पचादित्वादच्) तस्य अन्वेषणम्—अनुसन्धानं, (६ष्ठी तत्पु०) तत् अर्थयन्ते—कामयन्ते (अर्थ+णिच्+ग्रहादित्वात् णिनिः) अलङ्करणमोषान्वेषणार्थिनः,—भूषणापहारकान्वेषणकामिनः (विण०)। नगराध्यक्षः,—नगररक्षकप्रधानः, तस्य अन्तिकं—समीपं (६ष्ठी तत्पु०), निन्युः,—प्रापयामासुः (नी+लिट्-उस्। नयतेर्द्विकर्म्मकत्वात् राजसुतनगराध्यक्षान्तिकयोश्च कर्म्मत्वमव-सेयम्)।

(घ) तापसस्य आकार इव आकारः,—मूर्त्तिः यस्य तं (बहुव्री०) तापसा-कारं—तापसवेशधरम्। सान्त्वेन—साम्ना, अतिमधुरवचनेनेत्यर्थः (प्रकृत्यादिभ्यः इया। "अत्यर्थमधुरं सान्त्वम्" इत्यमरः)। पप्रच्छ—जिज्ञासयामास, (प्रच्छ+लिट्-णल्)। भगवन्!—"ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीङ्गणः" ॥ इत्युक्तलक्षणषडैश्वर्य्यसम्पन्न!। आसादिता?—प्राप्ता (आ+सद+णिच्+कर्म्मणि क्तः+स्त्रियां टाप्), त्वया इति शेषः। हृतं—चोरितं (हृ+कर्म्मणि क्तः), केनापि चौरेणेति शेषः।

(ङ) भद्राः!—साधवः! ("भद्रः शिवे खञ्जरीटे वृषभे च कदम्बके।…। त्रिषु श्रेष्ठे च साधौ स्यान्नपुंसि करणान्तरे" ॥ इति मेदिनी)। मम (शेषे ६ष्ठी)। सः,—मद्गुरुः (उक्ते कर्म्मणि १मा), पृच्छ्यतां—जिज्ञास्यतां (प्रच्छ+कर्म्मणि प्रार्थनायां लोट्-ताम्)।

(च) समुपेत्य—समागत्य [सम्+उप+इ+ल्यप् "ह्रस्वस्य पिति कृति तुक्" (६।१।७१ पा०) इति तुक्]। अधि—अधिकृत्य, रक्षकपदाधिकारितये-त्यर्थः, पाति—रक्षति इति अधिपः,—अध्यक्षः इत्यर्थः [अधि+पा+"आतश्चोपसर्गे" (३।१।१३६ पा०) इति कः, "आतो लोप इटि च" (६।४।६४ पा०) इति

मन्त्रिसुतः तं रहसि अवादीत्,—"भद्र! अहं (छ) तपस्वी सदा अस्मिन् इतस्ततो भ्राम्यामि; सोऽहं दैवात् अत्र श्मशाने स्थितो निशि समस्तं योगिनीचक्रं समागतमपश्यम्। (ज) तासु चैकया योगिन्या राजपुत्र एकः उद्घाटितहृदयाम्भोजो भैरवाय निवेदितः। (झ) पानमत्ता च सा जपतो मे मोक्षमालिकां हर्त्तुं महामाया-विविधविकारपूर्णमुखी

---

आकारलोपः], नगरस्य अधिपः नगराधिपः (६ष्ठी तत्पु०)। शिष्य—छात्रं, गता—प्राप्ता शिष्यगता—शिष्यसमीपस्था इत्यर्थः (२या तत्पु०), तव शिष्येण मुक्तावलीयं कथं प्राप्ता? इति सरलार्थः।

(छ) तपः अस्य अस्तीति तपस्वी—तापसः [तपस्+"तपःसहस्राभ्यां विनीनी" (५।२।१०२ पा०) इति विन्]। भ्राम्यामि—विचरामि (भ्रम+लट्-मिप्)। योगिन्यः,—डाकिनीसहचरमातृकाविशेषः, तासां चक्रं—मण्डलं योगिनीचक्रं—योगिनीसमूहमित्यर्थः (६ष्ठी तत्पु०), अपश्यम्—ऐक्षे (दृश+लङ्-अमप्)।

(ज) तासु—योगिनीषु मध्ये (निर्द्धारणे ७मी०)। उद्घाटितम्—उन्मोचितम्, उत्पाटितमित्यर्थः, हृदयाम्भोजं—हृत्पद्मं यस्य सः उद्घाटितहृदयाम्भोजः,—उत्पाटितहृत्कमलः (बहुव्री०), अम्भोजस्य देवानां प्रीतिजननत्वात् तेषामर्चनार्थो तस्य अत्यर्थमुपयोगित्वाच्च हृदये अम्भोजत्वारोपो बोद्धव्यः, किञ्च एतेन कुसुमसुकुमारहृदये शिशावपि या ईदृशं नृशंसमाचरति, सा कदाऽपि न अवलव्या इति गूढाशयोऽपि व्यज्यते इति। भैरवाय—शङ्करस्य गणभेदाय (क्रियायोगे ४र्थी०), निवेदितः,—समर्पितः, उत्सर्गीकृत इत्यर्थः (नि+विद+णिच्+कर्म्मणि क्तः)।

(झ) पानेन—मद्यपानेन, मत्ता—जातमदा पानमत्ता—मद्यपानप्रमत्ता (विश०। ३या तत्पु०)। जपतः,—अस्फुटमन्त्रमुच्चारयतः, (विश०। जप+शतृ, तस्य)। मे—मम (शेषे ६ष्ठी), मोक्षस्य—मोक्षसाधनीभूता इत्यर्थः, मालिका—अक्षमाला स्फाटिकमाला वा इत्यर्थः, तां मोक्षमालिकां—जपमालाम् (अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः), हर्त्तुं—चोरितुं (हृ+तुमुन्), महती माया—छलं (कर्म्मधा०) तया ये विविधाः,—बहवः, विकाराः,—विकृतयः, (३या तत्पु०) तैः पूर्णं—सम्बद्धं, मुखं यस्याः सा महामाया-विविधविकारपूर्णमुखी—कपटविकारादिपरिपूर्णानना (बहुव्री०)।

यावत् प्रावर्त्तत, तावत् एतद्दर्पिता सा क्रुद्धेन मया जघनस्थले त्रिशूलेन मन्त्रप्रज्वलिताश्रिणा अङ्किता, हृता च तस्या इयं मुक्तावली कण्ठात्। तदेषा (ञ) तापसानर्हा विक्रयार्थं प्रेषिता"।

तदाकर्ण्य स नगराध्यक्षो गत्वा राजानं तत् सर्वं (ट) व्यजिज्ञपत्। भूपोऽपि आकर्ण्य तत्, दृष्ट्वा च तां मुक्तावलीं (ठ) प्रेक्षणप्रहिताया दृष्टाया आप्तवनितायाः मुखात् दृश्य-शूलाङ्कां जघने तां पद्मावतीं श्रुत्वा, सत्यमेव ग्रस्तः सुतो

---

प्रावर्त्तत—उदयुङ्क्त (प्र+वृत+लङ्-त)। मन्त्रेण—देवादिसाधनवाक्यविशेषेण ("मन्त्रो वेदविशेषे स्यात् देवादीनाञ्च साधने। गुह्यवादेऽपि च पुमान्" इति मेदिनी), प्रज्वलिता—उद्दीपिता (३या तत्पु०), अश्रिः,—कोणः यस्य तेन मन्त्रप्रज्वलिताश्रिणा—मन्त्रोद्दीपिताग्रभागेणेत्यर्थः, [बहुव्री०। "कोणस्तु स्त्रियः पाल्यश्रिकोटयः" इत्यमरः। "मन्त्रप्रज्वलितास्त्रिणा" इति पाठे तु—मन्त्रप्रज्वलितः अस्रः,—कोणः। "अस्रः कोणे कचे पुंसि क्लीवमस्रुणि शोणिते" इति मेदिनी। मन्त्रप्रज्वलितास्रः (कर्मधा०) सः अस्य अस्तीति तेन इत्यर्थः। अस्त्यर्थे इनिः]। अङ्किता—चिह्निता, (अङ्क+कर्मणि क्तः, स्त्रियां टाप्)।

(ञ) तापसानाम् अनर्हा तापसानर्हा—तपस्विजनायोग्या (विण०। ६ष्ठी तत्पु०)। प्रेषिता—प्रेरिता (प्र+इष+कर्मणि क्तः स्त्रियां टाप्), मयेति शेषः।

(ट) व्यजिज्ञपत्—अवीविदत्, विज्ञापितवान् इत्यर्थः (वि+ज्ञा ज्ञप वा+णिच्+लुङ्-द)।

(ठ) प्रेक्षणाय—दर्शनाय, पद्मावत्याः जघनदेशे शूलचिह्नमस्ति न वा इत्यव-लोकनायेति भावः, प्रहितायाः,—प्रेरितायाः प्रेक्षणप्रहितायाः,—दर्शनार्थं प्रेषितायाः (विण०। ४र्थी तत्पु०), आप्ता—प्रत्ययिता, विश्वस्ता इत्यर्थः, स्वा वा, स्वसम्पर्कीया इत्यर्थः, ("आप्तः प्रत्ययितस्त्रिषु" "आप्तौ लब्धे स्व-सत्ययोः" इत्यमरमेदिन्यौ) सा चासौ वनिता—नारी चेति तस्याः आप्तवनितायाः,—कस्याश्चित् विश्वस्ताया आत्मीय-स्त्रियाः इत्यर्थः (वि०। कर्मधा०। शेषे ६ष्ठी०), मुखात् (अपा० ५मी०), दृश्यः,—दर्शनार्हः, सुस्पष्टत्वादिति भावः, शूलाङ्कः,—शूलचिह्नं यस्याः तादृशीं (बहुव्री०)। ग्रस्तः,—भक्षितः, विनाशित इति भावः (विण०। ग्रस+कर्मणि क्तः),

मेऽनया डाकिन्या इति समुत्पन्ननिश्चयः, स्वयं तस्य मन्त्रिपुत्रस्य तापसवेशिनोऽन्तिकं गत्वा, तस्याः पद्मावत्या निग्रहं पृष्ट्वा च, तस्य वचसा पितृभ्यां शोच्यमानायाः तस्याः पुरान्निर्वासनं दण्डं व्यधात्। साऽपि (ड) निर्वासिता अटवीस्था नग्नाऽपि तद् सर्वं मन्त्रिपुत्रकृतं सम्भाव्य तनुं न जहौ। (ढ) दिनान्ते तौ राजपुत्रमन्त्रिपुत्रौ तापसवेशं त्यक्त्वा अश्वाऽऽरूढौ शोचन्तीं तां प्रापतुः, निन्यतुश्च अश्वमारोप्य

डाकिन्या—कालिकाया गणविशेषेण, योगिन्या इति यावत् (अनुक्ते कर्त्तरि ३या), समुत्पन्नः,—सञ्जातः, निश्चयः,—निर्णयः, सिद्धान्त इत्यर्थः, स्थिरविश्वास इति भावः, यस्य तादृशः समुत्पन्ननिश्चयः,—निःसन्देह इत्यर्थः (बहुव्री०)। तापसवेशिनः,—तपस्विपरिच्छदधारिणः (विण०)। निग्रहं—भर्त्सनं, दण्डमित्यर्थः ("निग्रहो भर्त्सनाभिख्यो मर्य्यादां निग्रहं विदुः" इति शाश्वतः), पृष्ट्वा—जिज्ञासित्वा, अस्याः को दण्डः विधेयः इति पृष्ट्वा इत्यर्थः। माता च पिता च तौ पितरौ ताभ्यां पितृभ्या—मातापितृभ्याम् [अनुक्ते कर्त्तरि ३या। "पिता मात्रा" (१।२।७० पा०) इति एकशेषः], शोच्यमानायाः,—विलप्यमानायाः, कृतशोकायाः इत्यर्थः (विण०। शुच+णिच्+कर्म्मणि शानच्, स्त्रियां टाप् तस्याः): पुरात्—नगरात् (अपा० ५मी०), निर्वासनं—बहिष्करणं (निर्+वस+णिच्+ल्युट्)। व्यधात्—व्यवास्थिपत्, विहितवानित्यर्थः [वि+धा+लुङ्-द "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]।

(ड) निर्वासिता—बहिष्कृता (विण०। निर्+वस+णिच्+कर्म्मणि क्तः स्त्रियां टाप्), अटव्याम्—अरण्ये, तिष्ठति—वर्त्तते या सा अटवीस्था—वनमध्यस्थिता [विण०। अटवी+स्था "सुपि स्थः" (३।२।४ पा०) इति कः "आतो लोपः इटि च" (६।४।६४ पा०) इति आकारलोपः ततः स्त्रियां टाप्], नग्ना—वस्त्रशून्या इति भावः (विण०)। सम्भाव्य—मत्वा (सम्+भू+णिच्+ल्यप्)। न जहौ—न तत्याज [हा+लिट्-णल् "आत औ णलः" (७।१।३४ पा०) इति णलः औकारादेशः]।

(ढ) दिनान्ते—सायं ("दिनान्ते तु सायम्" इत्यमरः)। त्यक्त्वा—विहाय (त्यज+क्त्वा), अश्वम् आरूढः,—अधिष्ठितः [आ+रुह+कर्त्तरि क्तः "हो ढः" (८।२।३१ पा०) इति हस्य ढे कृते "झषस्तथोर्धोऽधः" (८।२।४० पा०) इति तस्य

स्वराष्ट्रम्। तत्र चागत्य स राजपुत्रः (ण) तया साकं सुनिर्वृतस्तस्थौ। दन्तघाटस्तु अरण्ये (त) क्रव्याद्भिर्भक्षितां सुतां मत्वा शोकेन पञ्चत्वमगात्, भार्य्या च तस्य तमनुजगाम"।

इति कथाम् (थ) आख्याय वेतालस्तं नृपमपृच्छत्,—"राजन्! एतयोर्दम्पत्योर्वधात् राजपुत्रस्य मन्त्रिपुत्रस्य वा

धे "ष्टुना ष्टुः" (८।४।४१ पा०) इति धस्य ढे "ढो ढे लोपः" (८।३।१३ पा०) इति प्रातिपदिकस्य ढलोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" (६।३।१११ पा०) इति उकारस्य दीर्घः) तौ अश्वारूढौ—घोटकाधिष्ठितौ, घोटकमारूढावित्यर्थः (विश० । २या तत्पु०), शोचन्तौ—विलपन्तौ (विश० । शुच्+शतृ+स्त्रियां ङीप्)। प्रापतुः अभाति, तत्समीपं जग्मतुरित्यर्थः (प्र+आप+लिट्-अतुस्), निन्यतुः,—प्रापयामासतुः (नी+लिट्-अतुस् नयतेर्द्विकर्म्मकत्वात् तां स्वराष्ट्रम् इति कर्म्मद्वयम्)। आरोप्य—आरोह्य, उत्थाप्येति यावत्, स्वराष्ट्र—निजराज्यम्।

(ण) तया इति (सहार्थकसाकशब्दयोगे ३या), साकं—सह (अव्य० । "साकं सार्द्धं समं सह" इत्यमरः), सु—सुष्ठु, सम्यक् इत्यर्थः, निर्वृतः,—सुस्थः, सुखी इत्यर्थः (विश० । कर्म्मधा० । "निर्वृतिः स्वस्थतावस्तं गमने च सुखे स्त्रियाम्" इति मेदिनी), तस्थौ—अवात्, स्थितवानित्यर्थः, [स्था+लिट्-णल् "आत औ णलः" (७।१।३४ पा०) इति औकारादेशः]।

(त) क्रव्यं—मांसम्, आममांसम् इति यावत्, अत्ति—भक्षयति इति क्रव्यात् (क्रव्य+अद+क्विप्) तैः क्रव्याद्भिः,—अपक्वमांसभोजिव्याघ्रादिहिंस्रपशुभिः ("क्रव्याद्मांसाशिरक्षसोः" इति शाश्वतः)। पञ्चानां—पृथिव्यादिभूतानां भावः पञ्चत्वं—पञ्चता, मरणमित्यर्थः, तत्र हि देहारम्भकभूतानां स्वस्वांशस्य स्वेषु स्वेषु प्रवेशः इति तस्य पञ्चरूपता ज्ञेया [पञ्चन् "तस्य भावस्त्वतलौ" (५।१।११९ पा०) इति त्व। "पञ्चता पञ्चभावेऽपि मरणेऽपि च योषिति" इति मेदिनी]। अनुजगाम—अनुययौ, अनुमृतवतीत्यर्थः (अनु+गम+लिट्-णल्)।

(थ) आख्याय—कथयित्वा (आ+ख्या+ल्यप्)। जाया च पतिश्च तयोः दम्पत्योः,—जायापत्योः, स्वामिस्त्रियोरित्यर्थः, [द्व० । जायाशब्दस्य निपातने दम आदेशः। "राजदन्तादिषु परम्" (२।२।३१ पा०) इति सूत्रे "जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते" इत्युक्तत्वात्। "दम्पती जम्पती जायापती भार्य्यापती च तौ" इत्यमरः]। वधात्—मरणात् इत्यर्थः [हेतौ ५मी० । हन् "हनश्च वधः"

पद्मावत्याः पातकं भवेत्? त्वं हि बुद्धिमतां वरो दृश्यसे, तदत्र मे संशयं छिन्धि। यदि (द) जानन्नपि मे तत्त्वं न वदिष्यसि, तदा ते मूर्द्धा निश्चितं शतधा स्फुटिष्यति, यदि च सदुत्तरं दास्यसि, तदाऽहं पुनस्तव स्कन्धात् तमेव शिंशपातरुमाश्रयिष्ये" इति।

इत्युक्तवन्तं वेतालं राजा त्रिविक्रमसेनस्तं (ध) प्रत्यवादीत्,—"योगेश्वर! किन्ते अज्ञातम्? तथाऽपि वच्मि,—एतेषां त्वयोक्तानां त्रयाणामपि नैव पातकं, केवलं कर्णोत्पलस्य राज्ञ एव तत् पातकं भवति"। वेतालः (न) प्राह स्म,—"राज्ञः को दोषः? ते त्रयः तत्कारकाः; हंसैः शालिषु

(३।३।७६ पा०) इति अप् वधादेशश्च]। भवेत?—जायेत? (भू+प्रश्ने लिङ् यात्)। वरः,—श्रेष्ठः (विण०। "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक्प्रिये" इत्यमरः), दृश्यसे—ईक्ष्यसे (दृश+कर्मणि लट्-से), अस्माभिरिति शेषः। छिन्धि—दूरय, निराकुरु इत्यर्थः, (छिद+लोट्-हि)।

(द) जानन्—विदन् (ज्ञा+शतृ), मे—मम (शेषे ६ष्ठी), तत्त्वं—स्वरूपं, यथार्थमुत्तरमित्यर्थः ("तत्त्वं परमात्मनि। वाद्यभेदे स्वरूपे च" इति हैमः), वदिष्यसि—वक्ष्यसि (वद+लृट्-स्यसि)। मूर्द्धा—मस्तकं, शतधा—शतखण्डेनेत्यर्थः, (शत+प्रकारार्थे धाच्) स्फुटिष्यति—विदरिष्यति (स्फुट+लृट् स्यति)। आश्रयिष्ये—अवलम्बिष्ये, यास्यामीत्यर्थः, (आ+श्रि+लृट्-स्ये)।

(ध) प्रत्यवादीत्—प्रत्यवोचत्, (प्रति+वद+लुङ् द)। योगेश्वर!—योगेन—योगमार्गाश्रयणेन, ईश्वर!—षडैश्वर्यशालिन्! इत्यर्थः, वेतालस्य शिवानुचरभेदत्वात् सम्बोधनोऽयं बोद्धव्यः। ते—तव ["क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति वर्त्तमानार्थस्य क्तस्य योगे कर्त्तरि ६ष्ठी], अज्ञातम्—अविदितं (न+ज्ञा+वर्त्तमाने क्तः)। वच्मि—वदामि (वच+लट्-मिप्)।

(न) प्राह स्म—प्रब्रवीति स्म, प्रोवाचेत्यर्थः [प्र+ब्रू+"लट् स्मे" (३।२।११८ पा०) इति अतीत अर्थे लट्-तिप्, "ब्रुवः पञ्चानामादित आहो ब्रुवः" (३।४।८४ पा०) इति तिपो णल् ब्रुवश्चाऽऽहाऽऽदेशः]। तस्य—वधस्य पापस्य वा, कारकाः,—कर्त्तारः तत्कारकाः,—वधकारिणः पापकारिणो वा (विण०)। शालिषु—

अन्धेषु काकाः किमपराध्यन्ति ?"। ततो राजाऽब्रवीत्,—"ते त्रयो-ऽपि (प) न दुष्यन्ति, मन्त्रिसुतस्य प्रभुकार्य्यमेव हितं, तदत्र सो-ऽपातकी, पद्मावतीराजपुत्रौ हि कामशराग्निना निर्दग्धौ अवि-चारज्ञौ, तस्मात् स्वार्थसम्पादनाददोषौ। राजा तु नीतिशास्त्रेषु सुशिक्षितोऽपि (फ) चारैः प्रजासु तत्त्वमनन्विष्यन् धूर्त्तचरितानि च जानन् अविचारं कृतवानिति स एवात्र पातकी"। इति

कलमादिधान्यविशेषेषु (भावे ७मी। "शालिस्तु गन्धोलौ कलमादिषु" इति हैमः), अन्धेषु—भुक्तेषु, (विश०। अद+कर्म्मणि क्तः "अदो जग्धिर्ल्यप्ति किति" (२।४।३६ पा०) इति जग्धाऽऽदेशः, "झषस्तथो—" (८।२।४० पा०) इति तस्य धाऽऽदेशे "झरो झरि सवर्णे" (८।४।६५ पा०) इति सवर्णधकारे परे जग्धस्य वैभाषिकः धलोपः, तेषु]। अपराध्यन्ति ?—दुष्यन्ति (अप+राध+कर्त्तरि लट्-झि), हंसश्चेत् शालिधान्यं भुञ्जीत तदा काकानां को दोषः ? हंसकृतापराधेन काकदोषाऽऽविष्करणं यथा न युक्तं, तथा राजपुत्रादिभिरनुष्ठिते पातके राज्ञि पातकित्वकल्पना न सङ्गता इति भावः।

(प) न दुष्यन्ति—नापराध्यन्ति (दुष+लट्-झि)। हितं—पथ्यं, कल्याणोदर्कत्वात् आत्मप्रतिष्ठाजननाच्च हितकरमवश्यकर्त्तव्यमित्यर्थः, कर्त्तव्यप्रति पालकस्य पातकाभावः इति भावः [धा+क्तः "दधातेर्हिः" (७।४।४२ पा०) इति हि-आदेशः। "हितं पथ्ये गते धृते" इति मेदिनी। हि+क्तः इति वा]; प्रभुकार्य्यसाधनमेव तस्य अभ्युदयसाधनमिति भावः। न पातकी (नञ् तत्पु०) अपातकी—पातकाभाववान् [न+पातक "अत इनिठनौ" (५।२।११५ पा०) इति इनिः]। कामशरः,—कन्दर्पबाण एव, अग्निः,—अनलः (रूपककर्मधा०) तेन कामशराग्निना—कामानलेनेत्यर्थः (करणे ३या), निर्दग्धौ—भस्मीभूतौ [विश०। निर्+दह+कर्म्मणि क्तः "दादेर्धातोर्घः" (८।२।३२ पा०) इति हकारस्य घकारे "झषस्तथो—" (८।२।४० पा०) इति तस्य च धे कृते "एकाचो बशो भष् झषन्तस्य स्ध्वोः" (८।२।३७ पा०) इति दकारस्य गकारः, तौ], अविचारज्ञौ—विवेकविहीनौ, विचाराक्षमौ इत्यर्थः।

(फ) चारैः,—प्रणिधिभिः, गूढ़पुरुषैरित्यर्थः (करणे ३या। "यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः। चारश्च गूढ़पुरुषः—" इत्यमरः)। अनन्विष्यन्—

(ब) निशम्य स वेतालः तस्य राज्ञः दार्ढ्यं परीक्षितुं मायाबलात् तत्क्षणं तमेव शिंशपातरुमशिश्रियत्। राजाऽपि निःशङ्कः पुनरमुम् (भ) आनेतुं तत्रागात्।

## अथ द्वितीयकथा।

(क) अथ स राजा त्रिविक्रमसेनः पुनस्तं वेतालमानेतुं शिंशपातरुमूलमगमत्। यावत्तत्र (ख) प्राप्तः समन्तात् वीक्षते स्म, तावत् तं वेतालं भूमौ कूजन्तं पतितं ददर्श। ततश्च तस्मिन्

न अनुसन्दधत् (विण०। न+अनु+सम्+धा+शतृ), धूर्त्तानां चरितानि—चरित्राणि धूर्त्तचरितानि—प्रतारकाणामाचरणानि इत्यर्थः (कर्म)।

(ब) निशम्य—श्रुत्वा (नि+शम+ल्यप्)। दृढस्य भावः दार्ढ्यं—स्थैर्य्यं, स्थिरप्रतिज्ञत्वमिति यावत् [दृढ "वर्णदृढादिभ्यः ष्यञ्च" (५।१।१२३ पा०) इति ष्यञ्], परि—सर्व्वतोभावेन, ईक्षितुं—द्रष्टुं परीक्षितुं—परीक्षां कर्त्तुं, ज्ञातुमित्यर्थः (परि+ईक्ष+तुमुन्), माया—इन्द्रजालविद्या, तद्बलात् मायाबलात्—मायाविद्यामाश्रित्य इत्यर्थः (ल्यब्लोपे पञ्चमी०)। अशिश्रियत्—अश्रयीत्, आश्रितवानित्यर्थः (श्रि+लुङ्-द्)।

(भ) आनेतुम्—आनयनं कर्त्तुम् (आ+नी+तुमुन्)।

(क) अथ—अनन्तरं, वेतालस्य शिंशपाद्वयाऽऽश्रयणानन्तरमित्यर्थः, वाक्यारम्भे वा, (अव्य०। "अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्न-कार्त्स्न्यारम्भसमुच्चये॥" इति मेदिनी)।

(ख) प्राप्तः,—गत इत्यर्थः ("सर्वे गत्यर्था ज्ञानार्थाश्च प्राप्त्यर्थाः" इत्युक्तेः। प्र+आप+क्त), समन्तात्—सर्वतः, चतुर्दिक्षु इत्यर्थः (अव्य०। "समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इत्यमरः), वीक्षते स्म—अवलोकते स्म, ददर्श इत्यर्थः [वि+ईक्ष+ "लट् स्मे" (३।२।११८ पा०) इति स्मयोगे अतीते लट्-ते]। कूजन्तम्—अव्यक्तशब्दं कुर्वन्तं, वदन्तमिति यावत् (विण०। कूज+

(ग) नृपे तं मृतदेहस्थं वेतालं स्कन्धमारोप्य जवात् तूष्णीमानेतुं प्रवृत्ते स्कन्धस्थितः स वेतालस्तमब्रवीत्,—"राजन्! मन्ये त्वमसि अनुचिते क्लेशे पतितोऽसि, तस्मात् तव विनोदाय पुनः कथामेकां कथयामि, श्रूयताम्।—

अस्ति (घ) कालिन्दीतटे ब्रह्मस्थलाभिधः कश्चिदग्रहारः। तत्र अग्निस्वामीति (ङ) समभवत् कश्चित् वेदपारगो विप्रः। तस्य अतिरूपवती मन्दारवती नाम कन्यका (च) अजनि, यां

---

शत तम्), पतितं—लुण्ठितं (विण०। पत+क्तः तम्)। ददर्श—दृष्टवान्बभूव (दृश+लिट्-णल्)।

(ग) नृपे—राजनि (भावे ७मी०), मृतदेहे—शवशरीरे, तिष्ठतीति तं मृत-देहस्थं—शवाधिष्ठितं [विण०। मृतदेह+स्था "सुपि स्थः" (३।२।४ पा०) इति कः "आतो लोप इटि च" (६।४।६४ पा०) इति आकारलोपः]। जवात्—वेगात् (ल्यब्लोपे ५मी०। "जवो वेगवति त्रिषु। पुंलिङ्गस्तु भवेत् वेगे—" इति मेदिनी), तूष्णीं—मौनम् (अव्य०। क्रिया विण०)। प्रवृत्ते—उपक्रान्ते (विण०। प्र+वृत+कर्त्तरि क्तः, तस्मिन्)। अनुचिते—अनभ्यस्ते (विण०। "समञ्जसं स्यादुचितमभ्यस्तमुचितं विदुः" इति मेदिनी), क्लेशे (वैषयिके ७मी०)। असि—भवसि [अस+लट्-सिप् "तासस्त्योर्लोपः" (७।४।५० पा०) इति अस्तेः सलोपः], त्वमिति शेषः। विनोदाय—क्रीड़ार्थं, मनोरञ्जनार्थमिति यावत् ["तादर्थ्ये चतुर्थी वाच्या" (वा०) इति ४र्थी०]। श्रूयताम्—आकर्ण्यतां (श्रु+कर्मणि लोट्-तां), त्वया इति शेषः।

(घ) कालिन्दी—यमुना ("कालिन्दी सूर्य्यतनया यमुना शमनस्वसा" इत्यमरः), तस्याः तटे—तीरदेशे (६ष्ठीतत्पु०) कालिन्दीतटे—यमुनातीरे, (सामीप्यार्थे ७मी०), ब्रह्मस्थलम् इति अभिधा—नाम यस्य तादृशः (बहुव्री०), अग्रहारः,—ग्रामः (वि०)।

(ङ) समभवत्—समासीत् (सम्+भू+लङ्-द), वेदानाम्—ऋग्यजुः-सामाथर्वणां चतुर्णां, पारम्—अन्तं गच्छति इति वेदपारगः,—साङ्गवेदेऽधीतीत्यर्थः, [विण०। वेदपार+गम+"अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" (३।२।४८ पा०) इति डः, "टेः" (६।४।१४३ पा०) इति डिति परे टेर्लोपः]।

(च) अजनि—अभूत् [जन+लुङ्-तन् "दीपजनबुध—" (३।१।६१ पा०) इति चिण् "जनिवध्योश्च" (७।३।३५ पा०) इति उपधाया वृद्ध्यभावः "चिणो लुक्"

नवामनर्घलावण्यां निर्म्माय विधिर्नियतं निजं स्वर्गनारीपूर्वनिर्माण-कौशलं जुगुप्सते। (क) तस्यां शैशवातिक्रान्तायां कान्यकुब्जात्

( ६।४।१०४ पा० ) इति चिणः परस्य तलो लुक् ], यां—कन्यकां, नवां—नूतनम्, अनिर्म्मितपूर्वमित्यर्थः, अर्घं—मूल्यम् ( "अर्घः पूजाविधौ मूल्येऽपि" इति मेदिनी ) न—नास्ति. अर्घः यस्य तत् ( बहुव्री० ) अनर्घम्—अमूल्यं, मूल्येनाप्य-क्रय्यमित्यर्थः, अत्युत्कृष्टमिति यावत्, ( "अनर्घं" इत्यत्र "अनघ" इति पाठे— अनघ—मनोज्ञम्। "अनघो निर्म्मलापापमनोज्ञेष्वभिधेयवत्" इति मेदिनी), लावण्यं— "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तलक्षणकः दैहिकसौन्दर्य्यविशेषः यस्यास्ता ( बहुव्री० ), निर्म्माय—सृष्ट्वा ( निर्+मा+ल्यप् ), विधिः,—विधाता, ब्रह्मा इति यावत्, नियतं—निश्चितं सततं वा। स्वर्गे स्थिता नार्य्यः स्वर्गनार्य्यः,—देवयोषितः अप्सरसो वा, ( शाकपार्थिवादिः ) तासां पूर्वं—पूर्वकालिकं, पुराऽवलम्बितमित्यर्थः, यत् निर्म्माणकौशलं—सृष्टिनैपुण्यं तत् ( ६ष्ठी तत्पु० ), जुगुप्सते—निन्दति, नाद्रियते इति यावत्, [ गुप+लट्-ते "गुप्तिज्किद्भ्यः सन्" ( ३।१।५ पा० ) इति सनि कृते "सन्यङोः" ( ६।१।९ पा० ) इति द्विर्भावः। "उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरः ] ; देवयोषिद्भ्योऽपि ( अप्सरोभ्यो वा ) अतीव सुन्दरी सा मन्दारवतीति भावः।

( क ) तस्यां—कन्यकायां ( भावे ७मी० ), शैशवम् अतिक्रान्ता—अपगता ( २या तत्पु०। अति+क्रम+क्तः, स्त्रियां टाप् ) तस्यां शैशवातिक्रान्तायाम्—अपगतबाल्यायां, प्राप्तयौवनायामिति भावः ( विश० ) शैशवम् अतिक्रान्तम्—अपगतं यस्यास्तथाभूतायामिति वा ( बहुव्री० ), कन्याः,—राजर्षिकुशनाभस्य शत-सङ्ख्यकाः कुमार्य्यः, कुब्जाः,—वायुना भग्नदेहाः उन्नतपृष्ठाश्च कृता यत्र नगरे तत् कन्याकुब्जं ( बहुव्री० ) कन्याकुब्जम् एवेत्यर्थे कान्यकुब्जं—"कनौज" इत्याख्यनगरं तस्मात् ( अपा० ५मी०। कन्याकुब्ज+स्वार्थे अण्, पृषोदरादित्वात् रूपसिद्धिः )। कान्यकुब्जस्य विवरणं यथा रामायणे आदिकाण्डे—"कुशनाभस्तु राजर्षिः कन्याशत-मनुत्तमम्। जनयामास धर्म्मात्मा घृताच्यां रघुनन्दन!॥ तास्तु यौवनशालिन्यो रूपवत्यः स्वलङ्कृताः। उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः॥ गायन्त्यो नृत्यमानाश्च वादयन्त्यस्तु राघव!। आमोदं परमं जग्मुर्वराभरणभूषिताः॥ अथ ताश्चारुसर्वाङ्गी रूपेणाप्रतिमा भुवि। उद्यानभूमिमागम्य तारा इव घनान्तरे॥ ताः सर्वा गुण-सम्पन्ना रूपयौवनसंयुताः। दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत्॥ अहं वः

समसर्वगुणोपेतास्त्रयो ब्राह्मणदारकाः समाययुः। (ज) तेषामेकैकः आत्मार्थं तत्पितरं तामयाचत। तत्पिता (झ) प्राणव्ययेऽपि तामन्यस्मै दातुमनिच्छन् तन्मध्यादेकस्मै दातुं मतिमकरोत्। सा तु कन्या (ञ) अन्ययोर्बाधात् भीता कियन्तं कालं न पाणि-

कामये सर्वा भार्य्या मम भविष्यथ। मानुषत्वञ्च्यतां भावो दीर्घमायुरवाप्स्यथ॥ चलं हि यौवनं नित्यं मानुषेषु विशेषतः। अक्षयं यौवनं प्राप्ता अमर्य्यश्च भविष्यथ॥ तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्म्मणः। अपहस्य ततो वाक्यं कन्याशतमथाब्रवीत्॥ अन्तश्चरसि भूतानां सर्व्वेषां सुरसत्तम!। प्रभावज्ञाश्च ते सर्वाः किमर्थमवमन्यसे?॥ कुशनाभसुता देव! समस्ताः सुरसत्तम!। स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम्॥ मा भूत् स कालो दुर्म्मेधः! पितरं सत्यवादिनम्। अवमन्य स्वधर्म्मेण स्वयं वरमुपास्महे॥ पिता हि प्रभुरस्माकं दैवतं परमञ्च सः। यस्य नो दास्यति पिता स नो भर्त्ता भविष्यति॥ तासान्तु वचनं श्रुत्वा हरिः परमकोपनः। प्रविश्य सर्व्वगात्राणि बभञ्ज भगवान् प्रभुः॥" इति। समैः,—तुल्यैः, सर्व्वगुणैः,—दयादाक्षिण्यादिगुणसमूहैः, उपेताः,—युक्ताः समसर्व्वगुणोपेताः,—तुल्यगुणान्विताः (विण०। उप+इ+क्तः, ते), ब्राह्मणदारकाः,—विप्रबालकाः ("दारकौ बालभेदकौ" इत्यमरः), समाययुः,—समाजग्मुः [सम्+आ+या+लिट्-उस् "आतो लोपः इटि च" (६।४।६४ पा०) इत्याकारलोपः]।

(ज) तेषां (निर्द्धारे ६ष्ठी०)। तां—मन्दारवतीम, अयाचत—प्रार्थयत (याच+लङ्-तन्। याचेर्द्विकर्म्मकत्वात् पितरं तामिति कर्म्मद्वयम्)।

(झ) प्राणव्ययेऽपि—जीवननाशेऽपि (भावे ७मी), अन्यस्मै—ब्राह्मणकुमारवर्गेभ्यः इतरस्मै वरायेत्यर्थः (सम्प्र० ४र्थी०)। अनिच्छन्—अनभिलषन् (विण०। न+इष+शतृ), तेषां—ब्राह्मणबटूनां, मध्यात् तन्मध्यात् (६ष्ठी तत्पु०। निर्द्धारे ५मी०), एकस्मै—एकतमाय वराय, युगपत् त्रिभिरेव दुहितुः पाणिग्रहणासम्भवात् इति भावः। मतिम्—इच्छां ("मतिरिच्छामनीषयोः" इति शाश्वतः), अकरोत्—व्यदधात् (कृ+लङ्-द्)।

(ञ) अन्ययोः,—यं स्वपाणिं ग्राहयिष्यति, तदितरयोरित्यर्थः (शेषे ६ष्ठी०), बाधात्—दुःखात, मनःपीडाभयादित्यर्थः, यद्वा—बाधात्—निषेधात्, मां विहाय अन्यं मा उद्वह इति निवारणादित्यर्थः, ["भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इति अपा० ५मी०। "बाधा दुःखे निषेधे च" इति मेदिनी]। कियन्तं कालं

मग्राहयत् । ते च त्रयोऽपि तस्याः ( ट ) मुखेन्दुनिहितदृष्टयः चकोरव्रतमालम्ब्य दिवानिशं तत्रैव तस्थुः ।

अथाकस्मात् समुत्पन्नेन (ठ) ज्वरदाहेन आर्त्ता सा मन्दारवती पञ्चतामवाप । ततस्ते विप्रकुमारास्तां (ड) परासुं दृष्ट्वा शोकार्त्ताः कृतप्रसाधनां श्मशानं नीत्वा अग्निसादकुर्वन् । ततश्च तेषामेकः ( ढ ) तत्र मठं निर्माय तद्भस्मशय्यायां भैक्ष्येण जीवन्न-

---

[ "कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति २या ] न पाणिमग्राहयत्—आत्मानं न पर्य्यणाययत, केनापि इति शेषः ( ग्रह+णिच्+लङ् द ), तेषु कस्यापि न विवाहं कृतवतीत्यर्थः ।

(ट) मुखमिन्दुरिव ( उपमितसमासः ) तस्मिन् मुखेन्दौ—मुखचन्द्रे, निहिता—पातिता, ( ७मी तत्पु० ) दृष्टिः,—नेत्रं यैः येषां वा तथाभूताः सन्तः ( बहुव्री० ), चकोरः,—पक्षिविशेषः, तस्य व्रतमिव व्रतं—नियमविशेषः तत् चकोरव्रतं—चकोरसदाचरणं, चकोरो यथा चन्द्रमण्डलात् क्षरिष्यत्सुधापानतृष्णया नान्यज्जलादिकं पिबति, तामेव प्रतीक्ष्य ऊर्द्धमुखस्तिष्ठति, तथा तेऽपि मन्दारवतीलालसया कार्य्यान्तरं विहाय केवलं तन्मुखार्पितनेत्राः समवर्त्तन्त इति चकोरवत् नियमविशेषमिति भावः, आलम्ब्य—आश्रित्य ( आ+लबि+ल्यप् ), दिवा च निशा च [ "विप्रतिषिद्धञ्चानधिकरणवाचि" ( २।४।१३ पा० ) इति द्वन्द्वैकवद्भावः ] दिवानिशम—अहोरात्रम् ( अत्यन्तसंयोगे २या ) । तस्थुः,—अवास्थिषत [ स्था+लिट्-उस् "आतो—" ( ६।४।६४ पा० ) इति आकारलोपः ] ।

( ठ ) ज्वरेण सह दाहः, ज्वरजनितः दाहो वा तेन ज्वरदाहेन—दाहज्वरेण ( ३या तत्पु० । करणे ३या० ), आर्त्ता—पीड़िता ( विश० । आ+ऋ+क्तः, स्त्रियां टाप् ) । अवाप—प्राप ( अव+आप+लिट् णल् ) ।

( ड ) पराः,—परागताः, असवः,—प्राणाः यस्याः तां परासुं—मृतां ( बहुव्री० । "परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः । मृतप्रमीतौ त्रिष्वेते" इत्यमरः ) । कृतं—विहितं, प्रसाधनं—नववस्त्रपुष्पमाल्यालक्तकादिना भूषणं यस्यास्तादृशीं ( बहुव्री० ) । कृत्स्नं देहमग्निं समापादयन्त इति अग्निसादकुर्व्वन्, कृत्स्नो देहः तस्याः भस्मावशेषः अभूत् इति भावः [ "विभाषा साति कार्त्स्न्ये" ( ५।४।५२ पा० ) इति अग्नि+साति ] अकुर्व्वन्—समपादयन् ( कृ+लङ्-अन् ), तस्या [illegible]क्रियां कृतवन्तः इत्यर्थः ।

( ढ ) तत्र—श्मशाने ( औपश्लेषिकी ७मी० ), मठम्—आश्रमविशेषं, छात्रादि-

तिष्ठत्। (ण) द्वितीयोऽग्नीनि तस्या उपादाय भागीरथ्यां निक्षेप्तुं जगाम। तृतीयस्तु तापसो भूत्वा (त) देशान्तराणि भ्रमितुमगात्। स तु (थ) भ्राम्यन् तापसः वज्रालोकाभिधं ग्रामं प्राप्य कस्यापि विप्रस्य गृहे अतिथिरभूत्; तेन च गृहपतिना पूजितो यावत् तत्र भोक्तुं प्रावर्त्तत, तावत्तस्य एकः शिशुः रोदितुं प्रवृत्तो-

योग्य कुटीरमिति यावत्, ("मठश्छात्रादिनिलयः" इत्यमरवचने आदिपदेन ब्रह्मचारिपरिव्राजकादीनां ग्रहणात्), निर्म्माय—विरचय्य, तस्याः,—मन्दारवत्याः, भस्म—चिताभूतिरेव, शय्या—शयनं तत्र (६ष्ठी तत्पु०, रूपककर्म्मधारयश्च) तद्भस्मशय्यायां—मन्दारवत्याः चिताभस्म शय्यां परिकल्प्य तत्र इत्यर्थः (आधारे ७मी०), भिक्षाणां समूहः भैक्ष्यं तेन (भिक्षा+ष्यञ्) भैक्ष्येण—भिक्षासमूहेन, नित्यभिक्षानुष्ठानेनेत्यर्थः, जीवन्—प्राणन्, प्राणधारणं कुर्व्वन्नित्यर्थः (जीव+शतृ), श्मशाने कुटीरनिर्म्माणं कृत्वा भिक्षान्नेन प्राणान् धारयन् मन्दारवत्याः भस्मोपरि शयनमकरोदित्यर्थः।

(ण) द्वितीयः,—अपरः ब्राह्मणकुमारः। उपादाय—गृहीत्वा (उप+आ+दा+ल्यप्), भागीरथ्यां—गङ्गायां, गङ्गाजले इत्यर्थः (आधारे ७मी०), निक्षेप्तुं—न्यस्तुं (नि+क्षिप+तुमुन्)।

(त) देशान्तराणि—अन्यदेशान्, भ्रमितुं—विचरितुम्।

(थ) भ्राम्यन्—इतस्ततो विचरन् (भ्रम+शतृ)। वज्रालोक इति अभिधा—नाम यस्य तं (बहुव्री०। "आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च" इत्यमरः)। अतति—गच्छति, एकां निशां न तिष्ठति इति अतिथिः,—आगन्तुः [विधे० विश०। अत "ऋतन्यञ्जि—(४।२ उ०) इति इथिन् प्रत्ययः] नास्ति तिथिः,—प्रतिपदादिरस्य इति अतिथिरिति वा, यः प्रतिपदादितिथिनियममविगणय्यैव यस्मिन् कस्मिन् दिने आगच्छति सः अतिथिरित्यर्थः, तदुक्तं,—"तिथिपर्व्वोत्सवाः सर्वे त्यक्ता येन महात्मना। अतिथिः स हि विज्ञेयः शेषः प्राघुणिकः स्मृतः॥" इति। (बहुव्री०। "गुरावैश्य आगन्तुरतिथिर्ना गृहाऽऽगते" इत्यमरः)। गृहपतिना—गृहस्थेन, गृहस्वामिनेति यावत् (कर्म्मणि ३या०। "भवेत् गृहपतिः पुंसि गृहस्थेऽपि च सत्रिणि" इति मेदिनी), पूजितः,—पाद्यार्घ्यादिना अर्च्चितः (पूज+वर्त्तमाने क्तः)। भोक्तुम्—अत्तुं (भुज+तुमुन्), प्रावर्त्तत—उपाक्रमत (प्र+वृत+लङ्-त)। रोदितुं—क्रन्दितुं (रुद+तुमुन्)।

ऽभवत् । स च शिशुः (द) सान्त्व्यमानोऽपि यदा न व्यरंसीत् तदाऽस्य गृहिणी तं बाह्वावादाय ज्वलत्यग्नौ क्रुधा प्राक्षिपत् ; क्षिप्त एव स कोमलाङ्गस्तत्क्षणात् भस्मसादभूत् । तदवलोक्य स तापसः (ध) सञ्जातरोमाञ्चः प्राब्रवीत्,—"हा धिक् ! कष्टं ! प्रविष्टोऽहं ब्रह्मराक्षसवेश्मनि, तस्मात् मूर्त्तं किल्बिषमिदमन्नं

(द) सान्त्व्यमानः,—अनुकूलीक्रियमाणः, मधुरवचनादिना प्रबोध्यमानोऽपीत्यर्थः ( सान्त्व+णिच्+कर्म्मणि शानच् ), मातादिभिरिति शेषः । व्यरंसीत्—व्यरमत् [ वि+रम+लुङ्-द "व्याङ्परिभ्यो रमः" ( १।३।८३ पा० ) इति परस्मैपदम् ]। अस्य—गृहस्थविप्रस्य । बाह्वौ—भुजे ( औपश्लेषिके ७मी० )। ज्वलति—दीप्यमाने ( ज्वल+शतृ ) । क्रुधा—क्रोधेन (इतो ३या । "कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियाम्" इत्यमरः ), प्राक्षिपत्—न्यस्यत् ( प्र+क्षिप+लङ्-द )। क्षिप्तः,—पातितः ( विण० । क्षिप+क्तः )। कोमलानि—मृदूनि, अङ्गानि—अवयवा यस्य सः कोमलाङ्गः,—सुकुमारदेहः ( बहुव्री० )। कृत्स्नो देहः भस्म सम्पद्यते इति भस्मसात् [ "विभाषा साति कार्त्स्न्ये" ( ५।४।५२ पा० ) इति भस्मन्+साति ] अभूत् —भस्मावशेषः अजनि इत्यर्थः ।

(ध) सञ्जातः,—समुत्पन्नः, रोमाञ्चः,—रोमहर्षणं, रोमोद्गमः इति यावत् यस्य सः सञ्जातरोमाञ्चः,—घृणया भयेन वा कण्टकिततनुः सन् इत्यर्थः ( बहुव्री० )। हा !—इति खेदसूचकमव्ययं, धिक् !—इति आत्मनिर्भर्त्सनसूचकमव्ययं, कष्ट—कृच्छ्रम्, अतीव दुःखाऽऽवहमित्यर्थः, एतत्तु अतीव क्लेशकरं यत्, अहं विशेषमज्ञात्वैव बालघातिनः अस्य महापातकिनः गृहमागतोऽस्मि, अतो मां धिक् इति आत्मभर्त्सनमिति फलितम् । प्रविष्टः,—उपस्थित इत्यर्थः ( प्र+विश+कर्त्तरि क्तः )। ब्रह्मा—विप्रोऽपि, राक्षसः,—कुकर्म्मभिः राक्षसयोनिं गतः ब्रह्मराक्षसः,—राक्षसरूपतां प्राप्तः भूतविशेष इत्यर्थः, "अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः" इति मनूक्तत्वात् ; ब्रह्मराक्षस इव आचारविशिष्ट इत्यर्थः, तस्य वेश्मनि—गृहे ( अधिकरणे ७मी० । "गृहगेहोदवसितं वेश्म सद्म निकेतनम्" इत्यमरः )। मूर्त्तं—मूर्त्तिमत्, देहधारि इत्यर्थः ( विण० । "मूर्त्तं स्यात् त्रिषु मूर्च्छाले कठिने मूर्त्तिमत्यपि" इति विश्वः ), किल्बिषं—पापं, पापजनकमित्यर्थः ( "अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्" इत्यमरः ), राक्षसवत् बालहननात् पापिनोऽस्य विप्रस्य अन्नेऽपि पापजनकत्वारोपः, पापान्नस्य अग्राह्यत्वादिति भावः ।

नाधुना भक्षयामि"। (न) एवंवादिनं तमतिथिं स गृहस्थः प्रत्यवादीत्,—"ब्रह्मन्! पश्य मे पठितसिद्धस्य मृतसञ्जीवनीं शक्तिम्" इत्युक्त्वा पुस्तकमुद्घाट्य, तां विद्यां वहिष्कृत्य, अनुवाच्य च तस्मिन् भस्मनि जलमक्षिपत्; क्षिप्तमात्रे च जले स पुत्रस्तथैव जीवन्नुदतिष्ठत्। ततः स तापसः (प) सुनिर्वृतस्तत्र सहर्षं बुभुजे। गृहस्थोऽपि स (फ) नागदन्तके पुस्तकमवस्थाप्य, भुक्त्वा तेन तापसेन सह रात्रौ शयनमभजत।

अथ (ब) सुप्ते गृहपतौ स तापसः स्वैरमुत्थाय शङ्कितः स्व-

(न) एवंवादिनम्—इत्युक्तवन्तं (विश०। एवं+वद+ग्रहादित्वात् णिनि, तम्)। पठितेन—गुरोरध्ययनेन, सिद्धः,—सिद्धिं प्राप्तः, पुनःपुनरभ्यासानुष्ठानादिना आयत्तीकृतविद्य इत्यर्थः, तस्य पठितसिद्धस्य—अधीतस्य अध्ययनसाफल्यं प्राप्तस्य चेत्यर्थः (विश०। ३या तत्पु०)। मृतः,—गतप्राणः, सञ्जीव्यते—प्राण्यते, जीवनयुक्तः क्रियते इत्यर्थः, अनया तां मृतसञ्जीवनीं—प्रेतोज्जीवनीं [विश०। सम+जीव "करणाधिकरणयोश्च" (३।३।११७ पा०) इति ल्युट्, स्त्रियां ङीप्]। उद्घाट्य—उन्मुच्य, निरावरणं कृत्वेत्यर्थः (उत्+घट+णिच्+ल्यप्)। विद्यां—सञ्जीवनमन्त्रमित्यर्थः, "तस्य विद्या न सिध्यति" इति श्यामारवे विद्याशब्दस्य मन्त्रार्थकत्वदर्शनात्; वहिष्कृत्य—प्रकाशीकृत्य (वहिस्+कृ+ल्यप्), अनुवाच्य—वाचयित्वा, पठित्वेत्यर्थः (अनु+वच+णिच्+ल्यप्)। उदतिष्ठत्—उत्तिष्ठति स्म, उत्थितोऽभवदित्यर्थः (उत्+स्था+लङ्-द्)।

(प) सु—अतिशयेन, निर्वृतः,—सुखी सुनिर्वृतः,—सन्तुष्ट इत्यर्थः (प्रादिसमासः)। हर्षेण सह वर्तमानं यथा स्यात्तथा सहर्षं—सानन्दं (क्रिया विश०। बहुव्री०), बुभुजे—आद [भुज+लिट्-ए "भुजोऽनवने" (१।३।६६ पा०) इति आत्मनेपदम्]।

(फ) नागदन्तके—हस्तिदन्ते, हस्तिदन्तनिर्मिताऽऽधारविशेषे इत्यर्थः, यद्वा—गृहभित्तिप्रोथिते भित्तिनिर्गते काष्ठखण्डविशेषे इत्यर्थः, (आधारे ७मी०। "नागदन्तो द्विपरदे गृहान्निर्गतदारुणि" इति मेदिनी)। अवस्थाप्य—संरक्ष्य (अव+स्था+णिच्+ल्यप्)। शयन—शय्याम्, अभजत—आश्रयत (भज+लङ्-त)।

(ब) सुप्ते—निद्रिते [विश०। स्वप्+कर्त्तरि क्तः "वचिस्वपियजादीनां

प्रियाया मन्दारवत्या जीवनार्थं तां पुस्तिकामग्रहीत्। गृहीत्वैव तस्मात् (भ) निर्गत्य रात्रिन्दिवं व्रजन् शनैस्तत् श्मशानमासदत्; अद्राक्षीच्च सहसा तं द्वितीयम् उपस्थितं, यो हि गङ्गाऽम्भसि तदस्थि क्षेप्तुमगात्। अथ प्राप्य च (म) तत्रस्थं तस्या भस्मनि शायिनं तृतीयं निबद्धमठं स तापसः प्रोवाच,—"मठिका

ङकिति" (६।१।१५ पा०) इति सम्प्रसारणम्], गृहपतौ—गृहस्वामिनि (भावे ७मी०)। स्वैरं—मन्दं, निःशब्दमित्यर्थः (क्रिया विश०। "मन्दस्वच्छन्दयोः स्वैरः" इत्यमरः), उत्थाय—उद्गम्य, उत्थितो भूत्वा इत्यर्थः [उत+स्था+ल्यप् "उदः स्थास्तम्भोः पूर्वस्य" (८।४।६१ पा०) इति निष्पत्तेः सकारस्य सवर्णथकारभावे सति "झरो झरि सवर्णे" (८।४।६५ पा०) इति थकारस्य लोपः], शङ्का सञ्जाता अस्य इति शङ्कितः,—भीतः (विश०। तारकादित्वादितच्), चौरकर्मकरणादिति भावः। जीवनाय इदं जीवनार्थं—प्राणदानार्थम् ["अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" (वा०) इति नित्यसमासः]। अग्रहीत्—आदत्त (ग्रह+लुङ्-द)।

(भ) निर्गत्य—बहिर्भूय (निर+गम+ल्यप्-तुक् च), रात्रौ च दिवा च रात्रिन्दिवम्—अहर्निशम् ["अचतुर—"(५।४।७७ पा०) इत्यादिना रात्रेर्मान्तत्वं निपात्यते], व्रजन्—गच्छन् (व्रज+शतृ), शनैः,—मन्दं मन्दम्, अद्रुतमित्यर्थः, अन्त्यगमनेनेति यावत् (व्रजन् इति क्रियायाः विश०)। आसदत्—प्रापत् (आ+सद+लुङ्-द), अद्राक्षीत्—ऐक्षिष्ट (दृश+लुङ्-द)। उपस्थितं—समागतं [विश०। उप+स्था+कर्त्तरि क्तः "स्थाघ्वोरिच्च" (१।२।१७ पा०) इति इदादेशे "आतो लोप इटि च" (६।४।६४ पा०) इति आकारलोपः]। गङ्गाऽम्भसि—गङ्गाजले (अधिकरणे ७मी०)।

(म) तत्र—तस्मिन् श्मशाने, तिष्ठतीति तं तत्रस्थं—श्मशानवासिनं [विश०। तत्र+स्था "सुपि स्थः" (३।२।४ पा०) इति कः "आतो लोप—"(६।४।६४ पा०) इति आकारलोपः सप्तम्या अलुक् च]। शेते इति शायिन् तं शायिनं—शयानं (विश०। शी+ग्रहादित्वात् णिनिः), तृतीयं—ब्राह्मणकुमारमिति भावः, निबद्धः,—विरचितः, मठः,—कुटीरविशेषः येन तं निबद्धमठं—निर्मितनिलयं (बहुव्री०)। प्रोवाच—समाष [प्र+वच+लिट्-णल् "लिट्यभ्यासस्योभयेषाम्" (६।१।१७ पा०) इति अभ्यासस्य सम्प्रसारणम्], अल्पो मठः मठकः,—क्षुद्रो मठ इत्यर्थः ["अल्पे" (५।३।८५ पा०) इति मठ+कन्, ततः स्त्रियां टाप् मठिका "प्रत्ययस्थात् कात्

त्यज्यतां भ्रातः! प्रियां तामहमुत्थापयामि” इति। ततः (य) ताभ्यां निर्बन्धतः परिपृष्टः पुस्तिकामुद्घाट्य मन्त्रमनुवाच्य मन्त्रपूतानि जलानि तस्मिन् भस्मनि प्राक्षिपत्; क्षिप्तमात्रेषु जलेषु सा मन्दारवती जीवन्ती सहसा समुत्तस्थौ। तदा सा क्रान्त्या वह्निं (र) प्रणम्य निष्क्रान्ता पूर्वाधिकद्युति काञ्चनेनेव निर्मितं वपुर्बभार। (ल) तादृशीं तां पुनर्जीवितां वीक्ष्य त्रयोऽपि

---

पूर्व्वस्थात इदाप्यसुपः” (७।३।४४ पा०) इति पूर्व्वस्य अकारस्य इकारः], त्यज्यतां—मुच्यतां (त्यज+कर्म्मणि लोट्-ताम्)। उत्थापयामि—उत्तोलयामि, जीवयामीत्यर्थः [उत+स्था+णिच्+लट्-मिप् “उदः स्था—” (८।४।६१ पा०) इति तिष्ठतेः सकारस्य सवर्णथकारभावे सति “झरो झरि सवर्णे” (८।४।६५ पा०) इति थकारलोपः]।

(य) ताभ्यां—द्वितीयतृतीयब्राह्मणकुमाराभ्यां, निर्बन्धतः,—आग्रहातिशयेन, निर्बन्धं कृत्वा इत्यर्थः (ल्यब्लोपे पञ्चमी०), परिपृष्टः,—जिज्ञासितः [विण०। परि+प्रच्छ+कर्म्मणि क्तः “व्रश्चभ्रस्ज—” (८।२।३६ पा०) इति षकारादेशः, “ग्रहिज्या—” (६।१।१६ पा०) इति प्रच्छतेः सम्प्रसारणं, ततः “ष्टुना ष्टुः” (८।४।४१ पा०) इति तस्य टभावः], पुस्तिकां—क्षुद्रपुस्तकं [पुस्तक+स्त्रियां टाप् “प्रत्ययस्थात् कात्—” (७।३।४४ पा०) इति पूर्व्वस्य अकारस्य इकारः]। मन्त्रेण—देवादिसाधनवाक्यविशेषेण, (“मन्त्रो वेदविशेषे स्यात् देवादीनाञ्च साधने। गुह्यवादेऽपि च पुमान्” इति मेदिनी) पूतानि—पवित्रीकृतानि मन्त्रपूतानि—मन्त्रसंस्कृतानि (३या तत्पु०)। जीवन्ती—प्राणन्ती, जीवनं प्राप्नुवन्तीत्यर्थः (जीव+शतृ+स्त्रियां ङीप्), समुत्तस्थौ—उत्थितवती सा, उत्थिता बभूवेत्यर्थः [सम+उत्+स्था+लिट्-णल् “आत औ णलः” (७।१।३४ पा०) इति णल औकारादेशः]।

(र) प्रणम्य—नमस्कृत्य (प्र+णम+ल्यप्), निष्क्रान्ता—निर्गता [विण०। निर्+क्रम+कर्त्तरि क्तः “अनुनासिकस्य क्विझलोः क्ङिति” (६।४।१५ पा०) इति उपधादीर्घः], पूर्व्वस्मात्—मृत्योः पूर्व्वकालमपेक्ष्येत्यर्थः, अधिका—भूयसी, द्युतिः,—कान्तिः यत्र तादृशं पूर्वाधिकद्युति—पूर्वादप्यतिशयितप्रभं (बहुव्री०)। निर्मितं—रचितं [निर्+मा+कर्म्मणि क्तः “द्यतिस्यतिमास्थामित्ति किति (७।४।४० पा०) इति आकारस्य इकारः], वपुः,—शरीरं (गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः” इत्यमरः), बभार—दधार, प्रापेत्यर्थः (भृ+लिट्-णल्)।

(ल) तादृशीं—गतजीविताम्। वीक्ष्य—दृष्ट्वा, (वि+ईक्ष+ल्यप्)। अरेण

ते स्मरातुराः तद्‌दास्यर्थमन्योऽन्यं कलहं चक्रुः । एकेनोक्तम्—'इयं (ब) मम मन्त्रबलात् जीविता, तदेषा ममैव भार्य्या'। अपरोऽब्रवीत्,—'मदीयेन (श) तीर्थभ्रमणपुण्येन इयं जीविता, तदेषा ममैव भार्य्या'। तृतीयेन (ष) अभिहितं,—'मया भस्मानि रक्षितानि,' तत एवेयं जीविता, तस्मात् ममैवेयं प्रणयिनी' इति।

हे महीपते ! तेषां (स) विवादनिर्णये त्वमेव शक्तः ; तत् ब्रूहि, कन्याऽसौ कस्य एतेषां भार्य्या भवितुमर्हति? यदि जानन्

---

—कामेन, ("कामः पञ्चशरः स्मरः" इत्यमरः) आतुराः,—पीड़िताः स्मरातुराः,—कामबाणपीड़िताः (३या तत्पु०)। अन्योऽन्यं—परस्परं, कलहं—भण्डनं, खलीकारमित्यर्थः, वितण्डामिति यावत्, विग्रह्य कथनमिति भावः, वादम् इति वा ("कलहं युधि वादे ना खड्गकोषे च भण्डने" इति मेदिनी), चक्रुः,—विदधुः (कृ+लिट्-उस्)।

(ब) मम मन्त्रबलं—मन्त्रप्रभावः तस्मात् मन्मन्त्रबलात्—मम मन्त्रशक्तितः, मम मन्त्रबलं प्राप्य इत्यर्थः (ल्यब्लोपे ५मी०), जीविता—प्राणिता, प्राप्तजीवना (विण० । जीव+कर्त्तरि क्तः स्त्रियां टाप्)। ध्रियते या सा भार्य्या—पत्नी (भृ+कर्म्मणि ण्यत् स्त्रियां टाप्)।

(श) तीर्थेषु—काश्यादिपुण्यक्षेत्रेषु, ऋषिजुष्टजलेषु वा, गङ्गागोदावरीप्रभृतिषु इत्यर्थः, ("तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" ॥ इति मेदिनी) यत् भ्रमणं—प्रव्रजनं, तेन यत् पुण्यं—सुकृतं तेन तीर्थभ्रमणपुण्येन—काश्यादि (गङ्गादि) स्नानविचरणजनितधर्म्मसञ्चयेन (हेतौ ३या)।

(ष) अभिहितम्—उक्तम् [अभि+धा+कर्म्मणि क्तः "दधातेर्हिः" (७।४।४२ पा०) इति धाञो हिः]। रक्षितानि—जलानिलादिभ्यः यत्नतः स्थापितानीत्यर्थः (रक्ष+कर्म्मणि क्तः, तानि)। प्रणयिनी—भार्य्या इति यावत्।

(स) विवादनिर्णये—वैतण्डिकविषयस्य याथार्थ्यावधारणे (विषये ७मी०)। शक्तः,—समर्थः (शक्+कर्त्तरि क्तः)। ब्रूहि—वद (ब्रू+लोट्-हि)। एतेषां—ब्राह्मणकुमाराणां त्रयाणां मध्ये (निर्द्धारे ६ष्ठी०)। अर्हति—युज्यते (अर्ह+लट्-

मृषा वदिष्यसि, तदा ते मूर्द्धा विदलिष्यति"। इति वेतालादाकर्ण्य स राजा एवम् (ङ) अभ्यधात्,—"यः क्लेशेन मन्त्रमानीय एनामजीवयत्, स खलु पितृकार्य्यकरणात् न पतिः। यश्च तस्या अस्थीनि गङ्गायां क्षेप्तुं गतः, स (क) पुत्रकार्य्यकरणात् न पतिः। यस्तु तद्भस्मशय्यां (ख) समाश्लिष्य तपश्चचार श्मशान एव, स एवास्याः प्रणयिकार्य्यकरणात् पतिर्भवितुमर्हति" इति।

इत्थं नृपात् त्रिविक्रमसेनादाकर्ण्य स वेतालस्तस्य (ग) स्कन्धादतर्कितं स्वपदं प्रायात्। राजा च भिक्षुकार्य्यार्थं

तिप्)। मृषा—मिथ्या ("मृषा मिथ्या च वितथे" इत्यमरः)। विदलिष्यति—स्फुटिष्यति (वि+दल+लृट्-स्यति)।

(ङ) अभ्यधात—अवोचत् [अभि+धा+लुङ्-द "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]। आनीय—आनयनं कृत्वा (आ+नी+ल्यप्)। एनां—मन्दारवतीम् [अकर्मकत्वात् प्रयोज्यकर्त्तरि २या "द्वितीयाटौस्स्वेनः" (२।४।३४ पा०) इति अन्वादेशे द्वितीयैकवचने एतद एनाऽऽदेशः], अजीवयत्—प्राणयत, जीवितामकरोदित्यर्थः, (जीव+णिच्+लङ्-द)। पितुः,—जनकस्य, यत् कार्य्यं—जन्मदानरूपमित्यर्थः, तस्य करणात्—विधानात् पितृकार्य्यकरणात्—जनककर्त्तव्यानुष्ठानात् (इतौ ५मी०); गतजीवितायास्तस्याः पुनर्जन्मप्रदत्वेन प्रथमब्राह्मणकुमारस्य पितृत्वं ज्ञेयम्।

(क) पुत्रस्य—तनयस्य, यत् कार्य्यम्—अग्निसत्कारास्थिचयनादिकमौर्द्ध्वदेहिकं कर्म, तस्य करणात्—सम्पादनात् पुत्रकार्य्यकरणात्—तनयकृत्यसम्पादनात् (इतौ ५मी०)।

(ख) समाश्लिष्य—समालिङ्ग्य (सम्+आ+श्लिष+ल्यप्), तपः,—तपस्यां, चचार—अनुतस्थौ (चर+लिट्-णल्)। प्रणयिनः,—प्रेमास्पदस्य, पत्युरिति यावत्, यत्—कार्य्यं—पत्नीवियोगनिर्वेदात् संसारासक्तिं विहाय तस्या एव सततस्मरणगुणकीर्त्तनादिकं कर्म, तत्करणात् प्रणयिकार्य्यकरणात्—भर्तृकर्त्तव्यप्रतिपालनात्।

(ग) स्कन्धात् (अपा ५मी०), न तर्कितं—तर्कः, विचार इत्यर्थः, यस्मिन् कर्मणि तत् (बहुव्री०। क्रिया विण०) अतर्कितम्—अविचारितं, किञ्चिदपि विलम्ब-

पुनस्तं (घ) प्राप्तुं मनो बबन्ध ; प्राणात्ययेऽपि महासत्त्वाः प्रतिपन्नमर्थम् असाधयित्वा न निवर्त्तन्ते।

## अथ तृतीयकथा।

अथ राजा पुनरपि तं वेतालमानेतुं तं (क) शिंशपातरुमभ्यगच्छत्, प्राप्य च तत्रस्थं मृतदेहगतं तं स्कन्धे गृहीत्वैव तूष्णीं गन्तुं प्रावर्त्तत। अथ (ख) प्रयान्तं तं स वेतालः पुनरवोचत्,

---

गत्वैव इत्यर्थः, सहसैति यावत्, तद्यथा तथा, स्वपदं—निजस्थानं, शिंशपातरुमिति यावत् ("पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः), प्रायात्—प्रातिष्ठत (प्र+या+लङ्-द)।

(घ) प्राप्तुं—लब्धुम, आनेतुमित्यर्थः। बबन्ध—संयेमे, दृढीचकारेत्यर्थः (बन्ध+लिट्-णल्), प्राणात्ययेऽपि—जीवनापगमेऽपि, जीवनविनाशसम्भावनायां सत्यामपीत्यर्थः (भावे ७मी०), महत्—उदारं, सत्त्वं—स्वभावः येषां ते, यद्वा,—महत—प्रभूतं, सत्त्वं—बलं येषां ते महासत्त्वाः,—उदारचरिताः महाबला वा (बहुव्री०। "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति मेदिनी), प्रतिपन्नम्—अङ्गीकृत, स्वीकृतमित्यर्थः (विश०। प्रति+पद+कर्मणि क्तः, तं "प्रतिपन्नोऽन्यलिङ्गः स्यात् विज्ञातेऽङ्गीकृतेऽपि च" इति मेदिनी), अर्थं—वस्तु, प्रयोजनं वा, अङ्गीकृतविषयमित्यर्थः ("अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु। प्रयोजने निवृत्तौ च विषये च प्रयुज्यते" ॥ इति शाश्वतः), असाधयित्वा—असम्पाद्य (न+साध+णिच्+क्त्वा), न निवर्त्तन्ते—न विरमन्ति (नि+वृत+लट्-अन्ते)।

---

(क) शिंशपातरुं—शिंशपानामकः तरुः तं (शाकपार्थिवादित्वात् समासः। कर्मणि २या०) अभ्यगच्छत—अभ्ययात् (अभि+गम+लङ्-द)। मृतदेहं—प्रेतशरीरं, गतः,—प्राप्तः तं मृतदेहगतं—शवदेहाधिष्ठितं (२या तत्पु०)। प्रावर्त्तत—आरभत (प्र+वृत+लङ्-त)।

(ख) प्रयान्तं—प्रगच्छन्तं (विश०। प्र+या+शतृ तम्)। अवोचत्—

—"राजन्! निशि गमागमं कुर्वन् नितरां खिद्यसे, अतस्त्वां विनोदयन् पुनः कथां वर्णयामि, शृणु,—

अस्ति पाटलिपुत्रं नाम भूमण्डलख्यातं नगरम्। (ग) पुराऽऽसीत् तत्र नृपतिः विक्रमकेशरी नाम, यं गुणानामिव रत्नानामाश्रयं विधिर्व्यधात्। तस्य (घ) विदग्धचूडामणिर्नाम दिव्यविज्ञानवान् सर्वशास्त्रवित् शापावतीर्ण एकः शुक आसीत्।

---

अवादीत् [ वच+लुङ्-द् "अस्यतिवक्तिख्यातिभ्योऽङ्" ( ३।१।५२ पा० ) इति कृते अङि परे "वच उम्" ( ७।४।२० पा० ) इति उम् ]। गमागमं—गमनागमनम्। नितराम्—अत्यर्थम् ( अव्य० ), खिद्यसे—क्लिश्यसि ( खिद+कर्त्तरि लट्-से )। विनोदयन्—प्रीणयन्, तव प्रीत्यर्थमित्यर्थः [ वि+नुद+णिच् "लक्षणहेत्वोः क्रियायाः" ( ३।२।१२६ पा० ) इति हेतौ अर्थे लटः शतृ ], तव विनोदनफलकं मे कथावर्णनमित्यर्थः। वर्णयामि—कथयामि ( वर्ण+णिच्+लट्-मिप् )।

( ग ) पुरा—पूर्व्वकाले इत्यर्थः। यं—नृपतिं, गुणानामिव रत्नानामाश्रयं—यथा गुणानां तथा रत्नानामपि आधारमित्यर्थः, गुणवान् धनवांश्च स राजा आसीत् इति भावः; विधिः,—विधाता [ वि+धा "उपसर्गे घोः किः" ( ३।३।९२ पा० ) इति किः "आतो लोपः—" ( ६।४।६४ पा० ) इति आकारलोपः ], व्यधात्—अकार्षीत् [ वि+धा+लुङ्-द् "गातिस्था—" ( २।४।७७ पा० ) इति सिचो लुक् ]।

(घ) विदग्धानां—पण्डितानां, चूडामणिरिव चूडामणिः,—शिरःरत्नं विदग्धचूडामणिः,—पण्डितशिरोभूषणं, विद्वद्वर इत्यर्थः (६ष्ठी तत्पु०), दिव्यम्—अलौकिकं, विज्ञानं—शिल्पशास्त्रयोः ज्ञानं ("मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः" इत्यमरः), यद्वा,—दिव्यं विज्ञानं—कर्म्म ( "विज्ञानं ज्ञानकर्म्मणोः" इति मेदिनी ) दिव्यविज्ञानं ( कर्म्मधा० ) तदस्य अस्तीति दिव्यविज्ञानवान्—अलौकिकज्ञानसम्पन्नः अलौकिककर्म्मकारी वा (विण० । अस्त्यर्थे मतुप्), सर्व्वशास्त्रं वेत्ति—जानाति इति सर्व्वशास्त्रवित् —निखिलशास्त्रज्ञः [ विण० । सर्व्वशास्त्र+विद् "सत्सूद्विष—" ( ३।२।६१ पा० ) इति क्विप् ], शापेन—आक्रोशेन, द्विजगुरुप्रभृतिद्वारा "अनिष्टं ते भूयात्" इत्येवमनिष्टाभिशंसनेनेत्यर्थः, ( "शापः आक्रोशदिव्ययोः" इति मेदिनी ) अवतीर्णः,—अवरूढः, प्रादुर्भूत इति यावत्, शापावतीर्णः,—अभिशापेनाधःपतित इत्यर्थः ( विण० । ३या तत्पु० ), शुकः,—पक्षिविशेषः।

तस्य नृपस्य (ङ) आत्मजः शशी नाम शुकोपदेशेन मगधदेश-नृपतिकन्यां चन्द्रप्रभां नाम उपयेमे। तस्या अपि राजपुत्र्याः (च) तथाभूता ज्ञानविज्ञानशालिनी सोमिका नाम शारिका-ऽभूत्; अथ तौ शारिकाशुकौ एकपञ्जरस्थौ राजवेश्मनि आस्ताम्।

एकदा (छ) साभिलाषः स शुकस्तां शारिकामब्रवीत्,—"सुभगे! एकशय्याऽऽसनाऽऽहारविहारेषु मां भज" इति।

---

(ङ) आत्मनो जायते—उत्पद्यते इति आत्मजः,—पुत्रः [ विशे०। आत्म+जन "पञ्चम्यामजातौ" (३।२।९८ पा०) इति डः ]। उपयेमे—परिणिनाय, विवाहं चकारेत्यर्थः [ उप+यम+लिट्-ए "उपाद्यमः स्वकरणे" (१।३।५६ पा०) इति आत्मनेपदम् ]।

(च) तथाभूता—शुकसदृशी (विशे०), ज्ञानं—शास्त्रज्ञानं, विज्ञानं—कार्य्यज्ञानं, कर्म्मोपयोगिनी बुद्धिरित्यर्थः, यद्वा,—विज्ञानं—शास्त्रार्थनिर्णयः ताभ्यां ज्ञान-विज्ञानाभ्यां—शास्त्रज्ञानकर्म्मसामर्थ्याभ्यां शास्त्रज्ञानतद्गूढार्थनिश्चयाभ्यां वा, शालते—शोभते या सा ज्ञानविज्ञानशालिनी—प्रशस्तज्ञानविज्ञानमण्डिता (ज्ञानविज्ञान+शाल+ग्रहादित्वात् णिनिः, स्त्रियां ङीप्)। शारिका—पक्षिणीविशेषः। एकस्मिन् पञ्जरे—पिञ्जरे, पक्ष्यादिबन्धनगृहे इत्यर्थः, तिष्ठतः इति एकपञ्जरस्थौ—अभिन्नपिञ्जर-वर्त्तिनौ [ विशे०। एकपञ्जर+स्था+"सुपि स्थः" (३।२।४ पा०) इति कः "आतो लोपः—" (६।४।६४ पा०) इति आकारलोपः ], राज्ञः,—नृपस्य, वेश्मनि—गृहे राजवेश्मनि—राजभवने (६ष्ठी तत्पु०। औपश्लेषिके ७मी०। "गृहं गेहोदवसितं वेश्म सद्म निकेतनम्" इत्यमरः), आस्ताम्—अतिष्ठताम् (आस+लङ्-ताम्)।

(छ) अभिलाषेण—मनोरथेन, सम्भोगकामेन इत्यर्थः, सह वर्त्तमानः साभि-लाषः,—सम्भोगकामी (विशे०। ३या तत्पु०)। सु—शोभनं, भगं—श्रीः, सौन्दर्य्य-मिति यावत्, ("भगं श्रीकाममाहात्म्यवीर्य्ययत्नार्ककीर्त्तिषु" इत्यमरः) यस्याः तत्-सम्बोधने सुभगे!—सुन्दरि!, स्वामिसौभाग्यवति इत्यर्थः, शय्या—तल्पं, शयनीय-मित्यर्थः, आसनं—पीठम्, उपवेशनसाधनमित्यर्थः, आहारः,—भोजनं, विहारः,—भ्रमणं, ("विहारो भ्रमणे स्कन्धे लीलायां सुगतालये" इति मेदिनी) शय्या च आसनञ्च आहारश्च विहारश्च ते शय्याऽऽसनाऽऽहारविहाराः (द्वन्द्व), एके—अभिन्नाः,

शारिकाऽब्रवीत्,—नाहं (ज) पुरुषसंसर्गं कर्त्तुमिच्छामि, यतः पुरुषा दुष्टाः कृतघ्नाश्च" इति। ततः शुकेन,—"न (झ) पुमांसो दुष्टाः, स्त्रिय एव दुष्टाः नृशंसहृदयाश्च"इति कथिते तयोर्विवादः समजनि। ततस्तौ (ञ) पक्षिणौ क्रीतदासत्वक्रीतदासीत्वपणं कृत्वा परस्परं विवादनिष्पत्तये राजपुत्रमुपेयतुः। स राजपुत्रः

---

शय्याऽऽसनाऽऽहारविहाराः (कर्म्मधा०) तेषु एकशय्याऽऽसनाऽऽहारविहारेषु—एकत्र शयनोपवेशनभोजनभ्रमणादिव्यापारेषु इत्यर्थः (वैषयिके ७मी०)। भज—सेवस्व (भज+लोट्-हि), मया सह एकस्यां शय्यायां शेष्व, एकस्मिन् आसने उपविश, एकस्मिन् भाजने भुङ्क्ष्व, एकस्मिन् याने विचर इति स्पष्टार्थः।

(ज) पुरुषेण—पुंसा सह, संसर्गं—सम्बन्धं, संयोगमित्यर्थः (३या ततपु०)। कृतं—कृतोपकारमित्यर्थः, घ्नन्ति—नाशयन्ति, अस्वीकुर्व्वन्तीत्यर्थः, ये ते कृतघ्नाः,—अकृतज्ञाः, कृतोपकारस्य जनस्य अपकारे प्रवर्त्तमाना इत्यर्थः [कृत+हन+"कप्रकरणे मूलविभुजादिभ्यः उपसङ्ख्यानम्" (वा०) इति कः, "अल्लोपोऽनः" (६।४।१३४ पा०) इति हन्तेरकारस्य लोपे "हो हन्तेः ञ्णिन्नेषु" (७।३।५४ पा०) इति हकारस्य कुत्वम्]।

(झ) पुमांसः,—पुरुषाः। नृशंसं—क्रूरं, हृदयं—चित्तं यासां ताः नृशंसहृदयाः,—क्रूरमनसः (विश०। बहुव्री०)। विवादः,—व्यवहारः, अन्योन्यजयपराजयरूपविरुद्धवादः इत्यर्थः, वितण्डा इति यावत्, समजनि—समुदपादि [सम्+जन+लुङ्-तन् "दीपजन—" (३।१।६१ पा०) इति च्लेश्चिण् "चिणो लुक्" (६।४।१०४ पा०) इति चिणः परस्य तस्य लुक्]।

(ञ) पक्षिणी च पक्षी च तौ पक्षिणौ—शुकसारिके इत्यर्थः ["पुमान् स्त्रिया" (१।२।६७ पा०) इत्येकशेषे पुंसःशेषः], क्रीतदासत्वम्—आजीवनपरिचारकत्वं, क्रीतदासीत्वम्—आजीवनपरिचारिकात्वं, क्रीतदासत्वञ्च क्रीतदासीत्वञ्च क्रीतदासत्व-क्रीतदासीत्वे, ते एव पणं—बन्धकं, द्यूतव्यवहारादिषु उत्कृष्टं जयस्ते स्थापितमित्यर्थः, मम पराजये इदं दास्यामि करोमि वा इत्येवं नियमनिति यावत् ("पणो द्यूतादि-षूत्सृष्टे भृतौ मूल्ये धनेऽपि च" इत्यमरः। द्यूतादि इत्यत्र आदिशब्दात् समाह्वय-पणादिर्ग्रहः)। विवादस्य—व्यवहारस्य, अन्योन्यजयपराजयरूपस्य इत्यर्थः, ("विवादो व्यवहारः स्यात्" इत्यमरः), निष्पत्तये—समाधानाय विवादनिष्पत्तये—परस्परजय-

पितुः (ट) आस्थानगतः विवादपदं श्रुत्वा,—"कथं पुरुषाः कृतघ्नाः, ब्रूहि तत् त्वम्" इति शारिकामपृच्छत्। ततः सा,—(ठ) "शृणोतु राजपुत्रः" इति समाख्याय स्वपक्षसमर्थनाय पुंदोषाख्यायिनीं कथां कथयितुमुपचक्रमे।—

"अस्ति कामन्दकी नाम विख्याता नगरी; तस्याम् अर्थदत्तो नाम (ड) महाधनो वणिक् प्रतिवसति स्म। (ढ) कालेन तस्य

पराजयमीमांसायै ["तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति ४र्थी०]। उपेयतुः,—अभिजग्मतुः (उप+इ+लिट्-अतुस्)।

(ट) आस्थानं—सभा, ("समज्यापरिषद्गोष्ठीसभासमितिसंसदः। आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः"॥ इत्यमरः) गतः,—प्राप्तः आस्थानगतः,—सभास्थः (विग०। २या तत्पु०), विवादस्य पदं—वस्तु, विषयमित्यर्थः, ("पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः) विवादपदं—वितण्डाहेतुभूतं विषयमित्यर्थः।

(ठ) शृणोतु—आकर्णयतु (श्रु+लोट्-तुप्)। समाख्याय—कथयित्वा (सम्+आ+ख्या+ल्यप्), स्वस्य—आत्मनः, पक्षः,—साध्यं, स्थापनीयं मतमित्यर्थः, ("पक्षो मासार्द्धके पार्श्वे गृहे साध्यविरोधयोः" इति मेदिनी) तस्य समर्थनाय—पोषणाय, स्थापनायेत्यर्थः, स्वपक्षसमर्थनाय—निजमतस्थापनाय [६ष्ठी तत्पु०। "तादर्थ्ये चतुर्थी वाच्या" (वा०) इति ४र्थी०], पुंदोषाणां—पुरुषदूषणानां, पुंसामपराधानामित्यर्थः, आख्यायिनीं—कथयित्रीं पुंदोषाख्यायिनीं—पुरुषापराधदोषकीं [६ष्ठी तत्पु०। विग०। आ+ख्या+ग्रहादित्वात् णिनिः "आतो युक् चिण्कृतोः" (७।३।३३ पा०) इति युक्, स्त्रियां ङीप्, ताम्], यद्वा,—पुंसां दोषान् आख्याति या तां पुंदोषाऽऽख्यायिनीम्। कथयितुं—वर्णयितुं (कथ+णिच+तुमुन्), उपचक्रमे—आरेभे [उप+क्रम+लिट्-ए "प्रोपाभ्यां समर्थाभ्याम्" (१।३।४२ पा०) इति आत्मनेपदम्]।

(ड) महान्ति—विपुलानि, धनानि—अर्थाः यस्य सः महाधनः,—प्रभूतैश्वर्यवान् ["आन्महतः समानाधिकरणजातीययोः" (६।३।४६ पा०) इति महतस्तकारस्य आकारः]। प्रतिवसति स्म—न्यवात्सीत् [प्रति+वस "लट् स्मे" (३।२।११८ पा०) इति अर्थोगे अतीते लट्-तिप्]।

(ढ) कालेन—उपयुक्तसमयेन, यौवनसमये इत्यर्थः ["प्रकृत्यादिभ्यः उप-

धनदत्तो नाम तनयः समुदपद्यत। अथ पितरि (ण) स्वर्गते स युवा द्यूतादिसङ्गेन भृशमुच्छृङ्खलोऽभवत्; धूर्त्ताश्च मिलिताः तं सर्वथा प्राभ्रंशयन्। (त) दुर्जनसङ्गतिरेव व्यसनवृक्षस्य मूलम्। (थ) अचिरेण च व्यसनाऽऽसक्ततया क्षीणसर्वस्वः,

---

मङ्गानम्" (वा०) इति ३या]। समुदपद्यत—समजायत (सम्+उत्+पद्+लङ्-त)।

(ण) स्वर्—स्वर्गम् (अव्य०। "स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः" इत्यमरः), गतः,—प्राप्तः तस्मिन् स्वर्गते—स्वर्गं प्रयाते, मृते इत्यर्थः (२या तत्पु०। भावे ७मी०)। द्यूतादिषु—पाशकक्रीडावेश्यामद्यादिषु, सङ्गः,—सङ्गतिः, आसक्तिरिति यावत्, तेन द्यूतादिसङ्गेन—पाशकादिषु आसक्त्या (७मी तत्पु०। हेतौ ३या)। उत्—उद्गतं, शृङ्खलातः,—संयमादित्यर्थः, उच्छृङ्खलः,—बन्धनरहितः, निरङ्कुशत्वात् असंयत इत्यर्थः, पित्रादिशासकाभावात् दुराचरणादिषु अप्रतिहतस्वभावः इति भावः ["कुगतिप्रादयः" (२।२।१८ पा०) इति नित्यसमासः]। धूर्त्ताः,—वञ्चकाः, मिलिताः,—तेन सह सङ्गताः सन्तः। प्राभ्रंशयन्—प्रास्खलयन्, न्याय्यमार्गात् समपातयन् (प्र+भ्रंश+णिच्+लङ्)।

(त) दुर्जनेन—दुष्टलोकेन, सङ्गतिः,—मेलनं दुर्जनसङ्गतिः,—दुष्टलोकसहवासः (३या तत्पु०), व्यसनं—विपत्, भ्रंशो वा, सत्पथात् विच्युतिरिति यावत्, यद्वा,—व्यसनं—कामजः दशविधः क्रोधजश्चाष्टविधः दोषः, ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः। तत्र कामजदशविधदोषो यथा मनुः,—"मृगयाऽक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाऽट्या च कामजो दशको गणः"॥ क्रोधजो यथा—"पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः"॥ इति) तदेव वृक्षः,—तरुः तस्य व्यसनवृक्षस्य—विपन्महीरुहस्य, कुपथपादपस्य वा, कामजादिदोषविटपिनो वा (रूपककर्म्मधा०), मूलम्—आद्य, प्रधानकारणमित्यर्थः, अन्यत—शिफा, ("मूलमाद्ये शिफाभयोः" इत्यमरः) दुर्जनैः सह सख्यता सर्व्वविधानिष्टस्य हेतुरिति निष्कृष्टार्थः।

(थ) अचिरेण—अत्यल्पकालेन (अव्य०। नञ्समा०), व्यसनेषु—पूर्वोक्तकामजादिषु, आसक्तः,—तदेकपरतन्त्रः, तस्य भावः तत्ता तया व्यसनासक्ततया—व्यसनाभिनिवेशतया (७मी तत्पु०। हेतौ ३या), क्षीणानि—क्षयाणि, व्ययतानीत्यर्थः, सर्वाणि—निखिलानि, स्वानि—धनानि, ("स्वो ज्ञातावात्मनि स्वं त्रिष्वा-

दारिद्र्येण च लज्जितः स्वदेशं त्यक्त्वा भ्रमितुं देशान्तराणि समाश्रयत्; गच्छंश्च चन्दनपुरं नाम नगरमाससाद, विवेश च भोजनार्थी कस्यापि वणिजः सदनम्। स च वणिक् (द) कुमारं दृष्ट्वा, पृष्ट्वा च कुलं, ज्ञात्वा च कुलीनं, सत्कृत्य च, दैवयोगात् प्राप्तममन्यत, अददाच्च तस्मै सधनां रत्नवतीं नाम सुताम्। ततः स धनदत्तः (ध) कृतविवाहस्तस्मिन्नेव श्वशुरवेश्मनि तस्थौ।

(न) गच्छत्सु च दिनेषु सुखेन विस्मृतदुर्गतिः पुनर्व्यसनोत्-

---

त्वोये स्त्रीऽस्त्रियां धने" इत्यमरः) यस्य सः चोणसर्व्वस्वः,—क्षीणसर्व्वधनः (विण०। बहुव्री०), दरिद्रस्य भावः दारिद्र्यं ["गुणवचनब्राह्मणादिभ्यः कर्म्मणि च" (५।१। १२४ पा०) इति ष्यञ्), तेन दारिद्र्येण—निर्धनतया, लज्जितः,—व्रीतः (विण०। लज्ज+क्तः)। समाश्रयत्—अभजत (सम्+आ+श्रि+लङ्-द), गच्छन्—यन् (गम+शतृ)। विवेश—उपतस्थौ, प्रविष्टवानित्यर्थः (विश+लिट्-णल्), भोजनम् —आहारम्, अर्थयते—याचते यः सः भोजनार्थी—आहाराभिलाषी सन् [भोजन +अर्थ+णिच्+ग्रहादित्वात् णिनिः "अतो लोपः" (६।४।४८ पा०) इति सूत्रेण अदन्तचौरादिकस्यार्थधातोरकारस्य लोपे "णेरनिटि" (६।४।५१ पा०) इत्यनेन णिचो लोपः]। सदनं—गृहं ("गृहंगेहोदवसितं वेश्म सद्म निकेतनम्। निशान्त-वस्त्यसदनं भवनाऽऽगारमन्दिरम्" ॥ इत्यमरः)।

(द) कुमारं—वणिक्पुत्रम्। कुलं—वंश, कस्मिन् कुले त्वं समुत्पन्न इत्यादिरूप-मित्यर्थः। कुलस्य—सत्कुलस्य अपत्यं कुलीनं—महाकुलं, सत्कुलोद्भवमित्यर्थः ["कुलात् खः" (४।१।१३९ पा०) इति खः। "महाकुलकुलीनार्य्यसभ्यसज्जनसाधवः" इत्यमरः], सत्कृत्य—समादृत्य [सत्+कृ+ल्यप् "आदरानादरयोः सदसती" (१।४।६३ पा०) इत्यनेन कृञि परे सदित्युपपदस्य समासः], दैवयोगात्—भाग्यवशात्, सौभाग्या-दित्यथः (हेतौ ५मी०। "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः)। अमन्यत—अबुध्यत (मन+लङ् त), अददात्—अयच्छत् (दा+लङ् द), तस्मै (सम्प्रदाने ४र्थी०), धनेन सहितां सधनां—सालङ्कारामित्यर्थः (विण०। बहुव्री०)।

(ध) कृत,—सम्पादितः, विवाहः,—परिणयः येन सः कृतविवाहः,—कृतोद्वाहः (विण०। बहुव्री०)।

(न) गच्छत्सु—अयमानेषु (भावे ७मी०। गम्+शतृ-सुप्)। विस्मृता—स्मृति-

सुकः स्वदेशं गन्तुकामोऽभवत्। ततः स (प) शठः कथमपि श्वशुरं तं तन्मात्रापत्यम् अनुनीय, तामलङ्कृतां भार्य्यां रत्नवतीमेकया वृद्धया स्त्रिया सहितां गृहीत्वा स्वदेशाय प्रतस्थे। (फ) क्रमेण अटवीं प्राप्य दूरात् तस्करभयमुक्त्वा तस्या भार्य्यायाः सर्वाणि अलङ्करणानि स्वीचकार। पश्यतु युवराजः, द्यूताऽऽवेशादिव्यसनिनां कृतघ्नानां हृदयं (ब) निस्त्रिंशकर्कशम्। स च पापात्मा अर्थार्थी तां गुणवतीमपि भार्य्यां हन्तुं तया वृद्धया युतां क्वापि (भ) श्वभ्रे न्यक्षिपत्। क्षिप्त्वैव तस्मिन्

यथातीता, श्वशुरालये निरन्तरसुखसम्भोगेन स्मरणाविषयीभूता इत्यर्थः, दुर्गतिः,—नैःस्वं, निर्धनता इत्यर्थः, आत्मना दुरवस्था इति यावत् ("दुर्गतिर्नरके नैःस्वे" इति शाश्वतः) येन सः विस्मृतदुर्गतिः,—विस्मृतदारिद्र्यः (विण०। बहुव्री०), व्यसनाय—मृगयाऽक्षक्रीडादिदोषाय, उत्सुकः,—उद्युक्तः, पाशक्रीडादिनिमित्तमुत्कण्ठितः सन् इत्यर्थः (विण०। ४र्थी तत्पु०)। गन्तुं—यातुं, कामः,—अभिलाषः यस्य तादृशः, गन्तुकामः,—गमनेच्छुः ["तुमकाममनसोरपि" (का०) इति तुमुनो मकारलोपः]।

(प) शठः,—वञ्चकः, कथमपि—कष्टेन, एकमात्रापत्यत्वेन कन्या श्वशुरालये प्रेरितुमनिच्छुतया इति भावः। सा—रत्नवती, मात्रम्—एव, केवलमित्यर्थः, मात्रशब्दोऽयमवधारणे ("मात्रं कार्त्स्न्येऽवधारणे" इति शाश्वतः), अपत्यं—सन्तानं, तनया इति यावत्, यस्य तं तन्मात्रापत्यं—रत्नवत्येकमात्रकन्यकं (विण०। बहुव्री०), अनुनीय—विनयप्रणिपातादिना आराध्य, अनुनयं कृत्वा इत्यर्थः ["तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति ४र्थी०]। प्रतस्थे—जगाम [प्र+स्था+लिट् ए "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम्]।

(फ) क्रमेण—शनैः शनैः, गमनानुसारेणेत्यर्थः। अस्वम्—अनात्मीयं, स्वम् आत्मीयं चकार स्वीचकार—आत्मसात् चकार ["अभूततद्भावे इति वक्तव्यम्" (वा०) इति च्विप्रत्ययः]।

(ब) निस्त्रिंशवत्—खड्गवत् ("निस्त्रिंशः क्रूरखड्गयोः" इति शाश्वतः), कर्कशं—कठिनम्।

(भ) श्वभ्रे—छिद्रे, भूगर्त्ते इत्यर्थः (अधि ७मी०। "छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः" इत्यमरः)।

(म) प्रस्थिते दुरात्मनि सा वृद्धा तस्मिन्नेव व्यपद्यत; सा तु रत्नवती कथञ्चित् तत्र तृणगुल्मादिकमालम्ब्य करुणं क्रोशन्ती सशेषत्वादायुषः समुत्थिता, विक्षताङ्गी पदे पदे मार्गं पृष्ट्वा, यथाऽऽगतेनैव पथा कृच्छ्रात् पितुः सदनमागमत्।

"कथमकस्मात् त्वमीदृशी (य) प्रत्यावृत्ता?" इति ससम्भ्रमं मात्रा पित्रा च पृष्टा सा साध्वी एवमभाषत,—"मुषिताः स्म पथि तस्करैः, नीतश्च बलात् स मे पतिः, वृद्धा सा श्वभ्रे निपत्य मृता, अहं पुनर्दैवात् प्राणिमि। केनापि कृपालुना पथिकेनाहमुद्धृता श्वभ्रात्"। एवमुक्तवती मात्रा पित्रा च (र) शोचता समाश्वासिता सा भर्तृप्राणा रत्नवती तस्थौ।

अथ कालेनासौ धनदत्तः द्यूतेन (ल) क्षपितसर्वधनः पुनरचिन्तयत्,—"गच्छामि, पुनः श्वशुरगृहात् धनमानयामि, तत्र गत्वा तं श्वशुरं 'गृहे स्थिता कुशलिनी तव दुहिता' इति

---

(म) प्रस्थिते (भावे ७मी०)। व्यपद्यत—म्रियत (वि+पद+लङ्-त)। क्रोशन्ती—रुदती (क्रुश+शतृ, स्त्रियां ङीप्)। शेषेण सह वर्त्तमानः सशेषः, तस्य भावः तस्मात् सशेषत्वात्—अवशेषत्वात् (हेतौ ५मी०)। पदे पदे—प्रतिपदं (वीप्सायां द्विर्भावः), प्रतिपदक्षेपकाले इत्यर्थः, पितृगृहाभिमुखीनपथस्य अज्ञातत्वात् इति भावः। यथा—येन पथा आगता, तेनैव यथाऽऽगतेनैव पथा (करणे ३या)।

(य) प्रत्यावृत्ता—प्रत्यागता (प्रति+आ+वृत+क्तः, स्त्रियां टाप्)। ससम्भ्रमं—ससाध्वसं, सभयमित्यर्थः, ससंवेगं वा, सत्वरमित्यर्थः (क्रिया विश०। "सम्भ्रमः साध्वसेऽपि स्यात् संवेगाऽऽदरयोरपि" इति मेदिनी)। मुषिताः,—अपहृताः, अपहृतसर्व्वधनाः इत्यर्थः (मुष+क्तः, स्त्रियां टाप्), स्मः,—भवामः (अस+लट् मस्), वयमिति शेषः। बलात्—बलमाश्रित्य (ल्यब्लोपे ५मी०)। प्राणिमि—जीवामि (प्र+अन+लट्-मिप्)।

(र) शोचता—दुःखयता, शोकं कुर्व्वता इत्यर्थः (विश०। शुच+शतृ)। समाश्वासिता—सान्त्विता (विश०। सम्+आ+श्वस+णिच्+क्तः, स्त्रियां टाप्)।

(ल) क्षपितानि—व्ययितानि, नाशितानीत्यर्थः (क्षप+णिच्+क्तः),

वक्ष्यामि"। इति स मनसि (व) सङ्कल्प्य श्वशुरसदनं पुनरवाप। आगतञ्च तं (श) दूरात् सा पतिप्राणा भार्य्या अद्राक्षीत्; दृष्ट्वैव धावित्वा च सा तस्य पापस्य पादयोर्निपत्य तत् सर्वं पितृभ्यां मृषा निवेदितं व्यजिज्ञपत्; दुष्टेऽपि पत्यौ साध्वीनां मानसं नान्यथावृत्ति भवति। ततः स दुरात्मा निर्भयः (ष) श्वाशुरं गृहं प्रविश्य तं पादयोः प्रणनाम। स च तं जामातरं दृष्ट्वा (स) अभ्यनन्दत्, अकरोच्च दिष्ट्याऽयं मे जामाता जीवन् चौरैर्मुक्त इति बन्धुभिः सह महोत्सवम्। ततः स धनदत्तः सुखेन (ह) श्वाशुरीं समृद्धिं भुञ्जानः तया रत्नवत्या पत्न्या सह रेमे।

सर्व्वधनानि येन सः (विश०। बहुव्री०)। वक्ष्यामि—कथयिष्यामि (वच+लृट्-स्यामि)।

(व) सङ्कल्प्य—निश्चित्य [सम्+कृप+णिच्+ल्यप् "कृपो रो लः" (८।२।१८ पा०) इति लकारादेशः]।

(श) दूरात्—विप्रकृष्टस्थानात्, ["दूरान्तिकार्थेभ्यो—" (२।३।३५ पा०) इति ५मी०]। धावित्वा—द्रुतं गत्वा (धाव+क्त्वा)। माता च पिता च ताभ्यां पितृभ्यां—मातापितृभ्यां ["पिता मात्रा" (१।२।७० पा०) इति एकशेषः। "क्रियया यमभिप्रैति—" (वा०) इति ४र्थी०]। न अन्यथा—अन्यप्रकारा, पत्युर्दुर्व्यवहारेण तं प्रति विरागरूपा इत्यर्थः, वृत्तिः,—भावविशेषः यत्र तादृशं नान्यथावृत्ति—विरक्तमित्यर्थः (विश०। बहुव्री०)।

(ष) श्वशुरस्य इदं श्वाशुरं—श्वशुरस्वामिकमित्यर्थः ["तस्येदम्" (४।३।१२० पा०) इति अण्]। पादयोरिति (समीपार्थे ७मी०)।

(स) अभ्यनन्दत्—अभि—सर्व्वतोभावेन, अनन्दत्—अतुष्यत (अभि+नन्द+लङ्-द)। दिष्ट्या—भाग्येन (प्रकृत्यादिभ्यः ३या०। "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः)। मुक्तः,—त्यक्तः (मुच+क्तः)। महोत्सवम्—आनन्दजनकानुष्ठानम्।

(ह) श्वशुरस्य इमां श्वाशुरीं—श्वशुरसम्बन्धिनीं (विश०)। भुञ्जानः,—सेवमानः [भुज+शानच् "भुजोऽनवने" (१।३।६६ पा०) इत्यात्मनेपदम्]। रेमे—अक्रीड़ (रम+लिट्-ए)।

एकदा स (क) पापीयान् रात्रौ यच्चकार, तत् अवाच्यमपि कथाभङ्गभयात् कथ्यते, शृणु राजपुत्र! असौ पापमतिः विश्वस्तसुप्तां तां रत्नवतीं निशि हत्वा तदाभरणसञ्चयम् अपहृत्य अलक्षितः स्वदेशं प्रायात्। ईदृशाः पुरुषाः (ख) पापाः कृतघ्नाः"। इति शारिकया कथिते राजपुत्रः हसन्,—"त्वमिदानीं वद" इति शुकमभाषत। ततः स शुकः प्राब्रवीत्,—"देव! स्त्रियः (ग) विषमसाहसाः दुश्चरिताः पापाश्च; तथा चात्र कथामिकां वर्णयामि, शृणोतु कुमारः,—

अस्ति हर्षवती नाम नगरी। तत्राभूत् धर्मदत्तो नाम (घ) बहुकोटीश्वरो वणिजामग्रणीः; तस्य वसुदत्ता नाम्नी रूपेण असामान्या प्राणेभ्योऽपि प्रियतमा कन्याऽभवत्। सा तु

---

(क) अतिशयेन पापी इति पापीयान्—महापापः [पापिन्+"अजादी गुणवचनादेव" (५।३।५८ पा०) इति ईयसुन् "टेः" (६।४।१५५ पा०) इति टिलोपः]। अवाच्यं—वक्तुमयोग्यम्। कथायाः,—प्रारब्धाया अस्या वार्त्तायाः, भङ्गभयात्—अन्तरा निवृत्तौ असम्पूर्णताशङ्कातः इत्यर्थः (६ष्ठी तत्पु०। हेतौ ५मी०)। विश्वस्तात्—पत्यौ विश्वासात्, ("विश्वस्तो जातविश्वासे" इति मेदिनी) सुप्तां—निद्रितां, (विण०। ५मी तत्पु०), यद्वा,—विश्वस्ता चासौ सुप्ता चेति तां [विण-कर्मधा०; "पुंवत् कर्मधा—" (६।३।४२ पा०) इति पुंवद्भावः]। निःशङ्कसुप्तामित्यर्थः, हत्वा—मारयित्वा [हन+क्त्वा "अनुदात्तोपदेश—" (६।४।३७ पा०) इति अनुनासिकलोपः], तस्याः,—रत्नवत्याः, आभरणसञ्चयम्—अलङ्कारसमूहम्, अपहृत्य—चोरयित्वा [अप+हृ+ल्यप् "ह्रस्वस्य पिति कृति तुक्" (६।१।७१ पा०) इति तुक्], न लक्षितः अलक्षितः,—अदृष्टः (नञ् समासः), केनापि इति शेषः।

(ख) पापमेते चरन्तीति पापाः,—पापाचाराः (अर्श-आदित्वादच्)।

(ग) विषमाणि—तुलनातीतानि, अनुचितानीति यावत्, साहसानि—दुष्करकर्माणि धार्ष्ट्यानि वा ("साहसन्तु दमे दुष्करकर्मणि। अविमृष्यकृतौ धार्ष्ट्ये" इति हैमः) यासां तादृश्यः विषमसाहसाः,—अनुचितकर्मकारिण्यः, अतिप्रगल्भा वा (विण०। बहुव्री०)।

(घ) बहुकोटीनाम्—अनेककोटिसङ्ख्यकधनानाम्, ईश्वरः,—प्रभुः बहु:

तेन (ङ) समानधनयौवनकुलशालिने नेत्रचकोरामृतरश्मये समुद्रदत्ताख्याय वणिक्पुत्राय ताम्रलिप्तनिवासिने प्रदत्ता। कदाचित् सा (च) स्वदेशस्थे पत्यौ, पितृगृहे स्थिता दूरात् कमपि पुरुषं युवानं कान्तविग्रहं ददर्श। दृष्ट्वैव सा (छ) चपला स्मरमोहिता गुप्तं सखीमुखेनानीतं प्रच्छन्नकामुकं तं भेजे।

---

कोटीश्वरः,—अनेककोटिपतिः (विश०। ६ष्ठी तत्पु०)। रूपेण असामान्या—अतुलनीया, असाधारणरूपवतीत्यर्थः ["प्रकृत्यादिभ्य उपसङ्ख्यानम्" (वा०) इति ३या]।

(ङ) धनञ्च यौवनञ्च कुलञ्च—वंशश्च धनयौवनकुलानि (द्वन्द्व०) समानैः,—निजदुहितृसदृशैः, धनयौवनकुलैः,—सम्पत्तारुण्यवंशैः, शालते—शोभते इति तस्मै समानधनयौवनकुलशालिने—तुल्यधनादिविभूषिताय (विश०। समानधनयौवनकुल+शाल+ग्रहादित्वात् णिनिः), नेत्रं—चक्षुरेव, चकोरः,—पक्षिविशेष, (रूपककर्म्मधा०) तस्य अमृतरश्मये—सुधादीधितये, चन्द्राय इत्यर्थः, नेत्रचकोरामृतरश्मये—नयनचकोरसन्तर्पणचन्द्रस्वरूपाय, चकोरो यथा चन्द्रदर्शने उत्फुल्लो भवति, तदमृतपानार्थमुन्मुखस्तिष्ठति च, तथा अस्य असामान्यसौन्दर्य्यं मानवमनांसि उत्फुल्लयति, तद्दर्शनार्थमुत्सुकीकरोति च इति भावः (विश०। ६ष्ठी तत्पु०)। वणिक्पुत्राय (सम्प्र० ४र्थी०), ताम्रलिप्त—"तमलुक्" इति प्रसिद्धे नगरे, निवसतीति तस्मै ताम्रलिप्तनिवासिने—ताम्रलिप्तवास्तव्याय (विश०। ताम्रलिप्त+नि+वस+ग्रहादित्वात् णिनिः)।

(च) स्वदेशे तिष्ठतीति तस्मिन् स्वदेशस्थे—निजविषयवर्त्तिनि [भावे ७मी०। उप० समा०। स्वदेश+स्था+"सुपि स्थः" (३।२।४ पा०) इति कः "आतो लोपः—" (६।४।६४ पा०) इति आकारलोपः]। कान्तः,—कमनीयः, विग्रहः,—शरीरं ("शरीरं वर्ष्म विग्रहः" इत्यमरः) यस्य तं कान्तविग्रहं—सुन्दरमूर्त्तिं (विश०। बहुव्री०)।

(छ) चपला—पुंश्चली, कुलटेत्यर्थः (विश०। "चपला कमलाविद्युत्पुंश्चली-पिप्पलीषु च" इति मेदिनी), स्मरेण—कामेन, मोहिता—मोहं प्राप्ता स्मर-मोहिता—कामविमूढ़ा (विश०), गुप्तम्—अप्रकाशं यथा तथा (क्रियाविश०), सख्याः,—वयस्यायाः, मुखेन सखीमुखेन—सखीद्वारा वार्त्तां प्रदाय इत्यर्थः (६ष्ठी तत्पु०। करणे ३या०)। प्रच्छन्नः,—गुप्तः, कामुकः,—मैथुनकामनाऽतिशयवान् तं

इत्थं (ज) प्रतिरात्रं सा तदेकासक्तमानसा तेन सह रममाणा सुखं बुभुजे।

अथैकदा स तस्याः पतिः स्वदेशात् आगतः (झ) श्वश्रुरयोः परां प्रीतिमवर्द्धयत्। दिने च (ञ) उत्सवेनातिक्रान्ते सा वसुदत्ता माला कृतभूषणा निशि वासगृहं प्रेषिता शय्या-स्थायिनं पतिं भेजे; तेन च रतिं प्रार्थिता सा अन्यमानसा

---

प्रच्छन्नकामुकं—गुप्तनायकं (विण०। कर्म्मधा०), यद्वा,—प्रच्छन्नं—गुप्तं यथा तथा, कामयते—परस्त्रीसङ्गमभिलषति यस्तं प्रच्छन्नकामुकम् [उपपदस०।प्रच्छन्न+कम+"कमेर्णिङ्" (३।१।३० पा०) इति णिङ् "लषपतपद—" (३।२।१५४ पा०) इति उकञ्]। भेजे—सिषेवे (भज+लिट्-ए)।

(ज) रात्रौ रात्रौ प्रतिरात्रं—प्रतिनिशं [वीप्सायाम् अव्ययी०। "अहःसर्वैक-देशसङ्ख्यातपुण्याच्च रात्रेः" (५।४।८७ पा०) इति अच्]। तस्मिन्—पुरुषे, एकं—केवलम्, ("एके मुख्यान्यकेवलाः" इत्यमरः) आसक्तं—लग्नं, मानसं—मनः यस्याः सा तदेकाऽऽसक्तमानसा—तन्मात्राधीनचित्ता (विण०। बहुव्री०)। रममाणा—क्रीडन्ती (रम+शानच्, स्त्रियां टाप्)। बुभुजे—अनुबभूव [भुज+लिट्-ए "भुजोऽनवने" (१।३।६६ पा०) इत्यात्मनेपदम्]।

(झ) श्वश्रूश्च श्वशुरश्च तयोः श्वश्रुरयोः,—श्वश्रूश्वशुरयोः ["श्वशुरः श्वश्र्वा" (१।२।७१ पा०) इति एकशेषः], पराम्—उत्तमां ("दूरानात्मोत्तमाः पराः" इत्यमरः)। अवर्द्धयत्—व्यतनोत् (वृध+णिच्+लङ्-द)।

(ञ) उत्सवेन—जामातृरागमनजनितानन्दानुष्ठानेन (करणे ३या०), अति क्रान्ते—अतीते (भावे ७मी०। अति+क्रम+क्तः)। कृतं—सम्पादितं, भूषणम्—अलङ्करणं यस्याः सा कृतभूषणा—अलङ्कृता इत्यर्थः (विण०। बहुव्री०)। शय्यायां—शयनीये, तिष्ठतीति तं शय्यास्थायिनं—शयनीयस्थं [विण०। शय्या+स्था+यद्वादित्वात णिनिः "आतो युक् चिण्कृतोः" (७।३।३३ पा०) इति युक्]। रतिं—मैथुनं, प्रार्थिता—याचिता (विण०। प्र+अर्थ+णिच्+कर्म्मणि क्तः, स्त्रियां टाप्। अर्थयतेर्द्विकर्म्मकत्वात् रतिं सा इति कर्म्मद्वयं, तत्र च सा इति गौणकर्म्मणः उक्तत्वात् प्रथमा)। अन्यस्मिन्—अपरपुरुषे, जारे इति यावत्, मानसं—मनः यस्याः सा अन्यमानसा—परपुरुषगतहृदया (विण०। बहुव्री०),

अलीकसुप्तिकामकरोत्। क्रमेण सोऽपि पतिः (ट) पानमत्तः अध्वश्रान्तश्च निद्रया जह्रे। ततः सर्वस्मिन् (ठ) भुक्तपीतजने क्रमेण सुप्ते कश्चित् चौरः सन्धिं भित्त्वा तस्मिन् वासगृहे प्राविशत्। सा च वणिक्नन्दिनी तत्काले (ड) तमपश्यन्ती समुत्थाय स्वैजारकृतसङ्केता निभृतं निरगात्। तदालोक्य स चौरः (ढ) विघ्निताभिलाषो व्यचिन्तयत्,—"येषामाभरणानामर्थे अहं प्रविष्टः, तैरेवाभरणैर्वृता एषा निशीथे निर्गता, तत्

---

अलीका—मिथ्याभूता, कपटरूपा इत्यर्थः, सुप्तिरेव इति सुप्तिका—निद्रा ताम् अलीकसुप्तिकां—कपटनिद्रां (कर्म्मधा०। सुप्ति+स्वार्थे कण्, स्त्रियां टाप्)।

(ट) पानेन—मद्यपानेन, मत्तः,—उन्मत्तवत् अल्पसंज्ञ इत्यर्थः, पानमत्तः,—मदोन्मत्तः (विश०। ३या तत्पु०), अध्वना—पथा, पथपर्य्यटनेनेत्यर्थः, श्रान्तः,—जातश्रमः अध्वश्रान्तः,—पथक्लान्तः (विश०। ३या तत्पु०), निद्रया (कर्त्तृ), जह्रे—आचकृषे इत्यर्थः (हृ+कर्म्मणि लिट् ए)।

(ठ) भुक्तं—भोजनम् अस्य अभूत् इति भुक्तः,—भुक्तवानित्यर्थः (अर्श आदिभ्योऽच्), पीतं—पानम् अस्य अभूत् इति पीतः,—पीतवानित्यर्थः (पूर्व्ववदच्), आदौ भुक्तः पश्चात् पीतश्च जनः तस्मिन् भुक्तपीतजने—सम्पन्नाहारपानलोके (भावे ७मी०। स्नातानुलिप्तवत् समासः)। सन्धिं—सुरङ्गां, छिद्रमित्यर्थः, "सिंद" इति भाषा ("सन्धिर्भगं सुरङ्गा च सन्धिं सङ्घटनं विदुः" इति शाश्वतः), भित्त्वा—छित्त्वा, कर्त्तित्वा इति यावत् (भिद+क्त्वा)।

(ड) तं—चौरम्, अपश्यन्ती—अवीक्षमाणा [न+दृश+शतृ+"उगितश्च" (४।१।६ पा०) इति ङीप् "शप्श्यनोर्नित्यम्" (७।१।८१ पा०) इति नुम्], समुत्थाय—शय्यातः उत्पत्य [सम्+उत्+स्था+ल्यप् "उदःस्थास्तम्भोः—" (८।४।६१ पा०) इत्यनेन पूर्व्वसवर्णभावः], स्वजारेण—निजोपपतिना, कृतः,—विहितः, सङ्केतः,—अभिसरणाय स्थाननिर्द्देश इत्यर्थः, यस्याः सा स्वजारकृतसङ्केता—उपपतिविज्ञापिताभिसरणप्रदेशा इत्यर्थः (विश०। बहुव्री०)।

(ढ) विघ्नः जातः अस्य इति विघ्नितः,—बाधितः, बाधाप्राप्त इत्यर्थः (विघ्न+तारकादित्वात् इतच्), अभिलाषः,—मनोरथः यस्य सः विघ्निताभिलाषः,—बाधितमनोरथः (विश०। बहुव्री०), व्यचिन्तयत्—आध्यायत्, चिन्तितवानित्यर्थः (वि+चिन्त+णिच्+लङ्-द)। अर्थे—प्रयोजने, निमित्तमित्यर्थः, ["निमित्तपर्य्यायप्रयोगे

त्र गच्छतीति द्रष्टव्यम्" इति पर्य्यालोच्य निर्गत्य च स चौरः तां वणिक्सुतामनुययौ।

साऽपि (थ) पुष्पादिसम्भारहस्तया सख्या संयुता गत्वा वाह्यमुद्यानं नातिदूरगं प्रविवेश, ददर्श च तत्र सङ्केतस्थानमागतं नगररक्षिभिश्चौरबुद्ध्या पाशं कण्ठे दत्त्वा निहत्य वृक्षे लम्ब्यमानं तं प्रच्छन्नकामुकम्। सा तु तदवलोक्य (त) विह्वला,—"हा! हतास्मि"इति वादिनी कृपणं विलपन्ती

र्वासां प्रायदर्शनम्" (वा०) इति आभरणानाम् इत्यत्र ६ष्ठी०। "अर्थोऽभिधेय-वैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः)। वृता—वेष्टिता, भूषिता इत्यर्थः, अलङ्कारा-च्छादितसर्वदेहा इति यावत् (विश०), निशीथे—अर्द्धरात्रे (काले ७मी०। "निशी-थस्तु पुमानर्द्धरात्रे स्यात् रात्रिमात्रके" इति मेदिनी)। द्रष्टव्यम्—ईक्षणीयं, दर्शनं कर्त्तव्यमित्यर्थः [दृश+तव्य+"सृजिदृशोर्झल्यमकिति" (६।१।५८ पा०) इत्यनेन अमागमे दृशे ऋकारस्य रकारः)। पर्य्यालोच्य—अवधार्य्य (परि+आ+लोच+ल्यप्)। वणिक्सुतां ["कर्म्मप्रवचनीययुक्ते द्वितीया" (२।३।८ पा०) इति अनुयोगे २या०]।

(थ) पुष्पादिसम्भाराः,—कुसुमचन्दनताम्बूलादिसम्भोगोपकरणानि, हस्ते यस्याः तया पुष्पादिसम्भारहस्तया—गृहीतकुसुममाल्याद्युपचारया इत्यर्थः (विश०। व्यधि बहुव्री०)। वाह्यमुद्यानं—नगरवहिःस्थं राज्ञः साधारणोपभोग्यं वनं ("पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्" इत्यमरः), न अतिदूरं गच्छति—वर्त्तते इत्यर्थः, तं नातिदूरगम्—अनतिदूरवर्त्तिनं (सप्तम्युपपदस०), प्रविवेश—अन्तर्जगाम, प्रविष्टवतीत्यर्थः (प्र+विश+लिट्-णल्)। सङ्केतस्थानम—अभिसारार्थं निर्णीत-प्रदेशम्। चौरः,—तस्करः, इति बुद्ध्या—ज्ञानेन चौरबुद्ध्या—निशीथे एकाकी निभृतं स्थितत्वात् तस्करोऽयमिति मत्वा इत्यर्थः (हेतौ ३या), पाशं—रज्जुम्। लम्ब्य-मानं—दोदुल्यमानं दोलायमानमित्यर्थो वा (अव+कर्म्मणि शानच्)।

(त) विह्वला—विक्लवा, कातरीभूता इत्यर्थः, शोकेन स्वात्मानमेव धारयितुमशक्ता इति यावत्, तादृशी सती, (विश०)। कृपणं—दीनं यथा तथा (क्रिया विश०), विलपन्ती—परिदेवमाना, शोकं कुर्व्वतीत्यर्थः [वि+लप+शतृ "उगितश्च" (४।१।६ पा०) इति ङीप् "शप्श्यनोर्नित्यम्" (७।१।८१ पा०) इति नुम्]।

भूमौ पपात, रुरोद च। अथ तं (थ) निजकामुकं वृक्षादवतार्य्य उपवेश्य च गतासुम् अङ्गरागैरलङ्कारैः पुष्पैश्चाल-ञ्चकार। यावच्च सा तस्य मुखम् (द) उन्नमय्य कामार्त्ता परिचुम्बति, तावत् स निर्जीवः कामुकः वेतालानुप्रविष्टः सन् दन्तैस्तस्या नासिकां चिच्छेद ; तेन सा विह्वला तस्मात् प्रदे-शात् सव्यथा अपसृताऽपि,—"अहो! किंस्वित् जीवत्यसौ ?" इति पुनरेत्य यावत् पश्यति स्म, तावत् तं वीतवेतालं निश्चेष्टं पतितं मृतं निश्चित्य सा भीता परिभूता च रुदती शनैः गृहं

(थ) निजायाः,—स्वस्याः, कामुकं—कामयितारं, यद्वा—निजां—स्वां, वस्तु-त्वामिति यावत, कामयते—अभिलषति यस्तं निजकामुकं—स्वप्रणयिनं (विग्र०)। उपवेश्य—आसयित्वा (उप+विश+णिच्+ल्यप्), गताः,—निःसृताः, असवः, —प्राणाः ("पुंसि भूम्न्यसवः प्राणाः" इत्यमरः) यस्य तं गतासुं—विगत-प्राणं, मृतमित्यर्थः (विग्र०। बहुव्री०), अङ्गानि—अवयवाः, रज्यन्ते—रञ्जितानि क्रियन्ते एभिः इति तैः अङ्गरागैः,—कुङ्कुमचन्दनाद्यनुलेपनैः [अङ्ग+रञ्ज+"अकर्त्तरि च कारके संज्ञायाम्" (३।३।१९ पा०) इति करणे घञ् "घञि च भावकरणयोः" (६।४।२७ पा०) इति नलोपः, "चजोः कु घिण्ण्यतोः" (७।३।५२ पा०) इति अस्य कुत्वम् "अत उपधायाः" (७।२।११६ पा०) इति उपधाया वृद्धिः]। अलं—भूषितं, चकार अलञ्चकार—भूषयामास (अलं+कृ+लिट्-णल्। "अलं भूषण-पर्य्याप्तिशक्तिवारणवाचकम्" इत्यमरः)।

(द) उन्नमय्य—ऊर्द्ध्वीकृत्य [उत्+नम+णिच्+ल्यप् "ल्यपि लघुपूर्वात्" (६।४।५६ पा०) इति णेरयादेशः]। चिच्छेद—चकर्त्त (छिद+लिट्-णल्)। स्वित्—वितर्के (अव्य०। "स्वित् स्यात् प्रश्नवितर्कयोः" इति शाश्वतः)। पश्यति स्म—ददर्श ["लट् स्मे" (३।२।११८ पा०) इति अतीते लट्]। वीतः,—अपगतः, वेतालो यस्मात् तं वीतवेतालं—विमुक्तवेतालावेशं (विग्र० बहुव्री०), निः,—नास्ति, चेष्टा—कायिकव्यापारः यस्य तं निश्चेष्टं—निष्क्रियं (विग्र०। बहुव्री०)। निश्चित्य—अवधार्य्य [निर्+चि+ल्यप् "ह्रस्वस्य पिति—" (६।१।७१ पा०) इति तुक्]। परिभूता—छिन्ननासत्वात् अवमानिता इत्यर्थः, रुदती—क्रन्दन्ती [रुद+शतृ "उगितश्च" (४।१।६ पा०) इति ङीप्], शनैः,—मन्दं मन्दम् (अव्य०),

प्रत्याजगाम। स चालक्षितः (ध) प्रच्छन्नस्थितश्चौरः सर्वमेतत् व्यलोकयदचिन्तयच्च,—"अहो! किमिदं पापया अनया कृतम्? हा! स्त्रीणामाशयः कथमीदृक् भीषणः? तदिदानीमपि एषा किं नु कुर्य्यात्?" इति विचिन्त्य कौतुकात् स चौरः भूयोऽपि दूरात् तामनुससार।

सा च पापिनी गृहं प्रविश्यैव उच्चकैः प्ररुदती एवमब्रवीत्,—(न) "परित्रायध्वं माम्, एतेन दुष्टेन भर्त्तृरूपेण शत्रुणा मम निरपराधाया नासिका छिन्ना" इति। ततः रोदनमाकर्ण्य सहसा तत्परिजनाः सर्वे ससम्भ्रमम् (प) उदतिष्ठन्, पतिश्च प्रबुबुधे। अथ तत्पिता (फ) समेत्य तां छिन्ननासिकां दृष्ट्वा क्रुद्धस्तं जामातरं बन्धयामास। स च (ब) इतिकर्त्तव्यविमूढ़स्तदानीं बध्यमानोऽपि मूकवदतिष्ठत्, न किमपि प्राब्र-

गृहमिति ["अभितः परितः—" (वा०) इत्यादिना प्रतियोगे २या], प्रत्याजगाम—प्रत्याययौ (प्रति+आ+गम+लिट्-णल्)।

(ध) प्रच्छन्ने—गुप्तस्थाने, स्थितः प्रच्छन्नस्थितः,—अप्रकाशमवस्थितः (विण०। ७मी तत्पु०)। पापमेषा अस्तीति पापा—पापाऽऽचारिणी (अर्श-आदित्वादच्, ततः स्त्रियां टाप्), तया पापया—नृशंसया, पापिन्या इत्यर्थः ("नृशंसो घातुकः क्रूरः पापः" इत्यमरः)। आशयः,—अभिप्रायः ("अभिप्रायश्छन्द आशयः" इत्यमरः)। नु—वितर्के। अनुससार—अनुजगाम (अनु+सृ+लिट्-णल्)।

(न) परित्रायध्वं—रक्षत (परि+त्रै+प्रार्थनायां लोट्-ध्वं), यूयमिति शेषः।

(प) उदतिष्ठन्—उत्थिता अभवन्, अजागरुरित्यर्थः (उत्+स्था+लङ् अन्), शयनादिति शेषः। प्रबुबुधे—जागरामास (प्र+बुध+लिट्-ए)।

(फ) समेत्य—समागत्य [सम्+आ+इ+ल्यप् "ह्रस्वस्य पिति—" (६।१।७१ पा०) इति तुक्]। बन्धयामास—संययाम, बन्धनं अकारीत्यर्थः [बन्ध+णिच्+लिट्-णल् "कास्प्रत्ययादाममन्त्रे लिटि" (३।१।३५ पा०) इति आम् "कृञ्चानुप्रयुज्यते लिटि" (३।१।४० पा०) इति आमन्तादनुप्रयोगः]।

(ब) इति—अस्यामवस्थायामिदं, कर्त्तव्यं—विधातव्यं, तत्र विमूढ़ः,—जड़ः,

वीत्। अथ क्रमेण सर्वेषु (भ) विबुद्धेषु शृण्वत्सु, तस्मिंश्च चौरे सर्ववृत्तान्तज्ञे तस्मादपसृते, गतायां शनैः शर्वर्य्यां, स वणिक्सुतः तेन श्वशुरेण राजान्तिकं नीतः; सा च छिन्ननासा वसुदत्ता तत्राऽऽगता। राजा च सर्वं वृत्तान्तं श्रुत्वा अयं (म) स्वदारद्रोहीति निर्णीय तस्य वणिक्सूनोर्वधं समादिशत्।

ततस्तस्मिन् निरपराधे न किमपि (य) विजानति वणिक्सुते मडिण्डिमं वध्यभूमिं नीयमाने स चौरः समुपगम्य राज-

---

बोधविरहितः इत्यर्थः, इतिकर्त्तव्यविमूढ़ः,—उपायनिर्द्धारणाक्षमः (विण०। ७मी तत्पु०)। बध्यमानः,—संयम्यमानः [ वध+कर्म्मणि शानच्। बन्ध+कर्म्मणि शानच् इति वा, अस्मिन् पक्षे—"अनिदितां हल उपधायाः क्ङिति" (६।४।२४ पा०) इति उपधाया नलोपः ], श्वशुरेणेति शेषः।

(भ) विबुद्धेषु—जागरितेषु इत्यर्थः (भावे ७मी०। वि+बुध+क्तः), शृण्वत्सु—आकर्णयत्सु (भावे ७मी०। श्रु+शतृ)। सर्वं—निखिलं, वृत्तान्तं—वार्त्तां, जानातीति तस्मिन् सर्ववृत्तान्तज्ञे—विदिताखिलोदन्ते [ विण०। उप० समा०। सर्ववृत्तान्त+ज्ञा+"इगुपधज्ञा—" (३।१।१३५ पा०) इति कः "आतो लोपः—" (६।४।६४ पा०) इति आकारलोपः ]। अपसृते—निष्क्रान्ते (भावे ७मी०), गतायाम्—अतीतायां, प्रभातायामिति यावत् (भावे ७मी०)। शर्वर्य्यां—रात्रौ ("अथ शर्वरी। निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा" इत्यमरः)। नीतः,—प्रापितः (नयतेर्द्विकर्म्मकस्य राजान्तिकवणिक्सुतयोः कर्म्मद्वयर्योः मुख्यकर्म्मणि वणिक्सुते उक्ते १मा०)।

(म) दारयन्ति—पृथक्कारयन्ति भ्रातॄन् इति दाराः, ता हि पत्युः भ्रातृभेदं भिन्दन्तीति लोकप्रसिद्धम्; स्वान्—निजान्, स्वस्य—निजस्य इति वा, दारान्—भार्य्यां, (दारशब्दो नित्यं बहुवचनान्तः पुंलिङ्गश्च भवति "भार्य्या जायाऽथ पुंभूम्नि दाराः" इत्यमरः। दारा इति टाबन्तोऽपि दृश्यते "क्रोड़ा द्वारा तथा दारा त्रय एते यथाक्रमम्। क्रोड़े द्वारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः"॥ इति व्याडिशब्दाढ्यौ), द्रुह्यति—हिनस्ति यः सः स्वदारद्रोही—पत्नीपीड़कः (स्वदार+द्रुह+ग्रहादित्वात् णिनिः), निर्णीय—निश्चित्य (निर्+नी+ल्यप्)। वणिक्सूनोः,—वणिक्पुत्रस्य (शेषे ६ष्ठी०)। समादिशत्—समाज्ञापयत्, (सम्+आ+दिश+लङ्-द्)।

(य) विजानति—विबुध्यमाने (वि+ज्ञा+शतृ, तस्मिन्)। डिण्डिमः,—

पुरुषानभाषत,—"अकारणमयं कथं वध्यभूमौ नीयते ? यथावृत्तमहं सर्वं वेद्मि, मां राजान्तिकं नयत, सर्वमहं वदिष्यामि" इत्युक्तवन्तं तं ते सर्वे राजपुरुषा राजान्तिकमनयन्। स च चौरः (ग) आमूलात् सर्वं रात्रिवृत्तान्तं राज्ञे न्यवेदयत्, अब्रवीच्च,—"देव ! न चेत् मद्वचसि तव प्रत्ययः, तत् सा नासा तस्य शवस्य मुखे अद्यैव निरीक्ष्यताम्"। तत् श्रुत्वा (घ) वीक्षितुं भृत्यान् प्रेष्य, तेषाञ्च मुखात् सत्यमवेत्य स राजा तं वणिक्पुत्रं वधदण्डात् विमुच्य, तां दुष्टां वसुदत्तां कर्णावपि छित्त्वा, देशात् निरवासयत्, तच्च तत्पितरं वणिजं सर्वस्वमदण्डयत्; तुष्टश्च तं चौरं पुराध्यक्षमकरोच्च।

---

वाद्यविशेषः, तेन सह विद्यमानं सडिण्डिमं—वाद्यविशेषसहितं, डिण्डिमवाद्यताडनपूर्वकमित्यर्थः (क्रिया विश०)। नीयमाने—प्राप्यमाणे (भावे ७मी०। नी + कर्म्मणि शानच्), राजपुरुषैरिति शेषः। वृत्तमनतिक्रम्य इति यथावृत्तं—सत्यवृत्तान्तमित्यर्थः (याथार्थ्ये अव्ययी०)। वेद्मि—जानामि (विद + लट्-मिप्)। नयत—प्रापयत (नी + प्रार्थनायां लोट्-त), यूयमिति शेषः।

(ग) मूलात्—आद्यात्, प्रथमादित्यर्थः, ("मूलमाद्ये शिफाभयोः" इत्यमरः) आरभ्य आमूलात्—मूलमारभ्य शेषपर्य्यन्तमित्यर्थः ["आङ्मर्य्यादाऽभिविध्योः" (२।१।१३ पा०) इति अभिविधावव्ययी०। "पञ्चम्यपाङ्परिभिः" (२।३।१० पा०) इति आङ्योगे ५मी० ]। राज्ञे—नृपाय ["क्रियया यमभिप्रैति—" (वा०) इति ४र्थी० ], न्यवेदयत्—व्यज्ञापयत् (नि + विद + णिच् + लङ्-द)। प्रत्ययः,—विश्वासः। निरीक्ष्यतां—दृश्यतां (निर् + ईक्ष + कर्म्मणि लोट्-ताम्), भवतेति शेषः।

(घ) वीक्षितुं—द्रष्टुं (वि + ईक्ष + तुमुन्), नासामिति शेषः। प्रेष्य—प्रेरयित्वा (प्र + इष + ल्यप्)। अवेत्य—अवगम्य, विज्ञायेत्यर्थः, [अव + इ + ल्यप् "ह्रस्वस्य पिति—" (६।१।७१ पा०) इति तुक्]। कर्णावपि—पूर्वं नासा छिन्ना आसीत्, इदानीं कर्णावपि छिन्नौ भवतः इत्यपेरर्थः; छित्त्वा—कर्त्तित्वा (छिद + क्त्वा)। निरवासयत्—निरकाशयत, बहिरकारयत् इत्यर्थः (निर् + वस + णिच् + लङ्-द), राजाभिरिति शेषः। सर्वं—सकलं, स्वं—धनं सर्वस्वं—सर्वधनं

राजपुत्र ! इत्थं (व) निसर्गविषमाः शठा योषितः" इति वदन्नेव शुकः चित्ररथो नाम गन्धर्वराजो भूत्वा इन्द्रशापक्षयात् दिव्यरूपमास्थाय दिवमगात्। सा च सारिका (श) सपदि सुराङ्गना तिलोत्तमा भूत्वा तथैव क्षीणशापा दिवमुदपतत्। तयोस्तु तस्यां सभायां (ष) विवादो न निर्णीतः"।

इत्याख्याय स वेतालस्तं नृपमपृच्छत्,—"राजन् ! वदतु

---

(कर्मधा०), अदण्डयत्—अदमयत्, सर्वधनापहरणरूपं दण्डं व्यदधात् इत्यर्थः (दण्ड +णिच्+लङ्-द। दण्डयतेर्द्विकर्मकत्वात् "वणिजं" "सर्वस्वम्" इति कर्मद्वयम्)। पुराध्यक्ष—नगररक्षकप्रधानमित्यर्थः।

(व) निसर्गात्—स्वभावादेव ("निर्माणे च स्वभावे च निसर्गः सृष्टिवर्ज्जनः" इति शाश्वत.), विषमाः,—दारुणाः, भीषणप्रकृतय इत्यर्थः (विण० । पुमौ तत्पु०), शठाः,—अनृजुस्वभावाः, कुटिलाशयाः इति यावत् (विण०। "निकृतस्त्वनृजुः शठः" इत्यमरः), योषितः,—स्त्रियः ("स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः" इत्यमरः)। इन्द्रेण दत्तः शापः,—आक्रोशः, "त्वम् एतावन्त कालं शुकरूपो भव" इत्येवंरूपानिष्टाभिशंसनामित्यर्थः (शाकपार्थि० । "आक्रोशे शपथे शापः" इति शाश्वतः), तस्य क्षयात्—अवसानात् इन्द्रशापक्षयात्—इन्द्रनिरूपितशापावधिकालपर्यवसाना दित्यर्थः (इभौ तत्पु० । हेतौ पञ्चमी०), दिवि भवं दिव्यं—स्वर्गीयं ["द्युप्रागपागुदक् प्रतीचो यत्" (४।२।१०१ पा०) इति यत्], रूपं—सौन्दर्यं दिव्यरूपम्—अलौकिकाकार (कर्मधा०), आस्थाय—धृत्वा इत्यर्थः (आ+स्था+ल्यप्), दिवं—स्वर्गं ("स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः। सुरलोको द्योदिवौ द्वे स्त्रियौ क्लीवे त्रिपिष्टपम्" इत्यमरः)।

(श) सपदि—तत्क्षणादेव (अव्य० । "सद्यः सपदि तत्क्षणे" इत्यमरः), सुराङ्गना—देवनारी, अप्सरा अप्सरसा वा इति यावत्। तथैव—शुकवदेव, क्षीणः,—अवसितः, शापः,—आक्रोशः, इन्द्रदत्त इति भावः, यस्याः सा क्षीणशापा—विमुक्तशापा (विण० । बहुव्री०)। उदपतत्—उदगच्छत् (उत्+पत+लङ्-द)।

(ष) विवादः,—व्यवहारः, जयपराजयनिर्णयार्थे पक्षयोर्विरुद्धवादरूपः इत्यर्थः ("विवादो व्यवहारः स्यात्" इत्यमरः), निर्णीतः,—निरूपितः, मीमांसित इत्यर्थः (निर्+नी+क्तः), राजपुत्रेणेति शेषः।

भवान्, पापाः पुरुषाः ? (ख) उत योषितः ? जानतस्ते चकथयतः शिरो खण्डशः पतिष्यति" इति। एतत् स्कन्धवार्त्तिनो वेतालस्य वचनमाकर्ण्य स भूपतिस्तं योगीश्वरं वेतालमवादीत्,—"वेताल ! कोऽपि च तादृक् पुरुषः क्वचित् कदाचित् दुराचारः, स्त्रियस्तु प्रायशः पापा दृश्यन्ते, श्रूयन्ते च"। इत्युक्तवतो नृपस्य स्कन्धात् (ङ) प्राग्वत् स वेतालः क्वापि प्रनष्टोऽभूत्। राजा च पुनस्तदानयने यत्नमकरोत्।

---

## अथ चतुर्थकथा।

ततः स त्रिविक्रमसेनो नृपतिः पुनस्तस्य शिंशपातरोर्मूलं गत्वा निशि तं (क) मुक्ताट्टहासं शवाधिष्ठितं वेतालं प्राप्य निष्कम्पः तथैव स्कन्धमारोप्य तस्य भिक्षोः सकाशमुदचलत्।

---

(ख) उत—अथवा (अव्य०)। खण्डं खण्डं खण्डशः,—खण्डखण्डपरिमितं भूत्वा इत्यर्थः [अव्य०। "सङ्ख्यैकवचनाच्च वीप्सायाम्" (५।४।४३ पा०) इति खण्ड +शस्]।

(ङ) प्राग्वत्—पूर्ववत्, प्रथमद्वितीयकथाऽवसाने यथा स्वस्थानमगच्छत्, तथेत्यर्थः। प्रनष्टः,—अदर्शनं गतः, पूर्ववत् शिंशपातरुमाश्रयदित्यर्थः।

---

(क) मुक्तः,—निरर्गलीकृतः, विस्तारितः इत्यर्थः, न बद्धः इति यावत्, अट्टहासः,—उच्चैर्हासः येन तं मुक्ताट्टहासं—कृतविकटहास्यमित्यर्थः (विश०। बहुव्री०)। निः,—नास्ति, कम्पः,—भयजनितवेपथुः यस्य सः, यद्वा,—निः,—निर्गतः, विरहितः इत्यर्थः, कम्पात्—भयजवेपथोः यः सः निष्कम्पः,—निर्भय इत्यर्थः (विश०। बहुव्री०)। उदचलत्—समगच्छत्, (उत्+चल+लङ्-द)।

तच्च (ख) चलन्तम् अंसस्थ: स वेताल: पुनरब्रवीत्,—"राजन् ! दुराचारस्य अस्य भिक्षो: कृते कोऽयं ते प्रयास: ? निष्फले अमुष्मिन् प्रयत्ने तव विवेको न दृश्यते ; यद् भवतु, त्वद्भक्त्या तवाध्वश्रमविनोदिनीमपरामेकां कथां कथयामि, श्रूयताम्,—

अस्ति शोभावती नाम ( ग ) यथार्थनाम्नी कापि नगरी, तस्यामभूत् शूद्रको नाम प्रभूतपराक्रमो महाप्रतापो नृपति: । यस्य ( घ ) जयिन: प्रतापानलोऽनवरतं वन्दीकृतारिवनिता-

( ख ) चलन्तं—गच्छन्तं [ विशे० । चल+शतृ तस्य "उगिदचां सर्वनामस्थानेऽधातो:" ( ७।१।७० पा० ) इति नुम ], अंसे—स्कन्धे ( "स्कन्धो भुजशिरोऽंसोऽस्त्री" इत्यमर: ), तिष्ठति इति स: अंसस्थ:,—स्कन्धस्थित: [ सुपि उपपदे समा० । अंस+स्था "सुपि स्थ:" ( ३।२।४ पा० ) इति क: ] । कृते—निमित्तं, कार्य्यसाधनाय-मित्यर्थ:, प्रयास: ?—प्रयत्न: । दुर्जनभिक्षोर्मनोरथपूरणार्थं तवायं प्रयत्न: न युक्त: इति भाव:, निष्फले—फलसिद्धिविरहिते इत्यर्थ: ( विशे० )। विवेक:,—विचारबुद्धि-रित्यर्थ:, इदं सत् इदमसत् इत्यादि विचारपूर्वकं वस्तुस्वरूपावधारणशक्तिरिति यावत्, ( "विवेक: स्याज्जलद्रोण्यां पृथग्भावविचारयो:" इति मेदिनी )। त्वत्—तव, भक्त्या—कार्य्यसम्पादने एकाग्रचित्तवृत्तितया इत्यर्थ:, त्वद्भक्त्या—तव चित्तदार्ढ्येन इत्यर्थ:, प्रीतोऽहमिति पदद्वयमूहनीयम् ; यद्वा,—त्वयि भक्त्या—श्रद्धया, तव विचार-नैपुण्याङ्गीकृतपरिपालनाग्रहादिदर्शनात् त्वयि मे अनुरागाधिक्यात् इत्यर्थ:, त्वद्भक्त्या —त्वयि प्रीत्या ( ६ष्ठी वा ७मी तत्पु० । हेतौ ३या० )।

( ग ) यथार्थ:,—अर्थमनतिक्रान्त:, अर्थानुरूप इत्यर्थ:, नाम यस्या: सा यथार्थ-नाम्नी—अन्वर्थसंज्ञिका, अतीव शोभासम्पन्ना इत्यर्थ: । प्रभूत:,—महान्, पराक्रम:,—शक्ति:, दैहिकबलम्, उद्योगो वा इत्यर्थ:, यस्य स: प्रभूतपराक्रम:,—महाबल:, महोत्साहसम्पन्नो वा ( विशे० । बहुव्री० । "शक्त्युद्योगौ पराक्रमौ" इत्यमर: ), महान—अतिशय:, प्रताप:,—कोषदण्डजं तेज: ( "स प्रताप: प्रभावश्च यत्तेज: कोषदण्डजम्" इत्यमर: ) यस्य स: महाप्रताप:,—प्रभावातिशयवान् ( विशे० । बहुव्री० )।

( घ ) जयति अरीन् इति तस्य जयिन:,—जयशीलस्य [ जि+"जिदृक्षि—" ( ३।२।१५७ पा० ) इति कर्त्तरि इनि: ], प्रताप:,—कोषदण्डजं तेज:, अनल इव,

धृतचामरमारुतैः ज्वलति स्म । (ङ) येन च अलुप्तधर्मचरणा स्फीता वसुन्धरा रामादीनपि भूपतीन् विसस्मार ।

कदाचित् तं महीपालं (च) प्रियशूरं सेवितुं मालवात्

---

शत्रुकुलदाहकत्वादिति भावः, प्रतापानलः,—तेजोवह्निः (उपमितिस०)। बन्दीकृताभिः,—युद्धे जयलाभात् बलपूर्व्वकं स्वपुरमानीताभिरित्यर्थः, अरिवनिताभिः,—शत्रुनारीभिः, यद्वा,—बन्दीकृतानां—कारावद्धीकृतानाम्, अरीणां—शत्रूणां, वनिताभिः, धृतानाम्—आदृतानां (३या तत्पु०), चामराणां—वालव्यजनानां, मारुतैः,—वायुभिः बन्दीकृतारिवनिताधृतचामरमारुतैः,—आत्माधीनीकृतशत्रुनारीकरस्थितचामरानिलैः (६ष्ठी तत्पु०। करणे ३या०), ज्वलति स्म—जज्वाल, उद्दिदीपे इत्यर्थः [ ज्वल+"लट् स्मे" (३।२।११८ पा०) इति अतीते लट् ]।

(ङ) येन—राज्ञा हेतुना (हेतौ ३या), अलुप्तम्—अविनष्टं, धर्म्मचरणं—पुण्यकर्मानुष्ठानं, धर्म्मशास्त्रविहिताचारानुष्ठानं वा ("धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः" इत्यमरः) यस्याः यस्यां वा तादृशी अलुप्तधर्म्मचरणा—अविनष्टधर्मानुष्ठाना (विण०। बहुव्री०), नियततयागाद्यनुष्ठानादिति भावः अत एव स्फीता—समृद्धा, प्रभूतधनधान्याद्यैश्वर्य्यशालिनीत्यर्थः, अविरतं धर्म्मशास्त्रबोधितयागादिपुण्यकर्मानुष्ठानाद्धोमकर्म्मणि उत्थिता धूमा सूर्य्यमण्डलं गत्वा मेघरूपेण परिणमन्ति, ततः सुवृष्टिः जायते, सुवर्षणेन च पृथ्वी शस्यसम्पदा शालते, अतः वसुन्धरायाः स्फीततायां धर्माचरणस्य हेतुत्वं बोद्धव्यं, तथा च मनुः,—"अग्नौ दत्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" ॥ इति [विण०। स्फाय+क्तः "स्फायः स्फी निष्ठायाम्" (६।१।२२ पा०) इति स्फायते इत्यस्य स्फ्यादेशः, ततः स्त्रियां टाप्], वसूनि—धनानि रत्नानि वा ("देवभेदेऽनले रश्मौ वसूरत्ने धने वसु" इत्यमरः), धारयतीति वसुन्धरा—पृथिवी [वसु+धृ+णिच्+पचाद्यच् "संज्ञायां भृतृवृजिधारिसहितपिदमः" (३।२।४६ पा०) इति खच् "अरुर्द्विषदजन्तस्य मुम्" (६।३।६७ पा०) इति अजन्तस्य वसुशब्दस्य मुमागमः, "खचि ह्रस्वः" (६।४।९४ पा०) इति उपधाया ह्रस्वः "णेरनिटि" (६।४।५१ पा०) इति णिचो लोपः, ततः स्त्रियां टाप्]। विसस्मार—विस्मरति स्म, न मनसि चिन्तयामास इत्यर्थः (वि+स्मृ+लिट्-णल्)।

(च) प्रियाः,—प्रेमाऽऽस्पदाः, शूराः,—वीराः यस्य तं प्रियशूरं—वीरभक्तं (विण०। बहुव्री०), सेवितुं—परिचरितुं, परिचर्य्यां कर्त्तुमित्यर्थः (सेव+तुमुन्)।

कश्चित् वीरवरो नाम क्षत्रियः समागात्; तस्य धर्मवती नाम भार्य्या, शक्तिधरो नाम सुतः, वीरवती नाम्नी कन्या आसीत्। (छ) सेवापरिच्छदस्तस्य त्रयमेव, कक्ष्यां कृपाणिका, करे तरवारिः, अपरे च करे चर्म; एतावन्मात्रपरिच्छदपरीवारः स प्रत्यहं तं राजानं दीनारशतपञ्चकं वेतनं प्रार्थयामास। राजा च तम् (ज) आकारसूचितोदारपौरुषं मत्वा, तस्मै यथेप्सितां वृत्तिं ददाति स्म, स्थापयति स्म च कौतुकात् प्रच्छन्नं चारान् तत्पृष्ठतः 'किमेभिः प्रभूतैर्वेतनैरेष करोति?' इत्यन्वेष्टुम्।

---

(छ) सेवार्थे—परिचरणाय, परिच्छदः,—उपकरणं सेवापरिच्छदः,—नृपाराधनसाधनद्रव्यविशेषः इत्यर्थः (४र्थी तत्पु०)। त्रयमेव—त्रीणि द्रव्याणि स राजसेवार्थमानीतवानिति निष्कर्षः। अल्पा कृपाणी कृपाणिका—छुरिका [ कृपाणी+अल्पार्थे कन्, स्त्रियां टाप्, "केऽणः" (७।४।१३ पा०) इति ह्रस्वः। "कृपाणः खड्ग कर्त्तर्य्योरपि योषिति" इति मेदिनी)। एतावन्मात्रम्—एतत्त्रयमिदमेव, कृपाणिकातरवारिचर्म्मरूपैकत्रयं भार्य्यापुत्रकन्यारूपञ्चापरत्रयमित्यर्थः, परिच्छदपरीवारौ—उपकरणपरिजनौ यस्य सः एतावन्मात्रपरिच्छदपरीवारः,—एतावन्मात्रद्रव्योपकरणत्रयसमन्वितः इत्यर्थः (विशे०। बहुव्री०), यद्वा,—एतावन्मात्रपरिच्छदेन केवलैतदुपकरणत्रयेण, परिव्रियते—परिवेष्ट्यते यस्तादृशः [ परि+वृ+कर्मणि घञ् "उपसर्गस्य घञ्यमनुष्ये बहुलम्" (६।३।१२२ पा०) इति उपसर्गस्य दीर्घः ], कृपाणिकाद्युपकरणत्रयपरिवृतः इत्यर्थः। अह्नि अह्नि इति प्रत्यहं—प्रतिदिनं (वीप्सायामव्ययी०)। दीनाराणां—रूप्यमुद्राणां स्वर्णमुद्राणां वा, शतपञ्चकं—पञ्चशतानि दीनारशतपञ्चकं—पञ्चशतमुद्रामात्रं (६ष्ठी तत्पु०)। प्रार्थयामास—ययाचे [ प्र+अर्थ+णिच्+लिट्-णल् "कास्प्रत्ययात्—" (३।१।३५ पा०) इति आम् "कृञ्चानु—" (३।१।४० पा०) इति आमन्तादसनुप्रयोगः ]।

(ज) आकारेण—आकृत्या, सूचितं—प्रकटितम्, उदारं—महत्, पौरुषं—पुरुषत्वं, तेज इति यावत् ("पौरुषं पुरुषस्य स्यात् भावे कर्म्मणि तेजसि" इति मेदिनी) यस्य तादृशं (विशे०। बहुव्री०)। तस्मै (सम्प्र० ४र्थी०), ईप्सितामनतिक्रम्य यथेप्सितां—यथाभिलषितां, प्रार्थनाऽनुरूपामित्यर्थः (विशे०। याथार्थ्येऽव्ययी०), वृत्तिं—जीविकां, वेतनमित्यर्थः। स्थापयति स्म—नियोजयामास इत्यर्थः। प्रच्छन्नं—

स च वीरवरः प्रातः राजदर्शनं कृत्वा, मध्याह्ने (भ) धृतायुधः तस्य सिंहद्वारे स्थित्वा च स्ववृत्तिलब्धानां दीनाराणां शतं गार्हस्थ्यनिर्वाहाय भार्य्याया हस्ते प्रादात्; अपरेण च शतेन वस्त्रम् अङ्गरागं ताम्बूलादीनि च क्रीणाति स्म; अपरञ्च शतं स्नात्वा विष्णोः शिवस्य च पूजार्थं विनियुयोज; अन्यच्च शतद्वयं विप्रेभ्यः दरिद्रेभ्यश्च प्रादात्। एवं (ञ) विभज्य प्रत्यहं तानि पञ्चशतानि स व्ययीचकार। ततश्च (ट) अग्निकार्य्यादिकं विधाय भुक्त्वा च निशि एकाकी तदेव सिंहद्वारं धृतकृपाणचर्मा प्रत्यहं तस्थौ। एतत् सर्वं चारमुखात् श्रुत्वा

---

गुप्तं यथा तथा (क्रिया विश०), चारान्—गूढ़चरान्. तत्पृष्ठतः,—तस्य पश्चात् (समस्यार्थासल्)। अन्वेष्टुम्—अनुसन्धातुम्, अनुसन्धानायेत्यर्थः (अनु+इष+तुमुन्)।

(भ) धृतं—गृहीतम्, आयुध्यते अनेन इति आयुधम्—अस्त्रम् [आ+युध+"घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थं" (वा०) इति कः] येन तथाभूतः धृताऽऽयुधः,—गृहीतास्त्रः सन् (विश०। बहुव्री०)। सिंहाचिह्नितं द्वारं तस्मिन् सिंहद्वारे—पुरीप्रवेशयोग्ये द्वारे इत्यर्थः (शाकपार्थि०)। स्वस्य—आत्मनः, वृत्त्यै—जीविकायै, जीविकानिर्वाहायेत्यर्थः, वृत्त्या—व्यवहारेणेति वा, राजसेवारूपेणेत्यर्थः, लब्धानां—प्राप्तानां स्ववृत्तिलब्धानां—स्वोपार्जितानामित्यर्थः (४र्थी तत्पु०)। गृहस्थस्य कर्म्म गार्हस्थ्यं—गृहस्थाश्रमकर्त्तव्यकर्म्म, भोजनाच्छादनातिथिसेवनादिरूपं कर्म इत्यर्थः (गृहस्थ+ष्य), तस्य निर्वाहाय—सम्पादनाय गार्हस्थ्यनिर्वाहाय—गृहस्थधर्मसम्पादनाय [६ष्ठी तत्पु०। "तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति ४र्थी०]। क्रीणाति स्म—चिक्राय, मूल्यदानेन जग्राह इत्यर्थः। विनियुयोज—व्ययाञ्चक्रे इत्यर्थः (वि+नि+युज+लिट-णल्)।

(ञ) विभज्य—विभागं कृत्वा (वि+भज+ल्यप्)। अव्ययम्—अव्ययितव्यं, धनमिति शेषः, अव्ययं व्ययितं चकार व्ययीचकार—विससर्ज इत्यर्थः [व्यय+कृ+लिट्-णल् "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" (५।४।५० पा०) इति अभूततद्भावे च्विः]।

(ट) अग्निकार्य्यादिकं—होमादिकम्। भुक्त्वा—खादित्वा (भुज+क्त्वा)।

राजा शूद्रकः भृशं (ठ) तुतोष, निवारयामास च तान् चारान् पुनस्तस्य मार्गणे ; मेने च विशेषपूजार्हं तं पुरुषातिशयम् ।

अथ (ड) गच्छत्सु दिनेषु एकदा धारावर्षिणि दिवानिशं जलदपटले गगनमाहृण्वति, जनरहिते च समन्तात् राजमार्गे, एकाकी स वीरवरस्तस्मिन् सिंहद्वारे एवातिष्ठत् । स च राजा दिनपतावस्तं गते तादृशे भीषणे (ढ) तमसि विजृम्भिते सधारावर्षे, तस्य वीरवरस्य भावं जिज्ञासुः निशि प्रासादाग्र-

---

धृते—गृहीते, कृपाणचर्मणी—असिफलके येन तादृशः धृतकृपाणचर्मा—गृहीतासिफलकः सन्, असिचर्मणी गृहीत्वेत्यर्थः (विण० । बहुव्री० । चर्म "ढाल" इति ख्यातम्) ।

(ठ) तुतोष—पिप्राय, सन्तुष्टो बभूव इत्यर्थः (तुष + लिट्-णल्), निवारयामास—निषेधयामास [नि + वृ + णिच् + लिट्-णल् "कास्प्रत्ययात्—" (३।१।३५ पा०) इति आम् "कृञ्चानु—" (३।१।४० पा०) इति असनुप्रयोगः] । मार्गणे—अन्वेषणे, पञ्चशतमुद्राभिः किं करोति इत्यस्य अनुसन्धानार्थमित्यर्थः (विषये ७मी० । "मार्गणो याचके शरे । याञ्चाऽन्वेषणयोः क्लीवम्" इति मेदिनी), मेने—विवेचयामास (मन + लिट्-ए), विशेषाम्—असामान्यां, पूजाम्—अर्चाम्, अर्हति—युज्यते इति तं विशेषपूजार्हम्—अतीवादरयोग्यम् (उपपदस० । विशेषपूजा + अर्ह + पचाद्यच्) । पुरुषेषु—सामान्यनरेषु, अतिशयः,—अधिकगुणयुक्तः इत्यर्थः, तं पुरुषातिशयं—पुरुषप्रधानम् (७मी तत्पु०) ।

(ड) गच्छत्सु (भावे ७मी०) । धारां—जलधारामित्यर्थः, वर्षति—स्रवति इति तस्मिन् धारावर्षिणि—निरन्तर जलस्राविणि (विण० । धारा + वृष + ग्रहादित्वात् णिनिः), दिवा च निशा च दिवानिशं—रात्रिन्दिवं ["विप्रतिषिद्धं चानधिकरणवाचि" (२।४।१३ पा०) इति द्वन्द्वैकवद्भावः], जलदानां—मेघानां, पटले—समूहे जलदपटले—मेघजाले (विण० । ६ष्ठी तत्पु०) । आवृण्वति—आच्छादयति सति (भावे ७मी० । आ + वृ + शतृ तस्मिन्) । समन्तात्—सर्वतः, चतुर्दिक्षु इत्यर्थः (अव्य०) ।

(ढ) तमसि—अन्धकारे, विजृम्भिते—विवर्द्धिते इत्यर्थः, दिशो व्याप्नुवति

मारुह्य जगाद,—"कोऽत्र सिंहद्वारि स्थितः ?" इति । तदाकर्ण्य, —"अहमेव स्थितः" इति वीरवरः प्रत्यवादीत् । "अहो ! (थ) महासत्त्वोऽयं वीरवरः महान्तः, तदेष मया अवश्यमेव महत् पदं प्रापणीयः" इति सञ्चिन्त्य राजा प्रासादादवतीर्य्य अन्तःपुरं प्रविश्य शयनमगात् ।

(त) अन्येद्युश्च तथैव मेघेषु धाराऽऽसारान् वर्षत्सु निशायां, भुवने कालतमसि विजृम्भिते, राजा पुनश्च तद्भावं जिज्ञासुः

---

इति भावः (भावे ७मी० । वि+जृभि+क्तः तस्मिन्), धारावर्षेण—अविश्रान्त-वारिवर्षणेन, सहिते सधारावर्षे—वारिवर्षणसहिते (तमसि इत्यस्य विण० ) । भावम्—अभिप्रायं, प्रभुविषयकं मानसावस्थाविशेषमिति यावत्, यद्वा,—भावं—सत्तां, विद्यमानतामित्यर्थः, ईदृग्भीषणसमये वीरवरः द्वारि तिष्ठति न वा इत्येवंरूपमिति भावः ("भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु" इत्यमरः), जिज्ञासुः,—ज्ञातुमिच्छुः सन् [ज्ञा+सन्+"सनाशंसभिक्ष उः" (३।२।१६८ पा० ) इति उः ]। प्रासादाग्रं—सौधशिखरम्. आरुह्य—उत्थाय (आ+रुह+ल्यप्) ।

(थ) महत्—विपुलं, सत्त्वं—बलं, यद्वा,—महत—उदारं, सत्त्वं—स्वभावः यस्य सः महासत्त्वः,—महाबलः उदारस्वभावो वा [ विण० । बहुव्री० । "आन्महतः समानाधिकरणजातीययोः" (६।३।४६ पा० ) इति समानाधिकरणे उत्तरपदे परे महतस्तकारस्याकारः । "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति मेदिनी ] । महत—उन्नतं, पदं—स्थानम्, अमात्यपदादिरूपमिति यावत्, प्रापणीयः,—स्थापनीय इत्यर्थः (प्र+आप+णिच्+अनीयर् । अत्र "एषः" इति उक्ते कर्मणि प्रथमा ), एष मया उन्नतपदे अवश्यमेव स्थापयितव्य इत्यर्थः । शयनं—निद्रां शय्यां वा ("शयनं सुरते निद्राशय्ययोश्च नपुंसकम्" इति मेदिनी ) ।

(त) अन्येद्युः,—अन्यस्मिन्नहनि [ अव्य० । "पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस्" (वा० ) इत्यनेन अन्य+एद्युस् ]। धारया—सन्तत्या, अविच्छिन्नतयेत्यर्थः, आसारान् —महावेगेन वृष्टीः धाराऽऽसारान्—प्रबलवारिप्रवाहानित्यर्थः (३या तत्पु० । "अश्वानां गतयः पञ्च धारा धारा च सन्ततिः" इति "आसारः स्यात् प्रसरणे वेगात् वर्षे सुहृद्बले" इति च शाश्वतः )। काले—प्रलयकाले, यत् तमः, तदिव तमः,—

प्रासादमधिरुह्य सिंहद्वारमभि—"कोऽत्र स्थितः ?" इति व्याजहार। वीरवरेण च,—"अहं स्थितो देव !" इति (थ) प्रोक्ते स राजा भृशं विसिस्मिये, शुश्राव च तावदतिदूरे सहसा रुदतीं कामपि स्त्रियं वामस्वरेण ; व्यचिन्तयच्च,—"केयं विषादविकलेव सप्रलापकरुणं विरौति ? राष्ट्रे च मम पराभवः नास्ति, न दरिद्रः, नापि कश्चित् दुःखितः, तदेषा का ?" इति। आदिदेश च करुणार्द्रचेताः तं वीरवरमधःस्थितं,—"भो वीरवर ! शृणु, एषा दूरे काऽपि रोदिति, किमर्थमसौ रोदिति, का चेयम् ? त्वया गत्वा एतत् निरूप्यताम्" इति।

तदाकर्ण्य स वीरवरः (द) "तथा" इत्युक्त्वा निष्कासितखड्गः

अन्धकारः तस्मिन् कालतमसि—गाढान्धकारे इत्यर्थः, यद्वा,—कालः,—महाकालः, सर्वभूतान्तकः इति भावः, स इव तमः तस्मिन् तादृशगाढान्धकारस्य दस्युतस्करनरघातकादीनां स्वकार्यसाधनोपयोगित्वात् कालतुल्यत्वमवधातव्यम्। सिंहद्वारमभि—सिंहद्वारं लक्ष्यीकृत्य, सिंहद्वाराभिमुखीभूयेत्यर्थः [ "अभिरभागे" (१।४।९१ पा०) इति सूत्रेण अभिसाहचर्यात् सिंहद्वारमित्यस्य कर्मसंज्ञा ]।

(थ) प्रोक्ते—कथिते [ भावे ७मी०। प्र+वच+क्तः "वचिस्वपि—" (६।१।१५ पा०) इति सम्प्रसारणम् ]। विसिस्मिये—विस्मयाम्बभूव, विस्मितो बभूवेत्यर्थः [ वि+स्मि+लिट्-ए "आदेशप्रत्यययोः" (८।३।५९ पा०) इति षत्वम् ], शुश्राव—आकर्णयामास (श्रु+लिट् णल्)। वामः,—प्रतीपः, विकृत इत्यर्थः ("वामौ वल्गुप्रतीपौ" इत्यमरः), स्वरः,—ध्वनिः तेन वामस्वरेण—विकृतस्वरेणेत्यर्थः (करणे ३या०)। विषादेन—मनोदुःखेन, विकला—व्याकुला, सा इव विषादविकलेव—दुःखाऽऽर्त्तेव (३या तत्पु०), प्रलापः,—अर्थरहितं वचनं, करुणः,—दीनस्वर इति यावत्, ताभ्यां सह वर्त्तमानं सप्रलापकरुणं—सविलापं यथा तथेत्यर्थः (क्रिया विश०), विरौति—शब्दायते, क्रन्दतीत्यर्थः (वि+रु+लट्-तिप्), राष्ट्रे—राज्ये। पराभवः,—तिरस्कारः, सबलेन दुर्बलस्य पीडनमिति भावः। करुणया—कृपया, आर्द्रं—क्लिन्नं, चेतः,—मनः यस्य सः करुणार्द्रचेताः,—दयाऽऽर्द्रमनाः (विश०। बहुव्री०)। निरूप्यतां—निर्णीयतां (नि+रूप+णिच्+कर्मणि लोट्-ताम्)।

(द) तथा—तदेवास्तु इत्यर्थः (स्वीकारार्थकमव्ययमेतत्। "तथाऽभ्युपगमे पृष्ट-

करतलधृतकरवालश्च गन्तुं प्रावर्त्तत, नागणयत् तत् स्थूल-धाराशिलावर्षि ज्वलद्विद्युद्विलोचनं नवमेघान्धकारम्। तञ्च तादृश्यां निशायां प्रस्थितमेकाकिनं दृष्ट्वा (ख) करुणा-कौतुकाऽऽविष्टो राजा प्रासादादवतीर्य्य गृहीतासिरेकाकी अनुपलक्षितः तमनुजगाम।

स च वीरवरः (ग) रुदितमनुसरन् नगर्य्या बहिः सरो-वरमेकं प्राप, ददर्श च तत्र,—"हा शूर! हा कृपालो! हा वदान्य! त्वया शून्या कथमहं वत्स्यामि?" इत्येवं रुदतीं

---

प्रतिवाक्ये समुच्चये। सदृशे निश्चयेऽपि स्यात्" इति मेदिनी। अभ्युपगमः स्वीकारः)। निबद्धः,—बद्ध्वा संस्थापित इत्यर्थः, असिधेनुः,—छुरिका ("छुरिका चासिधेनुका" इत्यमरः) येन तादृशः (विश०। बहुव्री०), करतले—पाणौ, धृतः,—गृहीतः, करवालः,—असिः येन तादृशः (विश०। बहुव्री०)। प्रावर्त्तत—प्राक्रमत, आरभत इत्यर्थः (प्र+वृत+लङ् त)। अगणयत्—अमन्यत, गणितवानित्यर्थः (गण+णिच्+लङ्-द)। स्थूला—पीवरा, धारा—जलधारा, शिला—करका, तयोः वर्षः,—वर्षणम् अस्ति अस्मिन् समये इति (अस्त्यर्थे इनिः) स्थूलधाराशिलावर्षि—शिलावर्षण-सहितप्रबलजलधारायुक्तं (विश०), ज्वलन्ती—स्फुरन्ती, विद्युत्—सौदामनी, विलो-चनं—नेत्रमिव यस्य तत्, चक्षुषोः विद्युतश्च तैजसत्वात् रूपदर्शकसामर्थ्याच्च विद्युति नेत्रत्वारोपः मन्तव्यः (विश०। बहुव्री०), नवमेघेन—नूतनजलदेन हेतुना, अन्ध-कारं—तमः नवमेघान्धकारं—गाढान्धतमसम्।

(ख) करुणया—तादृशे अन्धकारे असहायस्य तस्य विपदाशङ्काजनित-दयया, कौतुकेन—तस्य कार्य्यदर्शनकौतूहलेन च, आविष्टः,—आसक्तः करुणा-कौतुकाऽऽविष्टः,—सदयकौतूहलाऽऽक्रान्तः (विश०। ३या तत्पु०)। गृहीतः,—अवलम्बितः, असिः,—खड्गः येन तादृशः गृहीतासिः,—धृतकृपाणः (विश०। बहुव्री०)।

(ग) रुदितं—"क्तदभिहितभावो द्रव्यवत् प्रकाशते" इति न्यायात् रोदन-मित्यर्थः (अनुलक्ष्यार्थात् इत्थम्भूतलक्षणे २या०। रुद+भावे क्तः), अनु—लक्ष्यीकृत्य, सरन्—गच्छन्, अनुसरन्—लक्ष्यीकुर्वन् (अनु+सृ+शतृ)। हा वदान्य!—हा बहुप्रद! भूरिदायिन्! इत्यर्थः ("स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे"

वारिमध्यवर्त्तिनीं कामपि स्त्रियम्। स च वीरवरः,—"का त्वम्? कथं वा रोदिषि?" इति विस्मितः सचकितमपृच्छत्। सा (प) अभ्यधात्,—"भो वीरवर! मां पृथिवीं जानीहि, अस्याश्च मम इदानीं धार्मिकः शूद्रको नाम राजा भर्त्ता; इतश्च तृतीये दिने तस्य राज्ञो मृत्युर्भविष्यति, तादृशमन्यं पतिं कथमवाप्नुयामिति शोकेन विधुराऽहं शोचामि" इति।

एतदाकर्ण्य स वीरवरस्त्रस्त इव तामब्रवीत्,—"देवि! अस्ति कश्चिदस्य (फ) प्रतीकारः? येनास्य जगत्प्रभो रक्षा स्यात्?" इति। तस्य वचनमाकर्ण्य सा वसुमती प्रत्यभाषत,—"वत्स! एक एवास्त्युपायः, कर्त्तुञ्च शक्तो भवान्" इति। वीरवरोऽवदत्,—देवि! तद्वद द्रुतं, (ब) यावत् शीघ्रं तत् साधयामि; अन्यथा कोऽर्थः प्राणैरस्माकम्?"। तदा-

---

इत्यमरः)। वक्ष्यामि—ख्यास्यामीत्यर्थः (वच+लृट्-स्यामि)। सचकितं—सभयसम्भ्रमं यथा तथा (क्रिया विश०), भयञ्च तस्याः रोदनकालिकवचनजातश्रवणेन स्वप्रभोरनिष्टमाशङ्कयेति भावः।

(प) अभ्यधात्—अवदत् [अभि+धा+लुङ्-द "गातिस्था—" (२।४।७७ पा०) इत्यनेन सिचो लुक्]। जानीहि—विद्धि [ज्ञा+लोट्-हि "क्र्यादिभ्यः श्ना" (३।१।८१ पा०) इति श्ना "श्नाऽभ्यस्तयोरातः" (६।४।११२ पा०) इति आकारलोपः "ई हल्यघोः" (६।४।११३ पा०) इति ईः "ज्ञाजनोर्जा" (७।३।७९ पा०) इति जाऽऽदेशः]। भर्त्ता—स्वामी, राज्ञां भूपतित्वात्; इतः,—अद्याऽऽरभ्य इत्यर्थः। अवाप्नुयां—प्राप्नुयाम् [अव+आप+ "शकि लिङ् च" (३।३।१७२ पा०) इति लिङ्-याम्]। विधुरा—विकला, अधीरा सती इत्यर्थः (विश०। "विधुरं स्यात् प्रविश्लेषे न द्वयोर्विकले त्रिषु" इति मेदिनी)। शोचामि—खिद्ये (शुच+लट्-मिप्)।

(फ) प्रतीकारः,—शोधनं, निवारणोपाय इत्यर्थः।

(ब) यावत्—कार्त्स्न्येन, यदादिशति, तत् सम्पूर्णरूपेणेत्यर्थः, यद्वा,—यावत् इति अवधारणे, शीघ्रं यावत्—शीघ्रमेवेत्यर्थः (अव्य०। "यावत् कार्त्स्न्येऽवधारणे"

कथं ( भ ) धरित्री प्राब्रवीत्,—"वत्स ! त्वदन्यः कः प्रवरः स्वामिभक्तः ? तदस्य उपायं शृणु,—अस्य राजकुलस्यान्तिके राज्ञाऽनेन प्रतिष्ठापिता देवी चण्डिकाऽस्ति ; तस्यै चेत् सत्वरं पुत्रमुपहारीकरोषि, तदा एष राजा न म्रियेत, अन्यत् शतं समा जीवेत् । अद्यैव चेत् भवता एतत् क्रियते, तदैव (म) शिवं, नान्यथा" इति । पृथिव्या तथाऽभिहितः स वीरो वीरवरस्तदा,—"यामि देवि ! करोमि अधुनैव एतत्" इति प्रत्यवादीत् । वसुन्धरा च,—( य ) "भद्रं तेऽस्तु" इत्यभिधाय तिरोदधे । ( र ) गुप्तमनुसृतः स राजा तत् सर्वं शुश्राव ।

ततश्च ( ल ) गूढ़े तस्मिन् राजनि तद्भावं जिज्ञासमाने

---

इति मेदिनी ), साधयामि—सम्पादयामि ( साध+णिच्+लट्-मिप् ), अन्यथा—प्रतीकाराकरणे इत्यर्थः, कोऽर्थः ?—किं प्रयोजनम् ? ( "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः ), प्राणैः ( करणे ३या० ) ।

( भ ) धरित्री—पृथिवी । त्वत्तः अन्यः त्वदन्यः,—त्वया विनेत्यर्थः । प्रवरः,—श्रेष्ठः । राजकुलस्य—राजभवनस्य ( "कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ क्लीवम्" इति मेदिनी )। प्रतिष्ठापिता—यथाशास्त्र यागाद्यनुष्ठानपूर्व्वकमवस्थापिता इत्यर्थः ( विण० । प्रति+स्था+णिच्+क्त. स्त्रियां टाप् )। अनुपहारम्—अकृतोपहारम्, उपहारम्—उपहारीभूतं करोषि उपहारीकरोषि—उपायनीकरोषि, पशुत्वेन प्रकल्प्य बलिं करोषि इत्यर्थः ( अभूततद्भावे च्विः )। शतं समाः,—शतवत्सरान् [ "कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति २या० । "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समा" इत्यमरः ]।

( म ) शिवं—मङ्गलं ( "श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः ), राज्ञो भवेदिति शेषः ।

( य ) भद्रं—शुभम् । तिरोदधे—अन्तर्दधे, अन्तर्हिता बभूव ( तिरस्+धा+लिट्-ए । "तिरोऽन्तर्द्धौ तिर्य्यगर्थे" इति मेदिनी )।

( र ) गुप्तम्—अप्रकाशम्, अलक्षितं यथा तथेत्यर्थः ( क्रिया विण० ), अनुसृतः,—अनुगतः, पश्चात् स्थित इत्यर्थः ( अनु+सृ+क्तः )।

( ल ) गूढ़े—गुप्ते, अप्रकाशमवस्थिते इति यावत् । जिज्ञासमाने—आपृच्छ-

गच्छति स वीरवरस्त्वरितं गृहमगात्, आगत्य च तत्र पत्नीं धर्मवतीं विबोध्य तत् सर्वं वसुन्धराप्रोक्तमर्थं प्राब्रवीत्। साऽपि तदाकर्ण्य तं स्वामिनम् (ब) आह स्म,—"प्रभो ! शिवं भाव्य चेत्, तदा शिशुमेनं प्राबोध्य भवानेव ब्रवीतु"। ततः स वीरवरस्तं सुतं बालं सुप्तं प्राबोध्य वृत्तान्तमाख्याय (श) समवोचत्,—"पुत्र ! त्वयि चण्डिकादेव्या उपहारीकृते राजाऽसौ जीवति, नो चेत् तृतीयेऽह्नि विपत्स्यते"। तदाकर्ण्य बालोऽपि (ष) यथार्थं नाम दर्शयन् अकातरचित्तः सत्वरं पितरमवदत्,—"तात ! यदि राजा मम प्राणैर्जीवेत्, तदाऽहं कृतार्थः, भुक्तास्य च तद-

माने [ जा+सन्+शानच् तस्मिन्, "ज्ञाश्रुस्मृदृशां सनः" (१।३।५७ पा०) इत्या त्मने पदम् ], गच्छति (भावे ७मी०)। विबोध्य—जागरयित्वा, जागरितां कृत्वेत्यर्थः (वि+बुध+णिच्+ल्यप्)।

(ब) आह स्म—ब्रवीति स्म, उवाचेत्यर्थः [ ब्रू+लट्-तिप् "ब्रुवः पञ्चानामादितः आहो ब्रुवः" (३।४।८४ पा०) इति तिपो णल् ब्रुवश्च आहाऽऽदेशः "लट् स्मे" (३।२।११८ पा०) इति स्मयोगे भूते लट् ]। भाव्यम्—अवश्य भवनीयं, [ भू+"ओरावश्यके" (३।१।१२५ पा०) इति ण्यत ]। प्राबोध्य—जागरयित्वा (प+आ+बुध+णिच्+ल्यप्)। ब्रवीतु—कथयतु [ ब्रू+लोट् तुप् "ब्रुव ईट्" (७।३।९३ पा०) इति ईट् ]।

(श) समवोचत्—अकथयत् [ सम्+वच्+लुङ्-द् "अस्यतिवक्ति—" (३।१।५२ पा०) इति अङ "वच उम्" (७।४।२० पा०) इति उम् ]। चण्डिकादेव्यै उपहारीकृते इत्यत्र चण्डिकादेव्यै इति ऐकारस्य "एचोऽयवायावः" (६।१।७८ पा०) इति आयादेशे "लोपः शाकल्यस्य" (८।३।१९ पा०) इति यलोपः ]। चण्डिकादेव्याः इति (शेषे ६ष्ठी वा), उपहारीकृते (भावे ७मी०)। जीवति इत्यत्र दीर्घमिति शेषः। विपत्स्यते—मरिष्यति (वि+पद+लृट्-स्यते)।

(ष) यथार्थं नाम—शक्तिधर इति निजनाम सार्थकमित्यर्थः। न कातरम् —अधीरं, भीतमिति यावत्, चित्तं—मनः यस्य सः अकातरचित्तः,—अदीनमना एवेत्यर्थः (नञ्० । बहुव्री०)। तात !—पितः ! ("तातोऽनुकम्प्ये जनके" इति मेदिनी)। कृतः,—अवसितः, समाप्तिं गतः इत्यर्थः, अर्थः,—जीवितप्रयोजनं "परोप-

स्य परा निष्कृतिः प्रदत्ता स्यात्, तत् किं विलम्ब्यते ? शीघ्रं मां नीत्वा भगवत्या उपहारीकुरुष्व, मज्जीवनेन राज्ञोऽमङ्गल-शान्तिर्भवतु"। इति तेनोक्तो वीरवरः सहर्षं,—(स) "साधु! सत्यं त्वं मत्पुत्रः" इति तमभ्यनन्दयत्। तस्य भार्य्या धर्म्म-वती, कन्या वीरवती च तस्यां रात्रौ ताभ्यां वीरवरशक्ति-धराभ्यां सह चण्डिकागृहे (ह) ययतुः। राजाऽपि (क) छन्न-वेशः तान् पृष्ठतोऽलक्षितः समनुससार।

तत्र देव्याः पुरः पित्रा स्कन्धादवतारितः स शक्तिधरः देवीं प्रणम्य (ख) धैर्य्यराशिः कृताञ्जलिर्न्यवेदयत्,—"देवि! मम शिरस उपहारेण राजाऽसौ अन्यत् शतं वत्सरान् जीवन्

---

कारात् सता हि जीवनम्" इति स्मरणात् राज्ञो जीवनरक्षणरूपपरोपकारकरणेन निजजीवनस्य सार्थक्यसम्पादनादिति भावः, यस्य सः कृतार्थः,—कृतकृत्यः (विशे०। बहुव्री०), भवेयमिति शेषः। परा—श्रेष्ठा, निष्कृतिः,—निष्क्रयः, मूल्यमिति यावत्, यद्वा,—निष्कृतिः,—निर्मुक्तिः, गृहीतात् धनरूप-ऋणात् मोचनमित्यर्थः, प्रदत्ता—प्रत्यर्पिता [प्र+दा+क्तः "दो दद्घोः" (७।४।४६ पा०) इति दा इत्यस्य दथ् आदेशः, ततः स्त्रियां टाप्], भवेदिति शेषः। विलम्ब्यते—प्रतीक्ष्यते, कालातिक्षेपः क्रियते इत्यर्थः (वि+लबि+कर्म्मणि लट्-ते), भवता इति शेषः। भगवत्या इत्य-त्रापि चण्डिकादेव्या इतिवत् सर्वं समधातव्यम्।

(स) साधु—शोभनं, प्रशंसावादमिदम; त्वया यदुक्तं, तत् प्रशंसनीयमित्यर्थः ("कान्तीयाच्छोभनं साधु साधू वार्द्धुषिसज्जनौ" इति शाश्वतः)। अभ्यनन्दयत्—समादियत, प्राशंसदिति वा (अभि+नन्द+णिच्+लङ्-द)।

(ह) ययतुः,—जग्मतुः [या+लिट्-अतुस् "आतो लोपः—" (६।४।६४ पा०) इति आकारलोपः]।

(क) छन्नः,—छादितः, गोपायित इत्यर्थः, वेशः,—नेपथ्यं, निजपरिच्छद इत्यर्थः, येन सः छन्नवेशः,—राजोचितपरिच्छदं विहाय प्राकृतजनोचितपरिच्छद-परिहितः। पृष्ठतः,—पश्चाद्देशे स्थित्वा (ल्यब्लोपे पञ्ची०। पञ्चम्यास्तसिल्)। समनु-ससार—समनुजगाम (सम्+अनु+सृ+लिट्-णल्)।

(ख) धैर्य्यराशिः,—पुञ्जीभूतधैर्य्य इव, महाधीर इत्यर्थः। न्यवेदयत्—व्यज्ञा-

अकण्टकं राज्यं करोतु"। इत्येवं प्रार्थयतस्तस्य सूनोः शक्तिधरस्य शिरश्छित्त्वा वीरवरः चण्डिकायै,—"मत्पुत्त्रोपहारेण राजा जीवतु" इति वदन् प्रददौ। तत्क्षणम् (ग) अन्तरीक्षात् वागुदचरत्,—"कस्त्वदन्यः स्वामिभक्तः? भो वीरवर! येन त्वया एकमात्रपुत्त्रेण तथाविधसत्पुत्त्रप्राणव्ययिना अस्य भूपतेः जीवनं राज्यञ्च दत्तम्" इति।

तच्च सर्वं तस्मिन् नृपे पश्यति शृण्वति च तस्य वीरवरस्य कन्या वीरवती तस्य भ्रातुर्निहतस्य (घ) मूर्द्धानमाश्लिष्य शोकाच्छा स्फुटितहृदया तत्क्षणात् व्यपद्यत। ततो भार्य्या धर्मवती वीरवरमब्रवीत्,—"नाथ! राज्ञस्तावत् (ङ) श्रेयः कृतम्; इदानीमहं वदामि, दृष्टा त्वया, कन्याऽपि मे शोकात् मृता, तदिदानीं नष्टापत्याया मे जीवितेन किम्? प्रागेव मूढ़या

---

पयन् (नि+विद+णिच्+लङ्-द)। न—नास्ति, कण्टकः,—क्षुद्रोऽपि शत्रुः यस्मिन् तादृशं ("कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकशे" इति मेदिनी) अकण्टकं—शत्रुलेशपरिहीनमित्यर्थः (विण०। बहुव्री०)।

(ग) अन्तरीक्षात—आकाशात (अपा० ५मी०), वाक्—वाणी, आकाशवाणी, उदचरत्—उदतिष्ठदित्यर्थः (उत्+चर+लङ्-द)। एकमात्रः,—एक एव, पुत्रः यस्य तादृशेन एकमात्रपुत्रेण—पुत्रान्तररहितेन (विण०। बहुव्री०), यद्वा,—एकमात्रपुत्रोपहारप्रदानेनेत्यर्थः (करणे ३या०), तथाविधस्य—पूर्वोक्तरूपप्रशंसनीयस्य, सत्पुत्रस्य—साधुतनयस्य, प्राणान्—जीवनं, व्ययति—उत्सृजति यः सः तेन तथाविधसत्पुत्रप्राणव्ययिना—तादृशसुपुत्रजीवनोत्सर्गकारिणा (विण०। उपपदस०। ग्रहादित्वात् णिनिः, अदन्तचौरादिकत्वात् न वृद्धिः), यद्वा,—तथाविधसत्पुत्रप्राणानां व्ययः अस्य अस्ति तेन (अस्त्यर्थे इनिः)।

(घ) मूर्द्धानं—मस्तकम्, आश्लिष्य—आलिङ्ग्य (आ+श्लिष+ल्यप्)। स्फुटितं—विदीर्णं, हृदयं यस्याः सा स्फुटितहृदया—विदीर्णान्तःकरणा (विण०। बहुव्री०)। व्यपद्यत—अम्रियत (वि+पद+लङ्-त)।

(ङ) श्रेयः,—शुभं ("श्रेयो मुक्तौ शुभे धर्मेऽतिप्रशस्ते च वाच्यवत्" इति

मया राज्ञः श्रेयोऽर्थं स्वशिरः उपहर्त्तव्यमासीत्, तदधुना अनुज्ञां देहि, अहं शीघ्रम् अनलं प्रविशामि"। इति (च) आग्रहेण वदन्तीं तां वीरवरोऽवदत्,—"एवं कुरुष्व, अपत्यदुःखैकमये जीविंतव्ये का प्रीतिः? यच्च त्वयोक्तं,—'किं न दत्तो मया-ऽऽत्मा' इति, तदत्र व्यथां मा कुरु, यदि अन्यसाध्यमेत-द्राज्ञः श्रेयो भवेत्, तदाऽहमपि किम् आत्मानं न दद्याम्? तत् प्रतीक्षस्व तावत्, अमीभिर्दारुभिस्ते चितां रचयामि"।

---

मेदिनी)। नष्टे—मृते, अपत्ये—तनयतनये यस्याः तस्याः नष्टापत्यायाः,—मृतपुत्र-कन्यकायाः (विण०। बहुव्री०)। किम्?—किं प्रयोजनम्? न किमपीत्यर्थः, मम मरणमेव वरमिति भावः, यद्वा,—किमिति निषेधार्थकमव्ययं, जीवितेन निष्प्रयोजनम् इत्यर्थः ("किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी)। श्रेयसे इदं श्रेयोऽर्थं—मङ्गलाय ["अर्थेन नित्यसमासो विशेष्यलिङ्गता च वक्तव्या" (वा०) इति नित्यसमासः]। उपहर्त्तव्यम्—उपायनीकर्त्तव्यम्, उपहारत्वेन दातव्यमित्यर्थः, (उप+हृ+कर्मणि तव्य), आसीत्—अभूत् (अस+लङ्-द)। अनुज्ञाम्—आदेशं, देहि—प्रयच्छ [दा+लोट्-हि "घ्वसोरेद्धावभ्यासलोपश्च" (६।४।११९ पा०) इति एत्वाभ्यासलोपौ]।

(च) आग्रहेण—आसक्त्या, ऐकान्तिकत्वेन इत्यर्थः। अपत्याय—पुत्रकन्यार्थं, दुःखं—मनःपीडा एव, एकं—मुख्यं, प्रधानमित्यर्थः ("एके मुख्यान्यकेवलाः" इत्य-मरः) यस्मिन्, तन्मये—तदात्मके अपत्यदुःखैकमये—पुत्राभावरूपमहदुःखभाजि [विण०। बहुव्री०। "मयड्वैतयोः—" (४।३।१४३ पा०) इति एकशब्दात् मयट्], जीवितव्ये—जीवनार्हे काले, आयुषि इत्यर्थः, जीवनधारणे इति भावः, जीवने इति वा। व्यथां—दुःखं ("पीडा बाधा व्यथा दुःखम्" इत्यमरः)। अन्येन—पुत्रेतरेण केनापि, त्वया मया वा प्राणव्ययेन इत्यर्थः, साध्यं—सम्पाद्यम् अन्यसाध्यं—पुत्रेतर-जननिष्पाद्यम्। दद्याम्—उत्सृजेयम्? अवश्यमेव दद्यामिति भावः (दा+लिङ्-याम्)। प्रतीक्षस्व—विलम्बस्व (प्रति+ईक्ष+लोट्-स्व), तावत्—तत्परिमितकालं, तावदित्यत्र यावदित्यध्याहार्य्यम्; तावत् प्रतीक्षस्व, यावत् अमीभिः दारुभिस्ते चितां रचयामि इत्यन्वयः। दारुभिः,—काष्ठैः (करणे तृया०। "काष्ठं दार्विन्धनम्" इत्यमरः), चितां—मृतशय्या, रचयामि—निर्म्मामि, सज्जयामीत्यर्थः (रच+णिच्+लट्-मिप्)।

इत्युक्त्वा चितायां तेन (छ) सज्जितायां ज्वलन्त्यां धर्मवती पत्युः पादयोः पतित्वा तां चण्डीं देवीं प्रणम्य व्यजिज्ञपत्,—"देवि! जन्मान्तरेऽपि अयमेव मे पतिर्भूयात्, अस्य च प्रभोः शूद्रकस्य मदीयेनात्मजेन शिवम्" इति समुदीर्य्य, तस्मिन्नेव ज्वालामालिनि अनले देहं न्यक्षिपत्।

ततश्च स वीरवरश्चिन्तयामास,—(ज) "निष्पन्नं मे राजकार्य्यं, दिव्यवाण्या विज्ञातं, भुक्तस्य च राजान्नस्य साम्प्रतमनृणोऽस्मि, तदिदानीमेकस्य मम केयं जीवनतृष्णा? भरणीयं सर्वं कुटुम्बकं व्ययीकृत्य एकमात्मानं जीवयन् मादृशो न

---

(छ) सज्जितायां—रचितायां (सस्ज+क्तः, स्त्रियां टाप्), ज्वलन्त्याम—उद्दीप्यमानायां [भावे ७मी०। ज्वल+शतृ+"उगितश्च" (४।१।६ पा०) इति ङीप् "शप्श्यनोः—" (७।१।८१ पा०) इति नुम्]। व्यजिज्ञपत्—न्यवेदयत्, विज्ञापितवतीत्यर्थः। भूयात्—भवतु इत्यर्थः [भू+"आशिषि लिङ्लोटौ" (३।३।१७३ पा०) इति आशीर्लिङ्। आशीरत्र प्रार्थना]। शिवमित्यत्र भवतु इति शेषः। समुदीर्य्य—समुच्चार्य्य (सम्+उत+ईर+ल्यप्)। ज्वालानां—शिखानां, माला—पङ्क्तिः, श्रेणिरित्यर्थः, सन्ततिरिति यावत् ("माला तु पङ्क्तौ पुष्पादिदामनि" इति हेमः) अस्य अस्तीति तस्मिन् ज्वालामालिनि—शिखासन्तानवति, अविरतोद्गतप्रज्वलितशिखायुक्ते इत्यर्थः [विश०। ज्वालामाला+"व्रीह्यादिभ्यश्च" (५।२।११६ पा०) इति इनिः]।

(ज) निष्पन्नं—संसाधितं [निर्+पद+"मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८ पा०) इत्यादिना वर्त्तमाने क्तः, "रदाभ्यां निष्ठातो नः पूर्व्वस्य च दः" (८।२।४२ पा०) इति प्रातिपदिकदकारस्य निष्ठातकारस्य च नकारः], मे—मम, मया इत्यर्थः ["क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति कर्त्तरि ६ष्ठी०]। दिव्यवाण्या—आकाशवचनेन। नास्ति ऋणं यस्य सः अनृणः,—ऋणविमुक्तः (विश०। बहुव्री०)। जीवनाय—प्राणरक्षणार्थं, तृषा—लालसा जीवनतृषा—जीवितपिपासा (४र्थी तत्पु०)। कुटुम्बकं—पोष्यवर्गं, दारापत्यादिकमिति यावत् ("कुटुम्बं पोष्यवर्गे च" इत्यमरमाला), व्ययीकृत्य—उत्सर्गीकृत्य, विनष्टीकृत्य इत्यर्थः (व्ययीचकार इतिवत् अत्रापि च्विप्रत्ययः, व्यय+कृ+ल्यप्)। जीवयन्—प्राणयन्, रक्षयन् इत्यर्थः

शोभते; तत् किम् आत्मोपहारेण अम्बिकां न प्रीणयामि?" इत्यालोच्य स वीरवरस्तां देवीं प्रथमं स्तुत्वा उपतस्थे,—"जय महिषासुरमर्द्दिनि! तारिणि! दानवदारिणि! त्रिशूलधारिणि! विबुधोत्सवकारिणि! भुवनत्रयधारिणि! जय मातृवरे! जगदर्च्चितचरणे! शरण्ये! निःश्रेयसकारिणि! भक्तजनानां, कालि! कपालिनि! कङ्कालिनि! शिवे! नमोऽस्तु

---

(जीव+णिच्+शतृ)। न शोभते—न राजते, न युज्यते इत्यर्थः (शुभ+लट्-ते)। किं—कथम्? आत्मोपहारेण—स्वजीवनबलिदानेन (करणे ३या०)। प्रीणयामि—सन्तोषयामि (प्री+णिच्+लट्-मिप्)। आलोच्य—विविच्य (आ+लोच+ल्यप्)। स्तुत्वा—स्तवेन, स्तवपाठपूर्व्वकमित्यर्थः, उपतस्थे—तत्समीपे तदभिमुखतया वा तस्थौ इत्यर्थः, वक्ष्यमाणजयेत्यादिमन्त्रेण देवीमम्बिकां स्तुत्वा तत्समीपे तदभिमुखतया वा तस्थौ इति समुदयवाक्यार्थः [उप+स्था+लिट्-ए "उपान्मन्त्रकरणे" (१।३।२५ पा०) इत्यात्मनेपदम्]; जय—विजयिनी भव इत्यर्थः (जि+लोट्-हि), महिषनामानम् असुरं—दैत्यं मर्द्दयति—पीडयति इति महिषासुरमर्द्दिनि।—महिषासुरघातिनि! [महिषासुर+मृद+ग्रहादित्वात् णिनिः, ततः स्त्रियां ङीप्, ततः "अम्बार्थनद्योर्ह्रस्वः" (७।३।१०७ पा०) इति सम्बुद्धौ दीर्घस्य ह्रस्वत्वम्। एवं तारिणि इत्यादावपि ह्रस्वत्वं बोद्धव्यम्], तारयति—उद्धारयति, पातकिजनानिति शेषः, तारिणि—निस्तारकारिणि! (पूर्व्ववत् रूपसिद्धिः)। विबुधानां—देवानाम् ("अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः" इत्यमरः), उत्सवम्—आनन्दानुष्ठानं, कारयतीति सम्बुद्धौ विबुधोत्सवकारिणि!—दैत्यविजयेन देवानामानन्दवर्द्धिनि! इत्यर्थः। मातृषु—"ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा। कौमारीत्यपि चामुण्डा चर्च्चिकेत्यष्ट मातरः"॥ इत्युक्तासु अष्टसु मातृकासु, वरा—श्रेष्ठा, शुम्भनिशुम्भवधे तस्या एव देव्याः प्राधान्येन वर्त्तमानत्वादिति भावः, तत्सम्बोधने मातृवरे!—मातृकाश्रेष्ठे! जगता—जगद्वासिना, जगद्वासिभिरित्यर्थः, अर्च्चितौ—पूजितौ, चरणौ—पादौ यस्याः तत्सम्बुद्धौ जगदर्च्चितचरणे!—त्रिभुवनवन्दितपादपद्मे! शरण्ये—शरणे—रक्षणे साध्वी या सा तत्सम्बोधने शरण्ये!—त्राणसमर्थे! ["तत्र साधुः" (४।४।९८ पा०) इति शरण+यत्, स्त्रियां टाप्], नितरां श्रेयः निःश्रेयसं—मोक्षं ("निःश्रेयसन्तु कल्याणमोक्षयोः शङ्करे पुमान्" इति मेदिनी), करोति—ददातीति तत्सम्बुद्धौ निःश्रेयसकारिणि!

ते, प्रसीदेदानीं शूद्रकस्य नृपतेरनेन मदीयेन मस्तकोपहारेण"। इति स्तुत्वा स वीरवरः सद्यः तरवारिणा स्वं शिरश्चिच्छेद।

तदालोक्य स (झ) छन्नस्थितः शूद्रको नृपः व्याकुलः सदुःखः साश्चर्यश्च व्यचिन्तयत्,—"अहो! न मया ईदृशमन्यत्र दृष्टं वा श्रुतम्; साधुनाऽनेन सपरिवारेण मदर्थे दुष्करं कृतम्। विचित्रेऽस्मिन् संसारे कोऽन्यः (ञ) अनेन समो धीरः? प्रभोरर्थे यः पुत्रादीन् स्वस्य जीवितं प्रादात्; एतस्य उपकारस्य सदृशमुपकारं यदि अहं न कुर्य्यां, तदा मे प्रभुत्वेन किम्? जीवितेन वा पशोरिव किम्? सत्त्वभ्रंशात् सर्वत्रैव मे अयशो भविष्यति"। इति सञ्चिन्त्य स राजा कोशात् करवालम्

—कैवल्यदायिनि।। कपालं—शिरोऽस्थि ("कपालोऽस्त्री शिरोऽस्थ्नि स्यात् घटादेः शकले व्रजे" इति मेदिनी), हस्ते अस्त्यस्याः इति सम्बोधने कपालिनि।—कर्परहस्ते। नृमुण्डधारिणि। इत्यर्थो वा (कपाल + अस्त्यर्थे इनिः, स्त्रियां ङीप्), कङ्कालम्—अस्थिसमूहः अस्ति अस्याः, गलदेशे इति भावः, इति कङ्कालिनि।—अस्थिमालिनि।। ते—तुभ्यं ["नमःस्वस्ति—" (२।३।१६ पा०) इति नमःशब्दयोगात् ४र्थी० ]।

(झ) छन्न—गुप्तस्थाने, स्थितः,—अवस्थितः छन्नस्थितः,—अन्तरालावस्थितः (विशे०। ७मी तत्पु०), यद्वा,—छन्न—गुप्तं यथा तथा स्थितः छन्नस्थितः। व्याकुलः,—अधीरः। साधुना—सज्जनेन। मदर्थे—मम निमित्तम् (अर्थेन सह नित्यस०), दुष्करम्—अन्यैः असुकरं [ दुर् + कृ + "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (३।३।१२६ पा०) इति खल् ]।

(ञ) अनेन समः,—वीरवरेण तुल्यः [ "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" (२।३।७२ पा०) इत्यनेन तुल्यार्थकसमशब्दयोगात् अनेन इति ३या० ]। उपकारस्य [ तुल्यार्थकसदृशशब्दयोगात् "तुल्यार्थै—" (२।३।७२ पा०) इति सूत्रेण वैकल्पिकी ६ष्ठी० ], सदृशमुपकारम्—अनुरूपमुपकारं, प्रत्युपकारमित्यर्थः। प्रभुत्वेन—राजत्वेनेत्यर्थः (करणे ३या०, निषेधार्थक-किंशब्दयोगेन ३या० वा) किम्?—प्रभुत्वेन न किमपि साध्यते इत्यर्थः। सत्त्वात्—सत्त्वाऽऽख्यगुणभेदात्, उपकारिणः प्रत्युपकाररूपादिति भावः, भ्रंशः,—स्खलनं तस्मात् सत्त्वभ्रंशात्—सत्त्वगुणच्यवनात् (हेतौ ५मी०)।

(ट) आकृष्य समुपेत्य तां देवीं व्यजिज्ञपत्,—"देवि! सततमनुप्रपन्नस्य मम अधुना अनेन शरीरोपहारेण सुप्रीता सती अनुग्रहं कुरु; अयं नानागुणयुतो वीरवरः सपरिवारो मदर्थं त्यक्तकलेवरः साम्प्रतं जीवतु"। इति (ठ) उदीर्य्य असिना यावत् स्वं शिरश्छेत्तुं प्रावर्त्तत, तावत् गगनात् भारती उदभूत्,—"वत्स! मा साहसं कृथाः, अनेन ते सत्त्वेन परितुष्टाऽस्मि, प्रत्युज्जीवतु अयं सापत्यदारो वीरवरः"। इत्युक्त्वा तस्याम् (ड) अन्तरिक्षवाचि विरतायामेव स वीरवरः पुत्त्रेण दुहित्रा पत्न्या च सह अक्षतशरीरो जीवन्मुत्तस्थौ।

---

(ट) आकृष्य—आकर्षणं कृत्वा (आ+कृष+ल्यप्)। अनुप्रपन्नस्य—पश्चादवस्थितस्य समीपस्थितस्य वा, शरणागतस्येत्यर्थः [ विण०। अनु+प्र+पद+क्तः "रदाभ्यां—" (८।२।४२ पा०) इति पदधातोर्दकारस्य निष्ठातकारस्य च नकारः ], मम (शेषे ६ष्ठी०)। शरीरोपहारेण—देहबलिग्रहणेनेत्यर्थः (करणे ३या०)। साम्प्रतम्—अधुनैव ( अव्य०। "युक्तार्थमधुनाऽर्थञ्च साम्प्रतं सम्प्रयुज्यते" इति शाश्वतः )।

(ठ) उदीर्य्य—उच्चार्य्य (उत+ईर+ल्यप्)। छेत्तुं—कर्त्तितुं (छिद+तुमुन्), प्रावर्त्तत—उपाक्रमत (प्र+वृत+लङ्-त)। भारती—वाक् ("ब्राह्मी तु भारती भाषा गीर्वाक् वाणी सरस्वती" इत्यमरः), उदभूत—उदजनि (उत्+भू+लुङ्-द्)। साहसं—"सहसा क्रियते यत्तु तत् साहसमिति स्मृतम्" इत्युक्तलक्षणं बलपूर्व्वकमात्महननरूपमविवेककृतं कर्म्म, दमं वा, आत्महननरूपं दण्डमित्यर्थः ( बलात्कारकृतं कर्म्म साहसं साहसं दमः" इति शाश्वतः ), मा कृथाः—न कुरु [ कृ+"माङि लुङ्" (३।३।१७५ पा०) इति माङ्योगे लुङ्-थास् "न माङ्योगे" (६।४।७४ पा०) इति अडागमप्रतिषेधः "ह्रस्वादङ्गात्" (८।२।२७ पा०) इति सिचो लोपः ]। सत्त्वेन—सत्त्वगुणोत्कर्षेण, व्यवसायेन वा (हेतौ ३या०। "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु"॥ इति मेदिनी)। प्रत्युज्जीवतु—पुनर्जीवतु इत्यर्थः (प्रति+उत+जीव+लोट्-तुप्)। अपत्यदारैः,—पुत्रकन्याकलत्रैः, सह इति सापत्यदारः,—सपरिजन इत्यर्थः ( विण०। बहुव्री०)।

(ड) अन्तरिक्षवाचि—आकाशवाण्यां, विरतायां—निवृत्तायां [ भावे ७मी०।

तदवलोक्य राजा पुनः (ढ) छन्नविग्रहः हर्षाश्रुपूरया दृष्ट्या तान् पश्यन् न तृप्तिमाययौ। सोऽपि वीरवरः सुप्तोत्थित इव तं पुत्रं पत्नीं दुहितरञ्च पश्यन् (ण) विभ्रान्त-मानसः समभवत्, अपृच्छच्च पृथङ्नामग्रहं तान्,—"कथं विनष्टा यूयं जीवन्तः पुनरुत्थिताः? किमयं मे विभ्रमः? आहोस्वित् स्वप्नः? माया वा? उत देव्या अनुग्रहः?"। एवं वदन् स दाराऽपत्यैः,—"देव्यनुग्रहेणैव वयं जीवामः" इति (त) निजगदे। ततः स वीरवरः "तथा" इति मत्वा तां देवीं

वि+रम+क्तः "अनुदात्तोपदेश—" (६।४।३७ पा०) इति अनुनासिकलोपः। ततः स्त्रियां टाप्]। अक्षतं—क्वापि आघातमप्राप्तं, शरीरं—गात्रं यस्य तथाभूतः अक्षतशरीरः,—सम्पूर्णसर्व्वदेहः इत्यर्थः (विश०। बहुव्रो०)।

(ढ) छन्नः,—छादितः, विग्रहः,—शरीरं ("शरीरं वर्ष्म विग्रहः" इत्यमरः) येन यस्य वा तादृशः छन्नविग्रहः,—कृतात्मगोपन इत्यर्थः (विश०। बहुव्रो०)। हर्षाश्रूणां—सकुटुम्बवीरवरस्य पुनर्जीवनलाभजानन्दोत्थनेत्रजलानां, पूरः,—समूहः, प्रवाह इति यावत् ("पूरो जलसमूहे स्यात् व्रणसंशुद्धिखाद्ययोः" इति मेदिनी) यत्र तादृश्या हर्षाश्रुपूरया—आनन्दाश्रुप्लावितया (विश०। बहुव्रो०), दृष्ट्या—नयनेन (करणे ३या०। "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। दृग्दृष्टी च" इत्यमरः)।

(ण) विभ्रान्तं—संशयितम ("अथ विभ्रमः। शोभायां संशये हावे" इति हैमः), मानसं—मनः यस्य सः विभ्रान्तमानसः,—किमहमेतान् सत्यमेव जीवितान् पश्यामि? उत मे दृष्टिविभ्रमः? इति संशयान्दोलितचेता इत्यर्थः (विश०। बहुव्रो०)। पृथक्—प्रत्येकेषां भिन्नं भिन्नं, नाम्नां ग्रहः,—ग्रहणं यस्मिन् तत् पृथङ्नाम-ग्रहं—पुत्रादीनां प्रत्येकं नामोच्चारं यथा तथा इत्यर्थः (क्रिया विश०)। जीवन्तः,—प्राणन्तः, जीवनं लभमानाः इत्यर्थः (जीव+शतृ+तत्र जसि "उगिदचां सर्वनाम-स्थानेऽधातोः" (७।१।७० पा०) इति नुमागमः]। विभ्रमः,—भ्रान्तिः? ("विभ्रमो भ्रान्तिहावयोः" इति शाश्वतः), आहोस्वित्—वितर्के, यद्वा,—आहो—विकल्पे, अथवेत्यर्थः, स्वित—प्रश्ने. स्वप्नः,—निद्रितावस्थायां विषयानुभवः? ("स्वप्नो निद्रा-नुपेतस्य विषयानुभवस्तु यः" इति वचनात), माया—इन्द्रजालम्? उत—अथवा।

(त) निजगदे—भावभाषे (नि+गद+कर्म्मणि लिट्-ए)।

प्रणम्य पुत्रदारानादाय कृतार्थो गृहं ययौ। तत्र च तं पुत्रं तांश्च भार्यां दुहितरञ्च प्रवेश्य तस्यामेव रात्रौ राज्ञः सिंहद्वारमागमत्।

राजा च शूद्रक एतत् सर्वं दृष्ट्वा अलक्षित एव गत्वा स्वं प्रासादमारुरोह, पप्रच्छ च,—"कोऽत्र सिंहद्वारे स्थितः?" इति। वीरवरः प्रत्यवादीत्,—"प्रभो! अहं वीरवरस्तिष्ठामि; (थ) देवादेशाच्च तां रुदतीं स्त्रियं प्रति गतश्चाहम्; सा काऽपि राक्षसी, मम वचसा दृष्ट्वैव क्वापि प्रनष्टा" इति। एतत्तस्य वचः श्रुत्वा राजा (द) नितरां विस्मितो हृष्टोदन्तो व्यचिन्तयत्,—"अहो! समुद्रगम्भीरधीरचित्ता मनस्विनः, ये अनन्यसामान्यं कर्म्म कृत्वाऽपि नोद्गिरन्ति"। इत्यालोच्य प्रासादादवरुह्य स राजा अन्तःपुरं गत्वा रात्रिशेषम् (ध) अत्यवाहयत्।

---

(थ) देवस्य—राज्ञो भवतः ("देवो मेघे सुरे राज्ञि स्यात् नपुंसकमिन्द्रिये" इति मेदिनी), आदेशात्—नियोगात् देवादेशात्—देवादेशं लब्ध्वा इत्यर्थः (ल्यब्लोपे पञ्चमी०)। स्त्रियं ["लक्षणेत्थम्भूता—" (१।४।९० पा०) इत्यनेन प्रतिशब्दयोगे द्वितीया०]। प्रनष्टा—अदर्शनं गता, पलायिता इत्यर्थः (प्र+नश+क्तः "व्रश्चभ्रस्ज—" (८।२।३६ पा०) इति षकारादेशः "ष्टुना ष्टुः" (८।४।४१ पा०) इति तकारस्य टकारः, ततः स्त्रियां टाप्, "नशेः षान्तस्य" (८।४।३६ पा०) इति णत्वप्रतिषेधः]।

(द) नितराम्—अतिशयेन (अव्य०)। हृष्टः,—प्रत्यक्षीकृतः, उदन्तः,—वृत्तान्तः, आमूलात् सर्वव्यापारः इति यावत् ("वार्त्ता प्रवृत्तिर्वृत्तान्तः उदन्तः स्यात्" इत्यमरः) येन सः (विश०। बहुव्री०)। अहो!—आश्चर्य्यम्! आश्चर्य्यमेतत्, एतादृशमनन्यसुलभं दुष्करं कर्म्म कृत्वाऽपि तदप्रकाशनादिति बोद्धव्यम्; समुद्रः,—सागर इव, गम्भीरं—गभीरम्, अक्षोभ्यमिति यावत्, धीरं—धैर्य्यवत्, चित्तं—मानसं येषां ते समुद्रगम्भीरधीरचित्ताः,—सागरवदविचाल्यप्रशान्तमानसाः (विश०। बहुव्री०)। मनस्विनः,—प्रशस्तमनसः, उदाराशयाः इति यावत् [मनस्+"अस्मायामेधास्रजो विनिः" (५।२।१२१ पा०) इति विनिः]। अनन्यसामान्यम्—अनन्यसाधारणम्। नोद्गिरन्ति—निजमुखेन न प्रकाशयन्तीत्यर्थः (उत्+गॄ+लट्-अन्ति)।

(ध) अत्यवाहयत्—अयापयत् (अति+वह+णिच्+लङ्-द)।

अथ प्रातः (न) आस्थानसमये दर्शनार्थमुपगते वीरवरे स्थिते हृष्टो राजा सर्वेभ्यो मन्त्रिभ्यः अन्येभ्यश्च तं रात्रिवृत्तान्तमवर्णयत्। सर्वे सविस्मयाः (प) मोहिताश्च वीरवरगुणश्रवणेन तत्क्षणमभवन्, प्राशशंसुश्च,—"साधु साधु" इति। ततो राजा वीरवरश्च (फ) अन्योऽन्यं तुल्यविभवौ सुखमासाताम्।

इति कथामाख्याय वेतालस्तं त्रिविक्रमसेनं नृपमपृच्छत्,—"राजन्! (ब) एतेषु कोऽधिकस्ते मतः? यदि जानन्न वक्ष्यसि, तदा पूर्व एव स शापः सेत्स्यति"। एतदाकर्ण्य स राजा तं वेतालमभाषत,—(भ) "देवयोने! एतेषु सर्वेषु राजा शूद्रक एव समधिकः प्रवरः" इति। वेतालोऽब्रवीत्,—नृपते! कथं वीरवरो न? यस्य तुल्यः पृथिव्यां सेवको न विद्यते; तत्पत्नी वा कथं समधिकेति न (म) प्रशस्यते? या

(न) आस्थानसमये—सभाकाले ("समज्यापरिषद्गोष्ठीसभासमितिसंसदः। आस्थानी क्लीबमास्थानं पुंनपुंसकयोः सदः" ॥ इत्यमरः)। अवर्णयत्—अकथयत् (वर्ण+णिच्+लङ्-द्)।

(प) मोहिताः,—विमुग्धचित्ता इत्यर्थः (मुह+णिच्+क्तः)। प्राशशंसुः,—तुष्टुवुः (प्र+आ+शंस+लिट्-उस्)।

(फ) अन्योऽन्यं—परस्परं, तुल्यः,—सदृशः, विभवः,—सम्पद् ययोस्तौ तुल्यविभवौ—समानैश्वर्यौ (विण०। बहुव्री०), राजा तस्मै वीरवराय अर्द्धराज्यं विभज्य दत्तवान्, तेन च तुल्यविभवत्वं तयोः सञ्जातमिति भावः। आसाताम्—अतिष्ठताम् (आस+लङ्-आताम)।

(ब) एतेषु (निर्द्धारणे ७मी०)। ते—तव, त्वयेत्यर्थः (मत इति वर्त्तमानविहितक्तप्रत्ययोगात् कर्त्तरि ६ष्ठी०), मतः,—ज्ञातः, गणित इत्यर्थः [मन+"मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८ पा०) इति वर्त्तमाने क्तः]। पूर्व्व एव स शापः,—मस्तकस्फुटनरूपः, सेत्स्यति—सफलीभविष्यति (सिध+लृट्-स्यति)।

(भ) देवयोने!—देवांशसम्भूत!। प्रवरः,—श्रेष्ठः।

(म) प्रशस्यते?—स्तूयते? [प्र+शन्स+कर्म्मणि लट्-ते "अनिदितां

सूनोः पशूपहारतां प्रत्यक्षं दृष्ट्वाऽपि न धैर्य्यात् प्रच्युताऽऽसीत्; स वा पुत्रः शक्तिधरः कथं नाभ्यधिकः ? यस्य बालस्यापि सतस्तादृशः सत्त्वोत्कर्षः। तत् कथमेकं शूद्रकं नृपं त्वं प्रवरं भाषसे ?" इत्युक्तवन्तं वेतालं स नृपः पुनरवादीत्,—(य)"कुलपुत्रो वीरवरस्तादृक् न, तस्य प्राणैः सुतैः दारैश्च स्वामिसंरक्षणं कार्य्यम्; तस्य च पत्नी कुलजा साध्वी पतिप्राणा भर्त्तृवर्त्मानुसरन्ती धर्ममेव पालितवती; शक्तिधरोऽपि तयोर्जातस्तादृश एव, यादृशास्तन्तवः तादृश एव पटो जायते। येषां भृत्यानां प्राणैः नृपेण आत्मा रक्ष्यते, तेषामर्थे प्राणांस्त्यजन् शूद्रक एव

---

हल उपधाया क्ङिति" (६।४।२४ पा०) इति उपधानकारलोपः]। सूनोः,—पुत्रस्य, पशुवत्—छागवत् ("पशुर्मृगादौ छगले पशु इत्यर्थमव्ययम" इति शाश्वतः), उपहारताम—उपायनतां, देवीसमीपे बलिरूपतामित्यर्थः, पशूपहारता—छागवत बालभनीयत्वमिति यावत्। प्रच्युता—प्रभ्रष्टा, आसीत्—अभवत् [अस+लङ् द् "अस्तिसिचोऽपृक्ते" (७।३।९६ पा०) इति ईडागमः]। सतः,—भवतः [अस+शतृ "श्नसोरल्लोपः" (६।४।१११ पा०) इति प्रातिपदिकस्य अकारलोपः, तस्य]। सत्त्वस्य—मनसः, सत्त्वगुणस्य वा व्यवसायस्य वा, उत्कर्षः,—आधिक्य सत्त्वोत्कर्षः,—प्रशस्तचित्तता, सत्त्वगुणाधिक्यं वा सङ्कल्पदार्ढ्यं वा।

(य) कुलपुत्रः,—सत्कुलसम्भूतः, कुलीन इत्यर्थः। कुलजा—सत्कुलोत्पन्ना। भर्त्तृवर्त्म—पतिमार्गं, स्वामिना अवलम्बितं पन्थानमित्यर्थः। धर्ममेव—पातिव्रत्यधर्ममेव, पतिव्रतायाः पत्याचारानुमोदनस्य सर्व्वथा कर्त्तव्यत्वादिति भावः, "पतिं या नाभिचरति मनोवाक्कायसंयता। सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते"॥ इति स्मरणात्; पालितवती—रक्षितवती [पा+णिच्+क्तवतु: "पातेर्णौ लुक् वक्तव्यः" (वा०) इति लुक् ततः "उगितश्च" (४।१।६ पा०) इति ङीप्]। तयोः,—तादृशयोः मातापित्रोः। तन्तवः,—सूत्राणि। पटः,—वस्त्रं ("पटश्चित्रपटे वस्त्रेऽस्त्री पियालद्रुमे पुमान्" इति मेदिनी), यथा शुभ्रसूत्रनिर्म्मितं वस्त्रं शुभ्रमेव भवति, यथा वा रक्तादिसूत्रनिर्म्मितं वसनं रक्तादिवर्णमेव भवति, एवं यादृशमातापितृभ्यां जायते, पुत्रोऽपि तादृशगुणसम्पन्नो भवति, अतः वीरवरपत्नीवतीभ्यां जातस्य पुत्रस्य तादृग्गुणसम्पन्नता एव युक्ता इति भावः।

सर्वेषु (र) विशिष्यते"। इति वचः समाकर्ण्य स वेतालः नृपतेः (ल) अंसादलक्षितः सहसा निजाऽऽवासं ययौ। राजाऽपि तन्मायया (व) अनुच्छलितोऽपि तस्यामेव निशि पुनस्तमानेतुं मतिमकरोत्।

---

## अथ पञ्चमकथा।

ततश्च स राजा त्रिविक्रमसेनः पुनः शिंशपातरोः (क) अन्तिकमभ्येत्य, तथैव लम्बमानं नरशरीरगं तं वेतालमवतार्य्य, तस्य बहुना वैकृतेनापि निर्भीकः सत्वरमागन्तुं प्रववृते। आगच्छन्तं तूष्णीं पथि पूर्ववत् स वेतालः प्रावदत्,—

---

(र) विशिष्यते—विशिष्टो भवति, श्रेष्ठत्वेन गणनीयो भवतीत्यर्थः (वि+शिष+कर्म्मकर्त्तरि लट्-ते)।

(ल) अंसात्—स्कन्धात् (अपा० ५मी०। "स्कन्धो भुजशिरोंऽसोऽस्त्री" इत्यमरः)।

(व) अनुच्छलितोऽपि—अचञ्चल एव, धैर्य्यमाश्रित एवेत्यर्थः (न+उत्+शल+क्तः), अपिरत्र एवार्थे।

---

(क) अन्तिकं—समीपं ["दूरान्तिकार्थेभ्यो द्वितीया च" (२।३।३५ पा०) इति २या०], अभ्येत्य—अभिगम्य [अभि+आ+इ+ल्यप् "ह्रस्वस्य पिति कृति तुक्" (६।१।७१ पा०) इति तुक्]। नरशरीरं—मानवदेहं, मृतदेहमिति यावत्, गच्छति—आश्रयते इति तादृशं नरशरीरगं—मृतदेहाधिष्ठितमिति यावत् [उपपदस०। नरशरीर+गम+"अन्यत्रापि दृश्यते इति वक्तव्यम्" (वा०) इति डः]। वैकृतेन—विकृतिभावेन, बीभत्सरूपप्रदर्शनादिना इति यावत्। प्रववृते—प्रारेभे (प्र+वृत+लिट्-ए)।

"राजन्! (ख) अभिनिविष्टोऽसि, दृष्टिप्रियोऽसि च; तत्तव चित्तविनोदाय कथामपरां कथयामि शृणु,—

अस्त्युज्जयिनी नाम (ग) भुवनविश्रुता नगरी; तस्यां पुण्यसेना राजा अभूत्, तस्य प्रियोऽनुजीवी अमात्यो हरिस्वामीति सद्गुणालङ्कृतो विप्रः प्रतिवसति स्म। तस्य (घ) गृहपतेरनुरूपायां भार्य्यायां सुसदृशः देवस्वामी नाम पुत्रोऽजायत; एका च असामान्यरूपलावण्यविश्रुता सोमप्रभा नाम अन्वर्थनाम्नी कन्या उदपद्यत। सा एकदा (ङ) शैशवातिक्रान्ता रूपोत्कर्षाभिमानवती मातृमुखेन पितरं भ्रातरञ्च

---

(ख) अभिनिविष्टः,—कर्त्तव्ये कर्म्मणि आग्रहान्वितः, दृढसङ्कल्पः इति यावत (विण०। अभि+नि+विश+क्तः)। दृष्टिप्रियः,—नेत्रसुभगः।

(ग) भुवनेषु—लोकेषु, विश्रुता—विख्याता भुवनविश्रुता—जगद्विदिता (७मी तत्पु०)। अनुजीवितुं शीलः अनुजीवी—सेवकः, अनुचरः पार्श्वचर इति भावः [अनु+जीव+"सुप्यजातौ णिनिस्ताच्छील्ये" (३२७८ पा०) इति णिनि]। सद्भिः,—उत्तमैः, गुणैः,—दयादाक्षिण्यादिभिः, अलङ्कृतः,—भूषितः सद्गुणालङ्कृतः,—विविधानुत्तमगुणाविभिर्मण्डितः (विण०। ३या तत्पु०)।

(घ) गृहपतेः,—सचिवः, सदाऽग्न्यादिदानगृहस्थस्येत्यर्थः ("भवेत गृहपतिः पुंसि गृहस्थेऽपि च सत्रिणि" इति मेदिनी), अनुरूपायां—सदृश्यां, विविधसद्गुणालङ्कृतायामित्यर्थः। सुसदृशः,—पितुरविकल्पानुरूप इत्यर्थः। असामान्येन—असाधारणेन, लोकोत्तरेणेत्यर्थः, रूपेण—सौन्दर्य्येण, लावण्येन—"मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते"॥ इत्युक्तलक्षणेन कान्तिविशेषेण च, विश्रुता—प्रथिता असामान्यरूपलावण्यविश्रुता—अलौकिकसौन्दर्य्येण सर्वलोकविख्याता (विण०। ३या तत्पु०), सोमस्य—चन्द्रस्य, प्रभेव प्रभा—कान्तिः यस्याः सा सोमप्रभा। अन्वर्थम्—अर्थानुरूपं, सोमप्रभा इति संज्ञायाः सार्थकत्वसम्पादकमित्यर्थः, नाम—संज्ञा यस्याः सा अन्वर्थनाम्नी—सार्थकनाम्नी (विण०। बहुव्री०)। उदपद्यत—समजायत (उत+पद+लङ्-तन्)।

(ङ) शैशवं—बालभावम्, अतिक्रान्ता—अतीता शैशवातिक्रान्ता—उत्तीर्णबाल्यावस्था, प्राप्तयौवना इति भावः (विण०। २या तत्पु०), यद्वा,—शैशवम्

जगाद,—"शूराय ज्ञानिने विज्ञानिने वा अहं देया, अन्यस्मै दत्ताऽहं न जीवामि" इति ।

तदाकर्ण्य पिता तस्याः तादृशं वरं (ख) चिन्वन् यावत् चिन्तामलमापेदे, तावत् स पुष्पसेनेन राज्ञा दाक्षिणात्यस्य कस्यचित् नृपस्य अन्तिकं सन्धिविग्रहाय दौत्ये प्रहितः । तत्र च कृतकार्य्यं तं कश्चित् ब्राह्मणयुवा (ग) श्रुततद्दुहितृरूप-

---

अतिक्रान्तं यस्याः सा (बहुव्री०), रूपोत्कर्षेण—सौन्दर्य्यातिशयेन, रूपोत्कर्षाद्वा, अभिमानवती—गर्विता रूपोत्कर्षाभिमानवती—सौन्दर्य्यदर्पिता (विशे०। इया तत्पु० पूर्व्वं तत्पु० वा)। ज्ञानिने—प्रशस्तज्ञानवते पण्डिताय, दैवज्ञाय इति वा ("ज्ञानी स्यात् पुंसि दैवज्ञे ज्ञानयुक्तेऽन्यलिङ्गकः" इति मेदिनी), विज्ञानिने—विज्ञानवते, शिल्पविद्यायां शास्त्रविद्यायाञ्च विशिष्टज्ञानयुक्ताय इत्यर्थः ("विज्ञानं शिल्पशास्त्रयोः" इत्यमरः), यद्वा,—विज्ञानिने—कार्म्मणे, जीविकानिर्वाहोपयोगिकर्म्मकुशलाय इत्यर्थः ("विज्ञानं ज्ञानकर्म्मणोः" इति मेदिनी), वराय इति शेषः। देया—सम्प्रदानीया, ईदृशेन वरेणाहं परिणेतव्या इत्यर्थः [दा+"अचो यत्" (३।१।९७ पा०) इति यत्, "ईद्यति" (६।४।६५ पा०) इति आकारात् परः ईत्, ततः आकारेण ईकारस्य एकारः]।

(ख) चिन्वन्—अनुसन्दधन्, अन्वेषणं कुर्व्वन्नित्यर्थः (चि+शतृ)। अलम्—पर्य्याप्तम्, अत्यर्थमित्यर्थः, निरर्थकमिति वा (अव्य०। "अलं भूषणपर्य्याप्तिवारणेषु निरर्थके। अलं शक्तौ च निर्द्दिष्टम्" इति विश्वः), विवाहकर्म्मणः दैवायत्तत्वात् तच्चिन्तायाः नैरर्थक्यमवधातव्यम्। यद्वा,—चिन्तामलं—चिन्तया मालिन्यमित्यर्थः, आपेदे—प्राप [आ+पद+लिट् ए "अत एकहल्मध्येऽनादेशादेर्लिटि" (६।४।१२० पा०) इति एत्वाभ्यासलोपौ]। सन्धिः,—राज्ञां षड्गुणान्तर्गतः परस्परमित्रतार्थं मैत्रीकरणरूपव्यापारः, विग्रहः,—युद्धं, सन्धिश्च विग्रहश्च तयोः समाहारः सन्धिविग्रहं ["विप्रतिषिद्धं चानधिकरणवाचि" (२।४।१३ पा०) इति एकवद्भावः] तस्मै सन्धिविग्रहाय—सन्धिर्वा कर्त्तव्यः, विग्रहो वा सङ्घटयितव्यः इति निर्णेतुमित्यर्थः ["क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" (२।३।१४ पा०) इति ४र्थी०], दूतस्य कर्म्म दौत्यं तस्मिन् दौत्ये—दूतकर्म्मणि [दूत+"गुणवचनब्राह्मणादिभ्यः—" (५।१।१२४ पा०) इति ष्यञ्]।

(ग) श्रुता—आकर्णिता, तस्य—अमात्यस्य, दुहितुः,—कन्यायाः, रूपसम्पत्

सम्पत् अभ्येत्य तां सुतामयाचत। स च तमब्रवीत्,—"मत्सुता विज्ञानिनो ज्ञानिनो वा शूरात् अन्यं पतिं नेच्छति, तेषां (ज) मध्यात् भवान् कः? कथय" इति। स ब्राह्मणोऽवदत्,—"अहं विज्ञानं जानामि"। "तर्हि तत् दर्शय" इति तेनोक्तः स विज्ञानी (झ) स्वयुक्त्या खेचरं रथं कल्पयामास, दर्शयामास च तत्र मायायन्त्ररथे तं हरिस्वामिनमारोप्य नीत्वा च स्वर्गादीन् लोकान्; आनिनाय च तुष्टं तं दाक्षिणात्यस्य नृपतेः कटकं, यत्र स स्वकार्य्यार्थमायात इति। ततः स हरिस्वामी (ञ) तस्मै तां सुतां प्रतिशुश्राव, सप्तमेऽहनि च वैवाहिकलग्नं निश्चिकाय।

---

—सौन्दर्य्यविभवः येन सः श्रुततद्दुहितृरूपसम्पत्—कर्णगोचरीकृततद्ब्राह्मणतनयासौन्दर्य्य-श्रीः (विश० । बहुव्री०)।

(ज) मध्यात्—मध्ये इत्यर्थः (निर्द्धारणे ५मी०)।

(झ) स्वस्य—आत्मनः, युक्त्या—योगेन, युक्त्यनुसारेण इत्यर्थः स्वयुक्त्या—निजमनःकल्पनाऽनुसारेण (करणे ३या०), खे—आकाशे, चरति—भ्रमति इति खेचरस्तं खेचरम्—आकाशगं [खे+चर+"चरेष्टः" (३।२।१६ पा०) इति टः, "तत्पुरुषे कृति बहुलम्" (६।३।१४ पा०) इति सप्तम्या अलुक्]। कल्पयामास—निर्ममौ (कृप+णिच्+लिट्-णल्)। मायया—बुद्ध्या, स्वबुद्धिप्रभवेणेत्यर्थः ("माया स्यात् शाम्बरीबुद्ध्योः" इति मेदिनी), उद्भावितं यत् यन्त्रं तद्युक्ते रथे—स्यन्दने मायायन्त्ररथे—स्वबुद्धिनिर्म्मितयन्त्रचालितरथे (शाकपा०)। आनिनाय—प्रापयामास (आ+नी+लिट्-णल्)। कटकं—राजधानीं ("राजधान्यां गिरेरङ्गे वलये कटकं विदुः" इति शाश्वतः)। आयातः,—आगतः (आ+या+क्तः)।

(ञ) तस्मै—ब्राह्मणयूने ["प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" (१।४।४० पा०) इत्यनेन तस्मै इति प्रवर्त्तनरूपस्य पूर्वव्यापारस्य कर्त्तुः सम्प्रदानत्वात् ४र्थी०]। प्रतिशुश्राव—प्रतिजज्ञे, ब्राह्मणयूना 'मह्यं ते सुतां देहि' इति प्रवर्त्तितः 'तुभ्यं मे तनयां दास्यामि' इति अङ्गीचकार इत्यर्थः (प्रति+श्रु+लिट्-णल्)। वैवाहिकं—विवाह-सम्पादनार्हं, लग्नं—मेषादिराशीनामुदयः, शुभमुहूर्त्तः इत्यर्थः, उदेष्यति इति अचः, निश्चिकाय—निर्णिनाय, निरूपयामास इत्यर्थः [निर्+चि+लिट्-णल् "विभाषा

तस्मिंश्च काले उज्जयिन्याम् अन्येन द्विजकुमारेण तत्सखो देवस्वामी (ट) तत्स्वसारमयाच्यत। तेनापि,—"ज्ञानि-विज्ञानिशूरेभ्यो नान्यं पतिं मे स्वसा (ठ) कामयते" इति विज्ञापितः स आत्मानं शूरमभ्यधात्। ततो (ड) दर्शितशस्त्रास्त्र-विद्याय तस्मै शूराय स देवस्वामी निजानुजां दातुं प्रतिपेदे; कृतनिश्चयश्च मातुः परोक्षं गणकवचनात् सप्तमेऽह्नि विवाहं निर्णिनाय च।

---

नेः" (७।३।५८ पा०) इति चिञः कुत्वम्]. अद्य प्रभृति सप्तमे दिवसे विवाहोपयोगी शुभराशिरुदेष्यति इति निश्चिकाय इति सरलार्थः।

(ट) तस्य—देवस्वामिनः, स्वसारं—भगिनीं तत्स्वसारं—देवस्वामि-सोदराम्, अयाच्यत—प्रार्थ्यत (याच+कर्म्मणि लङ्-त। याचेर्द्विकर्म्मकत्वात् अप्रधाने देवस्वामी इति उक्ते कर्म्मणि १मा०)।

(ठ) कामयते—प्रार्थयते [कम+"कमेर्णिङ्" (३।१।३० पा०) इति स्वार्थे णिङ्+लट्-ते]। विज्ञापितः,—निवेदितः (विण०। वि+ज्ञा+णिच्+क्तः)। अभ्यधात—अचीकथत् [अभि+धा+लुङ्-द् "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]।

(ड) शस्यते—घात्यते अनेनेति शस्त्रं—समीपस्थानामरीणां हननसाधनखड्गा-द्यायुधजातम्, अस्यते—क्षिप्यते, दूरस्थानरीन् लक्ष्यीकृत्य इति भावः, अत तत् अस्त्रं—दूरात् क्षेप्य शराद्यायुधजातं, यद्वा,—अस्यन्ते—क्षिप्यन्ते, बाणा इति शेषः, अनेन इति अस्त्रं—धनुरादिकं, दर्शिता शस्त्राणाम् अस्त्राणाञ्च विद्या—ज्ञानं येन तस्मै दर्शितशस्त्रास्त्रविद्याय—प्रदर्शितशस्त्रास्त्राभिज्ञानेऽद्याय (विण०। बहुव्री०)। प्रतिपेदे—अङ्गीचकार ("प्रतिपन्नोऽन्यलिङ्गः स्यात् विज्ञातेऽङ्गीकृतेऽपि च" इति मेदिनी। प्रति+पद+लिट्-ए); कृतः,—विहितः, निश्चयः,—निर्णयः, भगिनीदानाय स्थिरसङ्कल्पः इति भावः, येन सः कृतनिश्चयः,—दृढसङ्कल्प इत्यर्थः। अक्ष्णोः परं परोक्षम्—अप्रत्यक्षं (पर+अक्षि "प्रतिपरसमनुभ्योऽक्ष्णः" (ग०) इति टच्, "यस्येति च" (६।४।१४८ पा०) इति अक्ष्णः इकारलोपः, निपातनात् परस्य ओकारादेशश्च], गणकवचनात्—दैवज्ञवचनं श्रुत्वा इत्यर्थः (ल्यब्लोपे ५मी०)। निर्णिनाय—निश्चिकाय (निर्+नी+लिट्-णल्)।

एतस्मिन्नन्तरे हरिस्वामिभार्य्या च केनाप्यपरेण (ढ) द्विजयूना सुतां याचिता प्राब्रवीत्,—"वत्स ! ज्ञानी विज्ञानी शूरो वा मम कन्यां वोढुमर्हति, नान्यः, तत् त्वमेतेषु कः ? उच्यताम्" इति । सोऽब्रवीत्,—"अहं ज्ञानी" इति । ततः सा (ण) भूतं भविष्यच्च पृष्ट्वा ज्ञानिनं निश्चित्य तस्मै सुतां दातुं तद्भिन्ने समयेऽह्नि प्रत्यशृणोत् ।

अन्येद्युश्च हरिस्वामी समागत्य (त) यथाकृतं सर्वं पत्न्यै पुत्राय च समाचख्यौ । सा च स च स्वं स्वं कृतं तत् सर्वं पृथक् पृथक् तस्मै अवोचत् । इत्थं स हरिस्वामी त्रयाणां वराणां (थ) निमन्त्रणात् नितरां व्याकुलः समपद्यत ।

---

(ढ) द्विजयूना—तरुणविप्रेण । याचिता—प्रार्थिता (त्रिण० । याच+क्तः, स्त्रियां टाप्, याचतेर्द्विकर्मकस्य हरिस्वामिभार्य्या इति अप्रधाने कर्म्मणि उक्ते १मा० )। वोढुं—परिणेतुं [ वह+तुमुन् "हो ढः" (८।२।३१ पा०) इति हस्य ढे कृते "झष-स्तथोर्धोऽधः" (८।२।४० पा०) इति तस्य धे कृते "सहिवहोरोदवर्णस्य" (६।३।११२ पा०) इति वहेरकारस्य ओत्वे "ष्टुना ष्टुः" (८।४।४१ पा०) इति धस्य ढे कृते "ढो ढे लोपः" (८।३।१३ पा०) इति पूर्वढकारलोपः ], अर्हति—युज्यते ( अर्ह +लट्-तिप् )।

(ण) भूतम्—अतीतम्, गतवृत्तान्तमिति यावत्, भविष्यम्—आगामिनं, भाविवृत्तान्तमिति यावत्। निश्चित्य—निर्णीय [ निर्+चि+ल्यप् "ह्रस्वस्य पिति कृति—" (६।१।७१ पा०) इति तुक् ]। तस्मात्—दिवसात्, भिन्ने—पृथग्भूते तद्भिन्ने—तद्दिवसव्यतिरिक्ते, यस्मिन् दिने प्रतिश्रुतिमकरोत्, तद्दिनं त्यक्त्वा इत्यर्थः। प्रत्यशृणोत्—प्रत्यजानीत, प्रतिश्रुतवती इत्यर्थः [ प्रति+श्रु+लङ्-द् "श्रुवः शृ च" (३।१।७४ पा०) इति श्रुधातोः श्रादेशः ]।

(त) कृतमनतिक्रम्य इति यथाकृतं—दाक्षिणात्ये यत्र यत् कर्म्म कृतं तत् इत्यर्थः ( अनतिक्रमणे अव्ययी० )। समाचख्यौ—आचभाषे [ सम्+आ+ख्या+लिट्-णल् "आत औ णलः" (७।१।३४ पा०) इति णल औकारभावः ]।

(थ) निमन्त्रणात्—मद्गृहमागत्य मम कन्यायाः पाणिग्रहीता भव, इत्येवं सत्कारपूर्वकनियोगकरणात् इत्यर्थः ( हेतौ ५मी० )।

अथ सप्तमे दिने आगते ते त्रय एव वराः हरिस्वामिनो गृहमाययुः । (ट) चित्रमहो ! तत्काले सा सोमप्रभा क्वापि गता । तदाकर्ण्य ज्ञानी अवदत्,—"राक्षसेनापहृत्य (ध) धूम्रशिखाऽऽख्येन विन्ध्याटव्यां निजां वसतिं नीता" । इति ज्ञानिनाऽभिहितो हरिस्वामी भीतः तं विज्ञानिनम् उपायं पप्रच्छ । स च पूर्ववत् सर्वास्त्रसंयुतं रथं कृत्वा तं हरिस्वामिनं तौ च ज्ञानिशूरौ तत्क्षणं विन्ध्याटवीं प्रापयामास । तत्र ज्ञानिना (न) समाख्यातां तस्य राक्षसस्य वसतिं प्राप्य, स शूरः हरिस्वामिना सह तं राक्षसं क्रुद्धं ज्ञातवृत्तान्तनिर्गतं योधयामास । तदा तयोर्मानुषराक्षसयोः (प) चित्रास्त्रयोधिनोः रामरावणयोरिव स्त्र्यर्थं महत् युद्धमवर्त्तत, क्षणेन च स शूरः सङ्ग्रामदुर्द्धरस्यापि तस्य रक्षसः शिरः अर्द्धचन्द्रेण बाणेनाच्छिनत् ।

---

(ट) चित्रम—आश्चर्यम, अहो—विस्मयद्योतकमव्ययम ।

(ध) धूम्रशिखः आख्या—नाम यस्य तेन धूम्रशिखाऽऽख्येन—धूम्रशिखनाम्ना (विश०। बहुव्री०)। वसतिं—निकेतनं, गृहमित्यर्थः ("वसतिः स्यात स्त्रियां वासे यामिन्याञ्च निकेतने" इति मेदिनी), नीता—प्रापिता (नयतेर्द्विकर्म्मकत्व सा इति उक्ते प्रधानकर्म्मणि १मा०)।

(न) समाख्यातां—कथितां (विश०। सम्+आ+ख्या+क्तः. स्त्रियां टाप् ताम्)। ज्ञातः,—विदितः, वृत्तान्तः,—सर्वा वार्त्ता येन तथाभूतः ज्ञातवृत्तान्तः (बहुव्री०), स चासौ निर्गतश्चेति तं ज्ञातवृत्तान्तनिर्गतं—विदितवृत्तान्ततया बहिरागतमित्यर्थः (विश०। कर्म्मधा०), योधयामास—सङ्ग्रामयामास, युद्धं कारयामास इत्यर्थः [युध+णिच्+लिट्-णल्। "गतिबुद्धि—" (१·४।५२ पा०) इत्यनेन अणिकर्त्तुः राक्षसस्य णौ कर्म्मत्वम]; राक्षसः युयुधे, शूरस्तं राक्षसं योधयामासेत्यर्थः ।

(प) चित्रेण—अद्भुतेन, विस्मयजनकेनेत्यर्थः, यद्वा,—चित्रम्—अद्भुतं यथा तथा, अस्त्रेण युध्येते यौ तयोः चित्रास्त्रयोधिनोः,—नानाविधास्त्रैश्च युध्यमानयोरित्यर्थः (चित्रास्त्र+युध+ग्रहादित्वात् णिनिः)। स्त्रियै इदं स्त्र्यर्थं—स्त्रीनिमित्तम् ["अर्थेन नित्यसमासो विशेष्यलिङ्गता च इति वक्तव्यम्" (वा०) इति नित्यसमासः]।

अथ रक्षसि हते प्राप्तां तां सोमप्रभामादाय (फ) विज्ञानिरथेन ते सर्वे ततः उज्जयिनीं प्रत्यागमन्।

अथ हरिस्वामिगृहप्राप्तानां तेषां त्रयाणां लग्ने (ब) सम्प्राप्ते महान् विवादः प्रादुरभूत्। ज्ञानी अवदत्,—"यद्यहम् इमां ज्ञानबलेन न (भ) जानीयां, तदा कथमियं गूढस्था प्राप्येत? अतः मह्यमेवैषा देया" इति। विज्ञानी अवोचत्,—"यद्यहं (म) व्योमरथं न कुर्य्यां, तदा देवानामिव तत्र गतागतं कथं तत्क्षणं स्यात्? कथं वा तेन रथिना रथयुद्धं स्यात्? तस्मान्मह्यमेवेयं दातव्या" इति। शूरोऽब्रवीत्,—"यद्यहं तं राक्षसं रणे न (य) हन्यां, तदा युवाभ्यां यत्ने कृतेऽपि क एनामानयेत्? तन्मह्यमेव कन्येयं दातव्या"। इति तेषु (र) विवदमानेषु हरिस्वामी क्षणमुग्धभ्रान्तमानसस्तूष्णीमासीत्"।

---

सङ्ग्रामे—युद्धे, दुःखेन म्रियते असौ इति तस्य सङ्ग्रामदुर्द्धरस्य—रणदुर्म्मदस्य, युद्धे दुर्जेयस्येत्यर्थः। रक्षसः,—राक्षसस्य। अर्द्धचन्द्रेण—अर्द्धचन्द्रनाम्ना। अच्छिनत्—अकृन्तत् (छिद+लङ्-द)।

(फ) विज्ञानिना निर्मितः रथः विज्ञानिरथः तेन विज्ञानिरथेन (शाकपार्थि०)। ततः,—तस्मात् स्थानात्।

(ब) सम्प्राप्ते—समुपस्थिते। प्रादुरभूत्—समजनि (प्रादुर्+भू+लुङ्-द)।

(भ) जानीयाम्—उपलभेय (ज्ञा+लिङ्-याम्)। गूढे—रहसि, ("गूढं रहसि गुह्ये च न द्वयोः संवृते त्रिषु" इति मेदिनी), तिष्ठति—वर्त्तते या सा गूढस्था—अज्ञातप्रदेशस्थिता इत्यर्थः [गूढ+स्था+"सुपि स्थः" (३।२।४ पा०) इति कः], प्राप्येत—अधिगम्येत (प्र+आप+कर्म्मणि लिङ्-ईत)। मह्यं (सम्प्र० ४र्थी०)।

(म) व्योमरथं—व्योमयानं, विमानमित्यर्थः। आदौ गतं पश्चात् आगतं गतागतं—गमनागमनं (खातानुलिप्तवत् स०)। रथिना—रथारोहिणा राक्षसेन सह इत्यर्थः, रथस्थेनारिणा रथस्थस्यैव युद्धस्य युक्तनीतित्वादिति भावः।

(य) हन्यां—वधेय (हन+लिङ्-याम्)। आनयेत्—प्रापयेत्, उज्जयिनीमिति शेषः (आ+नी+लिङ्-यात्)।

(र) विवदमानेषु—परस्परं विरुद्धं कथयत्सु इत्यर्थः [भावे ७मी०। वि+वद

इति कथामाख्याय वेतालः राजानं पप्रच्छ,—"राजन्! एतेषु कस्मै सा देयेति भवान् वदतु, यदि जानन् न वदिष्यसि, तदा ते मूर्द्धा शतधा स्फुटिष्यति"। इति वेतालवचः समाकर्ण्य राजा मौनं (ल) विहाय प्रत्यभाषत,—"शूराय सा प्रदातव्या, येन देहपणोद्यमात् बाहुबलेन तं राक्षसं जित्वा कन्या समुपार्जिता; ज्ञानिविज्ञानिनौ तु विधात्रा अस्य सहायौ नियोजितौ। पश्य, (व) गणकतक्षाणौ किं परोपकरणाय न?"।

---

+शानच् "विभाषा विप्रलापे" (१।३ ५० पा०) इति आत्मनेपदम्]। क्षणं—क्षणकालं, मुग्ध—विमूढ ("मुग्धः सुन्दरमूढयोः" इति विश्वः), कर्त्तव्यनिर्णया-क्षमत्वादिति भावः, भ्रान्त—चञ्चलमिति यावत्, मानसं—मनः यस्य तादृशः क्षण-मुग्धभ्रान्तमानसः,—कियत्कालं विह्वलचित्तः सन् इत्यर्थः (विश०; बहुव्री०)।

(ल) विहाय—त्यक्त्वा (वि+हा+ल्यप्)। देहः,—आत्मशरीरमेव, पणः,—मूल्यं, यद्वा,—पराजये निजशरीरमेव पातयिष्यामि इत्येवं निश्चयविशेषः इत्यर्थः, तेन य उद्यमः,—शत्रुविनाशोद्योगः तस्मात् देहपणोद्यमात्—कार्य्यं वा साधयेयं, शरीरं वा पातयेयम् इति बुद्ध्या स्वशरीरमपि एतत्कार्य्यसिद्धेः मूल्यमित्येतत् निश्चित्य रिपुविनाशोद्योगं कृत्वेत्यर्थः (ल्यब्लोपे ५मी०)। जित्वा—पराभूय (जि+क्त्वा)। समुपार्जिता—समानीता इत्यर्थः (सम्+उप+अर्ज+णिच्+क्तः स्त्रियां टाप्)। सहायौ—सहचरौ, साहाय्यकारिणौ इत्यर्थः, नियोजितौ—अवधारितौ प्रेरितौ वा (नि+युज+णिच्+क्तः, तौ)।

(व) गणकः,—दैवज्ञः, ज्ञानीत्यर्थः ("सांवत्सरो ज्यौतिषिको दैवज्ञगणका-वपि। स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्त्तान्तिका अपि"॥ इत्यमरः), तक्षा—रथकारः, विज्ञानीति यावत् ("तक्षा तु वर्द्धकिस्त्वष्टा रथकारश्च काष्ठतट्" इत्यमरः), गणकश्च तक्षा च तौ गणकतक्षाणौ—दैवज्ञरथकारौ, ज्ञानिविज्ञानिनौ इति यावत् (द्वन्द्व०)। परेषाम्—अन्येषां, राजादीनामिति भावः, उपकरणाय—कार्य्यसाधनाङ्गविशेषाय इत्यर्थः (तादर्थ्ये ४र्थी०), न? इत्यत्र भवतीति शेषः, अपि तु भवत्येव इति नञा निर्दिष्टायाः काक्वर्थः; राजानः राजसदृशा वा यदा प्रयान्ति, तदा ज्ञानिनो शुभलग्नं गमनफलादिकञ्च निर्दिश्य वदन्ति, रथकारनिर्म्मितरथमारुह्य च यान्ति, अतस्तयोः उपकरणत्वं यात्रायां मन्तव्यम्, अत्रापि ज्ञानिविज्ञानिनौ तथैव उपकरण-भूतौ सहायौ सञ्जातौ इति तौ न कन्यामर्हतः इति भावः।

इति । (अ) मनुजपतेर्वाचं निशम्य स वेतालः सपदि तस्य स्कन्धात् निजं निलयमगमत्, राजाऽपि तमानेतुं पुनः कृतोद्यमस्तमेव शिंशपातरुमभिजगाम ।

---

## अथ षष्ठकथा ।

ततः स राजा प्राग्वत् शिंशपान्तिकमुपेत्य वेतालमादाय मौनी तथैव तं (क) भिक्षुमुद्दिश्य प्रतस्थे । तावच्च स वेतालः तं भूपमवादीत्,—"राजन्! त्वं (ख) सुधीः सत्त्ववांश्च, तेनासि मे प्रियः; तस्मात् त्वां विनोदयितुं पुनः कथामाख्यामि प्रश्नञ्च, शृणु,—

आसीत् पुरा यशःकेतुर्नाम नृपः पृथिव्याम् । तस्य शोभावती नाम राजधानी; तस्यामुत्तमं गौरीमन्दिरमभवत्, तस्य च (ग) दक्षिणतः गौरीतीर्थं नाम सरः; प्रतिवर्षम् आषाढ़शुक्लचतुर्दश्यां तस्य यात्रायां नानादिग्भ्यो मह्राजनगणाः स्नातु-

(अ) मनुजपतेः,—नरपतेः । निशम्य—श्रुत्वा (नि+शम+ल्यप्) । सपदि—तत्क्षणात । निलयं—वसतिस्थानं, शिंशपातरुमित्यर्थः । कृतः,—विहितः, उद्यमः,—उद्योगः येन सः कृतोद्यमः,—विहितोद्योगः (विण० । बहुव्री० ) ।

(क) भिक्षुं—परिव्राजं, शान्तिशीलमिति यावत, उद्दिश्य—लक्ष्यीकृत्य (उत+दिश+ल्यप्) ।

(ख) सु—शोभना, धीः,—बुद्धिर्यस्य स सुधीः,—विद्वान्, सत्त्ववान्—उदारचेता., व्यवसायवान् वा, दृढ़सङ्कल्प इत्यर्थः ।

(ग) दक्षिणतः,—दक्षिणस्यां दिशि [दक्षिण+"दक्षिणोत्तराभ्यामतसुच्" (५।३।२८ पा०) इति अतसुच् ] । वर्षे वर्षे प्रतिवर्षं—प्रतिवत्सरं (विभक्त्यर्थेऽव्ययी०) ।

मायाति स्म। एकदा स्नानार्थं धवलो नाम कश्चित् रजकः (घ) ब्रह्मस्थलाख्य ग्रामात् तत्राऽऽजगाम। स युवा तत्र स्नातुमागतां शुद्धपटनाम्नः कस्यचित् सुतां मदनसुन्दरीं नाम ददर्श। (ङ) तया तु इन्दोर्लावण्यहारिण्या हृतमानसः तत्र तस्या नामकुलमन्विष्य कामार्त्तो गृहमगात्। तत्र चाऽऽगत्य (च) अनवस्थः तया विना निराहारश्च तिष्ठन् मात्रा पृष्टो मनोगतं तस्यै समाख्याय तथा तस्थौ। माऽपि गत्वा (छ) विमल-नाम्ने स्वभर्त्रे तन्न्यवेदयत्। स चाभ्येत्य (ज) तथाऽवस्थं तं दृष्ट्वा समभ्यधात्,—"पुत्र! किं विषीदसि? एतत्ते अभीप्सितं

तस्य—गौरीतीर्थस्य, यात्रायाम्—उत्सवे (काले ७मी०। "यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्" इति मेदिनी)। महाजनगणः—साधुसमूहः।

(घ) ब्रह्मस्थलात्—ब्रह्मस्थल इति नाम्नः।

(ङ) तया—मदनसुन्दर्या (कर्त्तरि ३या०), इन्दोः—चन्द्रस्य, लावण्यं—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते" इत्युक्तलक्षणं कान्तिविशेषं, हरति—चोरयति या सा तया लावण्यहारिण्या—सौन्दर्यचौरेण (विण०। लावण्य+हृ+"ग्रहादित्वात् णिनिः, ततः स्त्रियां ङीप्, तया), चन्द्रादप्यधिकलावण्यवत्या इति भावः, हृत—चोरितं, मानसं यस्य तथाभूतः हृतमानसः,—अपहृतचेताः (विण०। बहुव्री०)। अन्विष्य—अनुसन्धाय (अनु+इष+ल्यप्)।

(च) नास्ति अवस्था—अवस्थितिः, एकस्मिन् स्थाने अवस्थानम् इत्यर्थः, यस्य सः अनवस्थः,—एकत्राकृतावस्थानः, चञ्चलचित्त इति भावः (बहुव्री०)। मनसा गतं तं मनोगतं—मनोऽभिप्रायमित्यर्थः (३या तत्पु०), तस्यै—मात्रे ["क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" (वा०) इति ४र्थी०]।

(छ) विमल इति नाम यस्य तस्मै विमलनाम्ने—विमलसंज्ञकाय, स्वस्याः,—आत्मनः, भर्त्ता—पतिः तस्मै स्वभर्त्रे—निजस्वामिने, तस्य यूनः पित्रे इत्यर्थः ["क्रियया य—" (वा०) इति ४र्थी०]।

(ज) तथा—तादृशी, अवस्था—दशा यस्य तं तथाऽवस्थं—तादृग्दशं (विण०। बहुव्री०)। किं—कथं, विषीदसि?—खिद्यसे? विषण्णो भवसि इत्यर्थः

न दुष्प्रापं, स हि शुभ्रपटो मया याचितः अवश्यमेव सुतां तुभ्यं दास्यति। वयं कुलेन अर्थेन कर्मणा च तस्मादन्यूनाः; अहं तं वेद्मि, स च मां वेत्ति, तदिदं न दुष्करम्"। इति पुत्रम् (झ) आश्वास्य भोजनादिकं कारयित्वा च तेन सह अन्येद्युरसौ विमलः शुभ्रपटस्य गृहमगात्; अयाचत च तस्य धवलस्य पुत्रस्यार्थे तत्कन्याम्। स च सादरं तस्मै तां दातुं प्रतिशुश्राव।

अथ लग्नं सम्प्राप्य स शुभ्रपटस्तस्मै धवलाय (ञ) तुल्यां सुन्दरीं सुतां प्रादात्। स च (ट) कृतोद्वाहः दर्शनरक्तया तया भार्य्यया साकं कृतार्थः पितुर्गृहमागात्। कदाचित्

---

[वि+षद+लट् मिप् "पाघ्राध्मा—" (७।३।७८ पा०) इति सीदादेशः]। अभीप्सितम्—अभीष्टं, वाञ्छितं वस्तु इत्यर्थः [अभि+आप्+सन्+क्तः "आप्ज्ञप्यृधामीत्" (७।४।५५ पा०) इति आकारस्य ईदादेशः "अत्र लोपोऽभ्यासस्य" (७।४।५८ पा०) इति अभ्यासलोपश्च], दुष्प्रापं—दुर्लभं [दुर्+प्र+आप+"ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (३।३।१२६ पा०) इति खल्]।

(झ) आश्वास्य—सान्त्वयित्वा (आ+श्वस+णिच्+ल्यप्)। अन्येद्युः—अन्यस्मिन् अहनि, परदिने इत्यर्थः [अन्य+"सद्यःपरुत—" (५।३।२२ पा०) इत्यनेन अहनि इत्यर्थे निपातनात् एद्युस्]।

(ञ) तुल्याम—अनुरूपां, धवलस्य योग्यामित्यर्थः (विण०)। प्रादात—समर्पयत् [प्र+दा+लुङ्-द "गातिस्थाघु—" (२।४।७७ पा०) इति सिचो लुक्]।

(ट) कृतः,—विहितः, उद्वाहः,—परिणयो येन सः, यद्वा,—कृतः,—सञ्जातः, उद्वाहः यस्य सः कृतोद्वाहः,—कृतविवाहः (विण०। बहुव्री०), दर्शने—स्वामिनो धवलस्य ईक्षणे, यद्वा,—दर्शनात्—पत्युरवलोकनादेव, रक्तया—अनुरक्तया, अनुरागिण्या इति यावत् ("रक्तं नील्यादिरञ्जिते। कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलके ऽश्वे"॥ इति हैमः) दर्शनरक्तया—प्रियानुरागवत्या (विण०। ७मी तत्पु० ५मी तत्पु० वा), भार्य्यया ["सहयुक्तेऽप्रधाने" (२।३।१९ पा०) इति सहार्थकसाकंशब्दयोगात् ३या०], साकं—सह ("साकन्तु साकं सत्रा समं सह" इत्यमरः), कृतार्थः,—सिद्धप्रयोजनः, पूर्णमनोरथ इत्यर्थः।

( ठ ) सुखस्थितस्य तस्य श्वशुरात्मजः मदनसुन्दर्य्याः सहोदरः समागात्। स चागत्य सर्वैः ( ड ) पृष्टकुशलोदन्तः स्वस्रा च समाश्लिष्य अभिनन्दितः विश्रान्तः प्रावदत्,—"अहं मदनसुन्दर्य्या जामातुश्च निमन्त्रणार्थं तातेन प्रेषितोऽस्मि. अस्माकं गृहे पूजोत्सवो वर्त्तते" इति। ततस्ते सर्वे ( ढ ) सम्बन्धिनः तस्य तद्वाक्यं श्रद्धाय यथोचितैः पानभोजनैः तं तदहः समुपाचरन्।

अथ प्रातः स धवलः तेन श्वशुरनन्दनेन मदनसुन्दर्य्या च सहितः ( ण ) श्वाशुरं गृहं प्रति प्रस्थितः ; ताश्च शोभावतीं नगरीं प्राप्य महत् गौर्य्या निकेतनं ददर्श, निजगाद च तां मदनसुन्दरीं तद्भ्रातरञ्च,—"अत्रैतां देवतां पश्यामः" इति ; प्रथममहं तावत् व्रजामि, युवामत्रैव तिष्ठतम्" इति उक्त्वा

( ठ ) सुखेन स्थितस्य, सुखं स्थितस्य वा सुखस्थितस्य—आनन्दितमनसा अत्र स्थितस्य ( विण० ), तस्य—धवलस्य, श्वशुरात्मजः,—श्यालः।

( ड ) पृष्टः,—जिज्ञासितः, कुशलोदन्तः,—मङ्गलवार्त्ता ( "वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः) यस्य सः पृष्टकुशलोदन्तः,—जिज्ञासितशुभवृत्तान्तः (विण० बहुव्री० )। स्वस्रा—भगिन्या ( "भगिनी स्वसा" इत्यमरः ), समाश्लिष्य—समालिङ्ग्य ( सम्+आ+श्लिष+ल्यप् ), अभिनन्दितः,—समादृतः इत्यर्थः ( विण०। अभि+नन्द+क्तः )। जामातुः,—भगिनीपतेरिति भावः। तातेन—पित्रा ( "तातस्तु जनकः पिता" इत्यमरः)। पूजायै—देवार्चनायै, उत्सवः,—आनन्दजनकव्यापारः पूजोत्सवः,—पूजार्थमानन्दजनकव्यापारानुष्ठानमित्यर्थः ( ४र्थी तत्पु० ), वर्त्तते—विद्यते ( वृत+लट्-ते )।

( ढ ) सम्बन्धिनः,—वैवाहिकसम्बन्धयुक्ताः, भगिन्याः श्वशुरादय इत्यर्थः, यद्वा,—सम्बन्धिनः,—वैवाहिकसम्बन्धयुक्तस्य, मदनसुन्दर्य्याः सहोदरस्येत्यर्थः। श्रद्धाय—समादृत्य विश्वस्य इति वा ( श्रत्+धा+ल्यप् )। समुपाचरन्—समसेवन्त ( सम्+उप+चर+लङ्-अन् )।

( ण ) श्वशुरस्य इदं श्वाशुरं—श्वशुरसम्बन्धि [ श्वशुर+"तस्येदम्" ( ४।३।१२० पा० ) इति अण् ]। निकेतनं—मन्दिरम्। पश्यामः,—अवलोकयामः [ दृश+लट्-मस् "अस्मदो द्वयोश्च" ( १।२।५९ पा० ) इति अविशेषणस्य अस्मदः

धवलः तां देवीं द्रष्टुं समुपागात्। मन्दिरं प्रविश्य च तां प्रणम्य (त) अष्टादशदोर्दण्डखण्डितोच्चण्डदानवां पादपद्मतलाक्षिप्त-महिषासुरमर्दिनीं विभाव्य सहसा विधिनोत्पादितमतिर-चिन्तयत्,—"विविधैर्जीवोपहारैर्जनः इमां देवीमर्च्चयति, अहञ्च सिद्धये आत्मोपहारेण किं नैनां प्रीणयामि ?"। इत्यालोच्यैव निर्जनात् गर्भगृहात् खड्गमानीय स्वयमेव निजं शिरश्छित्त्वा भुव्यपातयत्। क्षणान्तरे,—"कथमसौ (थ) चिरयति ?" इति तमन्वेष्टुं स श्वाशुर्य्योऽपि तत्र देवीभवने प्राविशत्,

एकत्वेऽपि अत्र बहुवचनं विवक्षितम्]। समुपागात्—अगमत् [सम्+उप+इ+लुङ्-द् "इणो गा लुङि" (२।४।४५ पा०) इति गाऽऽदेशः, "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]।

(त) अष्टादश—अष्टादशसङ्ख्यकाः, दोषः,—भुजाः ("भुजबाहू प्रवेष्टो दोः" इत्यमरः), दण्डाः—लगुडा इव, रिपुनाशनरूपकार्य्यसाधकत्वात् दीर्घत्वाच्च इति भावः, तैः खण्डिताः,—द्विधाकृताः, विनाशिता इत्यर्थः, उच्चण्डाः,—अतीवोग्राः, दानवाः,—असुराः यया ताम् अष्टादशदोर्दण्डखण्डितोच्चण्डदानवां—नवद्वयसङ्ख्यकभुजयष्टि-विनाशितभीषणदनुजां (विश०। बहुव्री०), पादपद्मतले—चरणकमलनिम्ने, आक्षिप्तम्—आकृष्य पातितं, महिषासुरं मर्द्दयतीति तां पादपद्मतलाक्षिप्तमहिषा-सुरमर्द्दिनीं—चरणाम्बुजाधःपातितमहिषासुरपीडयित्रीं (मृद+ग्रहादित्वात् णिनिः, उगित्वात् ङीप्, ताम्), विभाव्य—मत्वा (वि+भू+णिच्+ल्यप्), देवीं दुष्टदमनीं शिष्टपालनीम् अत एव महिममयीं विचिन्त्य इति भावः। विधिना—दैवेन ("विधिर्विधाने दैवे च" इत्यमरः), उत्पादिता—सञ्जनिता, मतिः,—बुद्धिः यस्य तथाभूतः उत्पादितमतिः,—सञ्जनितबुद्धिः सन्। अर्च्चयति—पूजयति (अर्च्च+णिच्+लट्-तिप्)। सिद्धये—साफल्याय, देव्याः प्रीत्युत्पादनद्वारा मनुष्यजन्मनः साफल्य-सम्पादनार्थमित्यर्थः, मोक्षलाभाय इत्यर्थो वा (तादर्थ्ये ४र्थी०), आत्मोपहारेण—स्वजीवनबलिदानेन इत्यर्थः (करणे ३या०)। प्रीणयामि ?—सन्तोषयामि ? (प्री+णिच्+लट्-मिप्)। गर्भगृहात्—गृहमध्यभागात् (अपा० ५मी०)। अपातयत्—न्यक्षिपत् (पत+णिच्+लङ्-द)।

(थ) चिरयति—विलम्बयति (चिरं—विलम्बं करोति इति वाक्ये चिर+

प्रविष्टश्च तं छिन्नशिरसं भगिनीपतिं दृष्ट्वा शोकव्यामोहितः तथैव तेनासिना स्वं शिरश्चिच्छेद।

अथ यावत् स नाऽऽयाति, तावत् सा मदनसुन्दरी (द) समुद्भ्रान्तमानसा तत् देवीभवनमाययौ, प्रविश्य च पतिं भ्रातरञ्च तथाविधं दृष्ट्वा,—"हा! किमिदम्? हताऽस्मि" इति विलपन्ती भुवि न्यपतत्। क्षणेन चोत्थाय तौ (ध) अकाण्डहतौ शोचन्ती—"किं मे अनेन जीवितेन?" इति पर्य्यालोच्य देहत्यागोन्मुखी तां देवीं व्यजिज्ञपत्,—"देवि! सौभाग्यचारित्रविधानैकाधिदेवते! माररिपुशरीरार्द्धहरे! अशेषललनाजनशरण्ये! दुःखहारिणि! एकपदे कथं मे भर्त्ता

कण्ड्वादित्वात् यक्+लट्-तिप्)। अन्वेष्टुम—अनुसन्धातुम् (अनु+इष+तुमुन्)। श्वशुरस्य अपत्यं पुमान् इति श्वाशुर्यः,—श्वशुरनन्दनः, श्यालः इत्यर्थः (श्वशुर+अपत्यार्थे यत्)। प्राविशत्—अढौकिष्ट (प्र+विश+लुङ्-द)।

(द) समुद्भ्रान्तं—समुद्विग्नं, मानसं—मनः यस्याः सा समुद्भ्रान्तमानसा—व्याकुलचित्ता सती। विलपन्ती—परिदेवमाना, अनुशोचन्ती इत्यर्थः (वि+लप+शतृ+उगित्वात् ङीप्)।

(ध) अकाण्डे—अनवसरे, सहसा इत्यर्थः, हतौ—मृतौ अकाण्डहतौ—अकालविनष्टौ। किम्?—किं प्रयोजनम्? जीवनेन मे न किमपि प्रयोजनमस्तीति भावः। देहत्यागाय—शरीरविसर्जनाय, उन्मुखी—उद्यता देहत्यागोन्मुखी—शरीरविसर्जनप्रवृत्ता (४र्थी तत्पु०)। सौभाग्य—भर्तृवाल्लभ्यं, चारित्रं—सच्चरित्रता तयोः विधानस्य—सम्पादनस्य, एकाधिदेवते!—एकमात्राधिष्ठातृदेवि!, सौभाग्यचारित्रविधानैकाधिदेवते!—पतिप्रियत्वसम्पादनस्य चारित्रवत्त्वसम्पादनस्य च एकमात्रेश्वरि! यतस्त्वं पत्युरतिप्रिया, महासती च, अत एव नार्य्यन्तराणामपि तद्विधायिनी त्वं, त्वत्प्रसादात् अहमपि तथैव आसम् इति भावः; मारस्य—मदनस्य, कामस्य इत्यर्थः ("मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः" इत्यमरः), रिपुः,—शत्रुः, शिव इत्यर्थः, तस्य शरीरार्द्धं—देहार्द्धभागं, हरति—वहति, स्वकर्त्तृत्वेन अर्द्धाङ्गिनीपदभाक्त्वात् इति भावः, यद्वा,—हरति—गोपायति, हरगौरीरूपे हरस्य देहार्द्धभागेन निजार्द्धदेहमेलनादिति भावः, या सा माररिपुशरीरार्द्धहरे!—

भ्राता च त्वया निहतः ? न युक्तमेतत्ते, अहं हि त्वयि नित्य-भक्ता, तदाश्रितायाः मे शरण्यं भवती एकं करुणं वचः शृणोतु, एतां दौर्भाग्योपहतां तनुं त्यजामि अत्रैव ; देवि ! यत्र कुत्रापि जनिष्ये, परं तत्र तत्रैव जन्मनि एतौ मे भर्तृभ्रातरौ भूयास्ताम्" इति सम्प्रार्थ्य, स्तुत्वा नत्वा च तां देवीं, तत्रस्थे अशोकपादपे पाशं विरचयामास । तत्र यावत् पाशे कण्ठमर्पयति, तावत् तत्र गगनात् (ग) अशरीरिणी वागुदचरत्,—"पुत्रि ! मा साहसं कृथाः ; बालाया अपि ते अनेन सत्त्वोत्कर्षेण प्रीताऽस्मि, पाशमेतं त्यज, संश्लेषय च स्वं स्वं शिरः भर्तृभ्रातृकबन्धयोः, एतौ जीवितौ द्वावपि मत्प्रसादादुत्तिष्ठताम्" इति । एतदा-

---

ङ्गराङ्गाङ्गभागिनि !, [शरणे साधुः इति शरण+"तत्र साधुः" (४।४।९८ पा०) इति यत् प्रत्ययः] अशेषाणां—समग्राणां, ललनाजनानां—नारीजनानां, शरण्ये—आश्रयभूते ! अशेषललनाजनशरण्ये—सकलरमणीकुलाश्रयस्वरूपे !। एकपदे—अकस्मात् (अव्य०)। शरण्यं—रक्षित्री, रक्षाकर्त्री इत्यर्थः ("शरणं गृहरक्षित्रोः" इत्यमरः)। करुणं—दीनम्। दौर्भाग्येन—दुर्भाग्यतया, स्वामिवियोगादिति भावः, उपहताम्—आक्रान्तां दौर्भाग्योपहतां—दुष्टभागधेयपीड़िताम् (विशे०। ३या तत्पु०)। अत्रैव—तव समक्षमेव। जनिष्ये—उत्पत्स्ये (जन+लृट्-स्ये)। भूयास्तां—सम्पत्सीयास्तां (भू+आशिषि लिङ्-यास्ताम्)। सम्प्रार्थ्य—याचित्वा (सम+प्र+अर्थ+णिच्+ल्यप्)। पाशं—रज्जुं, गले बन्धनार्थमिति भावः, विरचयामास—कल्पयामास (वि+रच+णिच्+लिट्-णल्)।

(ग) अशरीरिणी—शरीरसम्बन्धविरहिता, दैवी इत्यर्थः। उदचरत्—उदतिष्ठत इत्यर्थः (उत्+चर+लङ्-द्)। सत्त्वस्य—मनसः स्वभावस्य वा, उत्कर्षेण—प्रशस्ततया सत्त्वोत्कर्षेण—उदारस्वभावेन, प्रशस्तमनस्तया वा। संश्लेषय—संयोजय (सम्+श्लिष+णिच्+लोट्-हि)। भर्तृभ्रात्रोः,—स्वामिसहोदरयोः, कबन्धयोः,—छिन्नशिरःकलेवरयोः (६ष्ठी तत्पु०। "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरवचनेन क्रियायुक्तछिन्नशिरःकलेवरस्यैव कबन्धशब्दवाच्यत्वेऽपि अत्र शिरःशून्य-देहमात्रे एव उपचारः) भर्तृभ्रातृकबन्धयोः,—विमूर्द्धपतिसहोदरकलेवरयोः (६ष्ठी तत्पु०)।

कण्ठेनैव पार्श्वं त्यक्त्वा सा हर्षादुपेत्य (प) अतिरभसादविभाव्य भ्रान्त्या मदनसुन्दरी भर्त्तृशिरो भ्रातृदेहेन भ्रातृशिरश्च भर्त्तृदेहेनायोजयत्। ततश्च (फ) अक्षताङ्गौ तौ जीवन्तौ सुप्तोत्थिताविव उदतिष्ठताम्। अथ ते (ब) अन्योऽन्योदितस्वस्ववृत्तान्ततोषिणः देवीं प्रणम्य यथेष्टं प्रययुः। यान्ती च सा मदनसुन्दरी तयोः स्वकृतं (भ) शिरोविनिमयं दृष्ट्वा उद्विग्ना किंकर्त्तव्यविमूढ़ा चासीत्"।

इमामाख्याय कथां वेतालः पप्रच्छ,—"राजन्! ब्रूहि, कः (म) सङ्कीर्णयोरनयोरस्या भर्त्ता भवितुमर्हति? जानंश्चेत् न ब्रवीषि, तदा पूर्वोक्त एव शापः स्यात्"। इति समाकर्ण्य राजा तं वेतालमवादीत्,—"यस्मिन् कलेवरे तत् पतिशिरः

(प) अतिरभसात्—अतिवेगात्, उपेत्य इत्यनेन सम्बन्धः, यद्वा,—अभिरभसात् —अतिहर्षात्, अस्मिन् पक्षे अविभाव्य इत्यनेन सम्बध्यते ("रभसो वेगहर्षयोः" इति मेदिनी); अविभाव्य—सूक्ष्मसविविच्यैव, विशेषमदृष्ट्वैव इत्यर्थः (न+वि+भू+णिच् +ल्यप्) अयोजयत—सममेलयत् (युज+णिच्+लङ्-द)।

(फ) अक्षताङ्गौ—अव्याहतदेहौ (विण०। बहुव्री०)।

(ब) अन्योऽन्यं—परस्परम्, उदितेन—आलपितेन, स्वस्ववृत्तान्तेन—निजनिजवार्त्तया, शिरश्छेदनजीवनलाभादिविषयकेणेति भावः, तुष्यन्ति ये ते तादृशाः अन्योऽन्योदितस्वस्ववृत्तान्ततोषिणः,—परस्परनिजविषयकालापहृष्टाः (विण०। उप० स०। तुष्यतेर्ग्रहादित्वात् णिनिः)। यथेष्टं—स्वाभिमतदेशमित्यर्थः।

(भ) शिरोविनिमयं—मस्तकविपर्य्यासम्। उद्विग्ना—व्याकुला [उत+विज +क्तः "ओदितश्च" (८।२।४५ पा०) इति निष्ठा-तस्य नकारः, "चोः कुः" (८।२।३० पा०) इति जकारस्य कुत्वम्], किंकर्त्तव्यविमूढ़ा—प्रतिकारासमर्थत्वात् मोहमापन्ना इत्यर्थः।

(म) सङ्कीर्णयोः,—परस्परदेहशिरःसम्मिश्रितयोः, एकस्य देहे अन्यस्य शिरः, अपरस्य देहे अन्यस्य शिरः एवंरूपेण परस्परसम्बन्धयुक्तयोरित्यर्थः। अस्याः, —मदनसुन्दर्य्याः।

(य) संस्थं, स एवास्याः पतिर्भवेत्, प्रधानं सर्वेषु अङ्गेषु शिरः, तद्गता प्रत्यभिज्ञा च"। इत्युक्तवतो नृपतेः स्कन्धात् स वेतालस्तथैवातर्कितः सहसा प्रययौ। राजा च भूयस्तमानेतुं समुद्यतस्तत्रैव जगाम।

---

## अथ सप्तमकथा।

ततः स राजा पुनः शिंशपान्तिकमेत्य तथैव वेतालं स्कन्धमारोप्य प्रतस्थे। प्रस्थितञ्च तं वेतालः पथि समभाषत,—"राजन्! पुनस्ते (क) श्रान्तिविनोदिनीं कथामेकां कथयामि, शृणु,—

अस्ति (ख) पूर्वाम्बुधितटे ताम्रलिप्तीति पुरी। तस्याञ्च चण्डसिंहो नाम राजाऽभूत्, यः परस्त्रीषु (ग) पराङ्मुखः परं

---

(य) संस्थम्—अवस्थितम् [सम्+स्था+"आतश्चोपसर्गे" (३।१।१३६ पा०) इति कः। "संस्थपरेऽवस्थिते" इति मेदिनी]। तद्गता—शिरःसंश्रिता, प्रत्यभिज्ञा—ज्ञानं, शिरसो ज्ञानेन्द्रियाधारत्वात् इति भावः। यदुक्तं वैद्यके चरकसंहितायां,—"शिरसि इन्द्रियाणि इन्द्रियप्राणवहानि च स्रोतांसि सूर्य्यमिव गभस्तयः संश्रितानि" (च० सिद्धि० ९अ०) इति।

---

(क) श्रान्तिं—पथश्रमं, विनुदति—अपनयति इति तथाभूतां श्रान्तिविनोदिनीं—पथश्रमापनोदनीम् (वि+नुद+ग्रहादित्वात् णिनिः)।

(ख) अम्बूनि—जलानि, धीयन्ते—धार्य्यन्तेऽत्र इति अम्बुधिः [अम्बु+धा+"कर्मण्यधिकरणे च" (३।३।९३ पा०) इति किः "आतो लोप—" (६।४।६४ पा०) इति आकारलोपः] पूर्वाम्बुधितटे—पूर्वदिगवस्थितसमुद्रतीरे।

(ग) पराङ्मुखः—विमुखः, परं—किन्तु; न, पराङ्मुख इति शेषः, यः

सङ्ग्रामभूमिषु न; शत्रुसङ्घानां हन्ता, परद्रव्यसम्पदान्तु न। एकदा तस्य भूपतेः द्वारि (घ) दाक्षिणात्यः सत्त्वशीलो नाम जनप्रियः कश्चित् राजपुत्रः समभ्यगात्। तत्रागत्य स आत्मानम् (ङ) आवेद्य नृपात् नैव काममवाप। ततश्च स यावत्,—"यदि मे (च) राजान्वये जन्म, तदीदृशं निर्धनत्वं किम्? निर्धनत्वे च धात्रा किं मे महेच्छता विहिता? अथं हि राजा

---

परस्त्रीदर्शनविमुखः किन्तु सदैव युद्धक्षेत्रगमनोत्सुकः इति समुदितार्थः, शीलवान् सत्त्ववांश्चायमिति भावः। शत्रुसङ्घानां—रिपुसमूहानां ["कर्तृकर्मणोः कृति" (२।३।६५ पा०) इति कृद्योगलक्षणा ६ष्ठी०], हन्ता—नाशयिता (हन+तृच्), परेषाम्—अन्येषां, द्रव्याणि—धनादीन्युपकरणानि, तेन या सम्पत्—ऐश्वर्यं तासां परद्रव्यसम्पदाम्—अन्येषां धनादिजनितप्रभावाणामित्यर्थः, न, हन्ता इति शेषः, शत्रुकुलविनाशकः सः, न परेषाम् ऐश्वर्यनाशकः इति भावः, महावीरः अलोभश्च सः इति तात्पर्यम्।

(घ) दक्षिणस्यां वसति इति दक्षिणा ["दक्षिणादाच्" (५।३।३६ पा०) इति दक्षिणादाच्, दक्षिणा इति आजन्तमव्ययम्] दक्षिणा—दक्षिणस्यां दिशि भवः दाक्षिणात्यः,—दक्षिणदेशजः ["दक्षिणापश्चात्पुरसस्त्यक्" (४।२।९८पा०) इति त्यक्], सत्त्वं—सत्त्वगुणप्रधानं, शीलं—स्वभावः यस्य सः सत्त्वशीलः।

(ङ) आवेद्य—विज्ञाप्य, आत्मपरिचयं दत्त्वा इत्यर्थः (आ+विद+णिच्+ल्यप्)। कामं—काम्यम्, अभिलषितधनमित्यर्थः, अभिलषितराजसेवनरूपं कर्म वा, यद्वा,—कामं—निकामं, यथेप्सितमित्यर्थः ("कामः स्मरेच्छयोः पुमान्। रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्" इति मेदिनी), अवाप—लेभे (अव+आप+लिट्-णल्)।

(च) राज्ञां—नृपाणाम्, अन्वये—कुले राजान्वये—राजवंशे। (६ष्ठी तत्पु०। औपश्लेषिके वैषयिके वा अधिकरणे ७मी०। "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ" इत्यमरः)। तत्—तदा। किम्?—कथम्?। धात्रा—विधात्रा, किं—किमर्थम्? महती—उच्चैः, इच्छा—अभिलाषः महेच्छा—महान् आशयः, तस्य भावः महेच्छता—महाऽऽशयता, उच्चाभिलाषता इत्यर्थः ("महेच्छस्तु महाऽऽशयः" इत्यमरः), विहिता?—सम्पादिता? यदि मह्यम् उच्चाभिलाषपूरणाय सामर्थ्यमेव विधात्रा न

सेवमानमेवं क्लिष्टपरिच्छदं चिरं क्षुधा अवसीदन्तं मां नाद्यापि पश्यति ?" इति ध्यायति, तावत् स नृपः आखेटकार्थं निरगात् । अग्रे च तस्मिन् (छ) कार्पटिके राजपुत्रे लगुडवाहिनि धावति, राजा प्रभूताऽश्वपादातयुतः प्रायात् । तत्र च मृगान् (ज) समन्विष्यन् आरात् महान्तं शूकरमनुधावन् अतिदूरं वनान्तरं प्रापत् । तत्र (झ) पर्णतृणाच्छन्नमार्गतया

---

दत्तं, तदा कथं तेन मे वाञ्छाभिलाषः प्रदत्तः ? इति समुदायार्थः । सेवमानं—परिचरन्तं (विश० । सेव+शानच्) । क्लिष्टः,—दारिद्र्यक्लेशसूचकः इत्यर्थः ("क्लिष्ट" इत्यत्र "क्लिष्ट" इति पाठः सुगमः, क्लिष्टः,—मलिनः), परिच्छदः,—वसनादिकं यस्य तं (विश० )। क्षुधा—क्षुधया, अवसीदन्तं—क्लिश्यमानम् (विश० । अव+सद+शतृ, तम् )। ध्यायति—चिन्तयति (ध्यै+लट्-तिप् )। आखेट एव आखेटकः (स्वार्थे कन्) तस्मै इदम् आखेटकार्थं—मृगयानिमित्तम् (अर्थेन सह नित्यसमासः । "आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्" इत्यमरः )।

(छ) कर्पटः,—नक्तकः ("समौ नक्तककर्पटौ" इत्यमरः), मलिनजीर्णवस्त्रखण्ड इत्यर्थः, तेन चरति इति कार्पटिकः तस्मिन् कार्पटिके—छिन्नमलिनवस्त्रखण्ड पिधाय विचरणशीले इत्यर्थः [विश० । कर्पट+"चरति" (४।४।८ पा० ) इति ठक्], यद्वा,—कार्पटः,—कार्य्यी, कार्य्यार्थी इत्यर्थः ("कार्पटो जतुकार्य्यिणोः" इति मेदिनी ), स एव इति कार्पटिकः तस्मिन् कार्पटिके—कार्य्यप्रार्थिनि (कार्पट+स्वार्थे ठक् )। लगुडं—यष्टिं, वहति—धारयतीति तस्मिन् लगुडवाहिनि—दण्डधारिणि, धावति—द्रुतं गच्छति [भावे ७मी० । सृ+शतृ "पाघ्राध्मास्था—" (७।३।७८ पा० ) इति धौरादेशः ]। आश्वम्—अश्वसमूहः ("हस्ते त्वाश्वीयमाश्ववत्" इत्यमरः ), पादातं—पत्तिसंहतिः, पदातिसमूहः इत्यर्थः ("पादातं पत्तिसंहतिः" इत्यमरः ), प्रभूतेन—बहुना, आश्वपादातेन—अश्वपदातिसैन्यसमूहेन, युतः,—मिलितः प्रभूताऽश्वपादातयुतः,—बहुलाश्वपदातिसैन्यसहितः (विश० । ३या तत्पु० ), प्रायात्—प्रातिष्ठत (प्र+या+लङ्-द )।

(ज) समन्विष्यन्—अनुसन्दधन् (सम+अनु+इष+शतृ ), आरात्—दूरे ("आराद्दूरसमीपयोः" इत्यमरः )। अनुधावन्—अनुगच्छन् [अनु+सृ+शतृ "पाघ्राध्मास्था—" (७।३।७८ पा० ) इति धौरादेशः ]।

(झ) पर्णं—दलपत्रं, तृणञ्च ताभ्यां छन्नः,—आवृतः, मार्गः,—पन्थाः,

शूकरं समपश्यन् श्रान्तः स राजा तस्मिन् वनान्तरे दिङ्मोह-मगमत्। एक एव स कार्पटिको राजपुत्रः (ञ) प्राणानपेक्षी पदातिः क्षुत्तृषापरीतः वाताश्वपृष्ठगं तं राजानमनुससार। स राजा तं तथा (ट) अनुयान्तं दृष्ट्वा सस्नेहमवदत्,—"भद्र! कच्चित् यथागतं मार्गं वेत्सि?"। तदाकर्ण्य स बद्धाञ्जलिः कार्पटिकोऽभ्यधात्,—"देव! वेद्मि, (ठ) परम् इह क्षणं विश्राम्यतु देवः, एष खलु दिवो वध्वा मेखलामध्यमणिः स्फुरद्रश्मिजालोज्जिनीनायकोऽतितरां देदीप्यते"। एतदाकर्ण्य स राजा

---

तस्य भावस्तत्ता तया पर्वतच्छन्नमार्गतया—पर्वतच्छन्नपथत्वेन (३या तत्पु०। हेतौ ३या०)। वनान्तरे—वनमध्ये (औपश्लेषिके ७मी०), दिक्षु मोहं दिङ्मोहं—दिग्भ्रमम् (७मी तत्पु०)।

(ञ) प्राणान्—निजप्राणान्, न अपेक्षते—अवश्यरक्षणीयत्वेन न गणयति यः सः प्राणानपेक्षी—निजप्राणान् तुच्छं मन्यमान इत्यर्थः (विश०। न+अप+ईक्ष+ग्रहादित्वात् णिनिः), पादाभ्याम् अतति—गच्छति इति पदातिः,—पादचारी। वात इव शीघ्रगः अश्वः वाताश्वः,—वायुवत् द्रुतगामिघोटकः (शाकपा०), तस्य पृष्ठे गच्छति इति तं वाताश्वपृष्ठगं—वायुवद्वेगसम्पन्नघोटकारोहिणम् ["अन्यत्रापि दृश्यते इति वक्तव्यम्" (वा०) इति गमेर्डः]।

(ट) अनुयान्तम्—अनुसरन्तम् (अनु+या+शतृ, तम्)। भद्र!—साधो! ("हस्तिभेदे शुभे भद्रः स्याद्भद्रं साधुगर्भयोः" इति शाश्वतः), कच्चित्—प्रश्ने (अव्य०। "कच्चित् कामप्रवेदने। प्रश्ने हर्षे मङ्गले च" इति मेदिनी), आगतम्—आगमनमनतिक्रम्य यथाऽऽगतं—येन मार्गेण अस्मिन् वने आगतं तमित्यर्थः (यथार्थेऽव्ययी०)।

(ठ) परं—किन्तु। विश्राम्यतु—विरमतु, पथश्रमम् अपनयतु इत्यर्थः [वि+श्रम+लोट्-तुप्, "शमामष्टानां दीर्घः श्यनि" (७।३।७४ पा०) इति दीर्घः]। दिवः,—आकाशस्य, आकाशरूपायाः इति यावत्, वध्वाः,—नार्याः, मेखलायाः,—रशनायाः, "चन्द्रहार" इति प्रसिद्धस्य कटिभूषणविशेषस्य इत्यर्थः, मध्यमणिः,—मध्यभागावस्थितोज्ज्वलरत्नमित्यर्थः (विश०। उप० शाकपा०), स्फुरन्ति—दीप्यमानानि, रश्मिजालानि—किरणसमूहाः यस्य तादृशः स्फुरद्रश्मिजालः,—दीप-

(ड) सनिर्बन्धं समभाषत,—"तर्हि क्वापीह भवता पानीयं दृश्यताम्"। स च कार्पटिकः (ढ) "तथा" इत्युक्त्वा तुङ्गं तरु-माकृह्य समन्तात् पश्यन् नदीमेकां दृष्ट्वा अवरुह्य, तं नृपं तत्र निनाय। नीत्वा च नदीयं (ण) वाहं विपर्य्याणीकृतं कृत्वा अम्बूनि शष्पाणि च दत्त्वा विगतश्रममकरोत्।

ततश्च स कृतस्नानाय राज्ञे वसनाञ्चलात् (त) प्रोन्मुच्य आमलकानि फलानि प्रक्षाल्य तस्मै हृद्यानि उपानयत्।

---

मानमिरयमसूयः (विश०। बहुव्री०), अब्जिनी—पद्मिनी, तस्याः नायकः,—पतिः अब्जिनीनायकः,—कमलिनीपतिः, सूर्य्य इत्यर्थः, अतितराम्—अत्यन्तातिशयेन [अव्य०। अतिशब्दात् स्वार्थिकात्तरप् "तरप्तमपौ घः" (१।१।२२ पा०) इत्यस्य टीकायां तत्त्वबोधिनीकारेण "अतिशेशातिशायनिकप्रकरणे 'ताटी घः' 'पितौ घः' इति वा वक्तव्ये प्रकरणान्तरे गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति" इत्याद्युक्तम्। ततः "किमेत्तिङव्यय—" (५।४।११ पा०) इति आमुः], दीप्यते —पुनः पुनर्दीप्यते, अविच्छेदेन तपतीत्यर्थः (दीप+यङ्+लट्-ते)।

(ड) निर्बन्धः,—आग्रहः, तेन सह विद्यमानं सनिर्बन्धं—साग्रहं, राज्ञो विश्रामार्थं साग्रहमनुरुध्येत्यर्थः (विश०। बहुव्री०)। तर्हि—तदा।

(ढ) तथा—यदाज्ञापयति भवान्, तदेवास्तु इत्यर्थः। तुङ्गम्—उन्नतम् (विश०। "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः)। समन्तात्—इतस्ततः।

(ण) वाहम्—अश्वं ("वाहो भुजे पुमान् मानभेदाश्ववृषवायुषु" इति मेदिनी), अविपर्य्याणं विपर्य्याणं कृतं विपर्य्याणीकृतं—पल्ययनरहितीकृतं, वस्त्रादिकमुन्मोचितमित्यर्थः [विपर्य्याण+"कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" (५।४।५० पा०) इति अभूततद्भावे च्विः "अस्य च्वौ" (७।४।३२ पा०) इति अवर्णस्य ईकारः]। शष्पाणि—बालतृणानि, कोमलतृणानीत्यर्थः ("शष्पं बाल-तृणम्" इत्यमरः)।

(त) प्रोन्मुच्य—बहिष्कृत्य इत्यर्थः (प्र+उत्+मुच+ल्यप्)। प्रक्षाल्य—धौतीकृत्य (प्र+क्षल+स्वार्थे णिच्+ल्यप्)। हृदयस्य प्रियाणि हृद्यानि—हृत्-प्रियाणि [विश०। हृदय+"हृदयस्य प्रियः" (४।४।९५ पा०) इति यत् "हृदयस्य हृल्लेख—" (६।३।५० पा०) इति हृदादेशः। "हृद्यं वक्षसीरे च प्रिये

"एतानि कुतः प्राप्नासि?" इति पृच्छन्तं भूपतिं स कृताञ्जलि-र्व्यजिज्ञपत्,—"देव! (थ) एतद्वृत्तिरहं नित्यं व्यतीतदश-वत्सरः देवमाराधयन् अनेकान्तमुनिव्रतं चरामि"। इति श्रुत्वा राजा,—"सत्त्वशील! त्वं (द) सत्यनामा, किमुच्यते?" इति अभिधाय कृपाक्रान्तः लज्जितश्चाचिन्तयत्,—"धिक् नृपान्, ये भृत्येषु क्लिष्टमक्लिष्टं न जानन्ति, धिक् तत्परिवारान्, ये प्रभुं तत्तत् न ज्ञापयन्ति" इति सञ्चिन्त्य स राजा द्वे

---

ष्वपि च" इति विश्वः), उपानयत्—प्राददादित्यर्थः (उप+आ+नी+लङ्-द)।

(थ) एतानि—आमलकफलमात्राण्येवेत्यर्थः, वृत्तिः,—जीविका, जीवनरक्षणो-पाय इत्यर्थः ("आजीवो जीविका वार्त्ता वृत्तिर्वर्त्तनजीवने" इत्यमरः), यस्य तादृशः एतद्वृत्तिः,—धनाभावात् एतन्मात्रभोजीत्यर्थः (विशे०। बहुव्री०)। नित्यं—प्रतिदिनं, न तु कदाचिदिति भावः; व्यतीताः,—व्यपगताः, दश वत्सराः यस्य तादृशः व्यतीतदशवत्सरः,—अतिवाहितद्विपञ्चसंवत्सरः, भवत्परिचर्य्यायामिति भावः (विशे०। बहुव्री०), व्यतीतदशवत्सरोऽहं नित्यमेतद्वृत्तिः सन् इत्यन्वयः; देवं—राजानं भवन्तमित्यर्थः। न एकान्तः,—दृढः अनेकान्तः,—अनिश्चितः, मुनीनां व्रतं—नियमः, फलमूलभक्षणरूप इत्यर्थः, मुनिव्रतम्, अनेकान्तञ्च तत् मुनिव्रतञ्चेति अनेकान्त-मुनिव्रतम्—अस्थायितापसाचारमित्यर्थः (कर्म्मधा०), भोज्याभावात् तापसोचितं भोजनमहं करोमि, भोज्यसद्भावे तु ईदृशमाचारं त्यज्यामि इत्यतोऽस्य अनेकान्तत्वं ज्ञातव्यम्। चरामि—आचरामीत्यर्थः (चर+लट्-मिप्)।

(द) सत्यं—यथार्थं, सत्त्वशील इति अन्वर्थमित्यर्थः, नाम यस्य तादृशः सत्य-नामा—अन्वर्थनामा, सत्यमेव त्वं सत्त्वगुणाधिकः उदारचरितः, अन्यथा मदुपेक्षणात् तादृशं क्लेशं सम्भुज्यापि तत्सर्व्वमविगणय्य कथं मदुपकारपरोऽसि? इति भावः; किमुच्यते? इतोऽधिकं मया इति शेषः। भृत्येषु (निर्द्धारणे ७मी०), क्लिष्टं—क्लेशमापन्नं, दारिद्र्यग्रस्तमित्यर्थः, अक्लिष्टं—क्लेशमनापन्नं, धनिनमिति यावत्। तान्—तथाविधान्, परिवारान्—परिजनान् तत्परिवारान्—राजकान् पार्श्वचरान् [कर्म्मधा०। "उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" ॥ (वा०) इति धिक्शब्दयोगात् २या०। एवं "धिक् नृपान्"

आमलके कार्पटिकहस्तात् कथञ्चिदनुबन्धतः प्रतिजग्राह; विशश्राम च ते भुक्त्वा अम्बु च निपीय क्षणं तेन जग्धामलकपीतजलेन कार्पटिकेन सह। ततः तेन कार्पटिकेन सज्जीकृतं वाहमारुह्य, (ध) तस्मिन्नग्रेसरे गच्छति मार्गदर्शिनि, राजाज्ञया हयस्य पश्चाद्भागासनस्थिते, स राजा पथि सम्प्राप्तसैनिकः स्वां पुरीं प्रायात्। तत्रागत्य तस्य कार्पटिकस्य भक्तिं (न) प्रख्याप्य, वसुभिः कार्पटिकं पूरयित्वाऽपि निष्कृतिं नामन्यत। ततः सः (प) कृतार्थः चण्डसिंहस्य भूपतेः पार्श्वचरः त्यक्तकार्पटिकाचारः सत्त्वशीलस्तस्थौ।

एकदा राजा तं सत्त्वशीलं सिंहलेश्वरसुतामात्मार्थं याचितुं

---

इत्यत्रापि ज्ञेयम्]। वृत्तम्—भृत्येषु कः क्लिष्टः को वा अक्लिष्टः इत्यादिकमित्यर्थः। कथञ्चित्—कृच्छ्रात्, बहुमाननसङ्कोचादित्यर्थः, अनुबन्धतः,—प्रकृतानुवर्त्तनात्, फलभक्षणार्थं तस्य साग्रहमनुरोधरूपं प्रकृतविषयमनुवर्त्य इत्यर्थः (ल्यब्लोपे ५मी०। "दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादिविनश्वरे। मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्त्तने" इत्यमरः), प्रतिजग्राह—प्रत्याददौ (प्रति+ग्रह+लिट्-णल्); विशश्राम—विश्रामं चकार (वि+श्रम+लिट्-णल्), ते—द्वे आमलकफले इत्यर्थः। जग्ध—भुक्तम् [अद+क्तः "अदो जग्धिर्ल्यप्ति किति" (२।४।३६ पा०) इति जग्धादेशः], आमलकं, पीतञ्च जलं येन तेन जग्धाऽऽमलकपीतजलेन—भुक्तामलकेन पीतजलेन च इत्यर्थः (विशे०। बहुव्री०)।

(ध) तस्मिन्—कार्पटिके, अग्रे सरति—गच्छति इति तस्मिन् अग्रेसरे—पुरोयायिनि [विशे०। अग्रे+सृ+"पुरोऽग्रतोऽग्रेषु सर्त्तेः" (३।२।१८ पा०) इति टः]।

(न) प्रख्याप्य—विख्याप्य (प्र+ख्या+णिच्+ल्यप्), वसुभिः,—धनैः (करणे ३या०। "रिक्थमृक्थं धनं वसु" इत्यमरः)। निष्कृतिं—निर्मुक्तिं, तत्कृतोपकार-ऋणादिति भावः, अमन्यत—अबुध्यत (मन+लङ्-त)।

(प) कृतः,—सम्पन्नः, अर्थः,—प्रयोजनं यस्य सः कृतार्थः,—अवसितप्रयोजनः, पूर्णमनोरथः इत्यर्थः (विशे०। बहुव्री०)। त्यक्तः,—परित्यक्तः, कार्पटिकाचारः,—छिन्नमलिनवस्त्रपरिधानरूपव्यवहारः येन तादृशः त्यक्तकार्पटिकाचारः,—छिन्नमलिनवसनखण्डपरिधानरूपं दारिद्र्याचरणं विहायेत्यर्थः (विशे०। बहुव्री०)।

सिंहलद्वीपं (फ) प्रैषयत्। ततश्च स गच्छन् अभीष्टदेवता-मर्चयित्वा राजादिष्टैः द्विजैः सह पोतमारुरोह। तस्मिंश्च पोते (ब) मध्यभागमशङ्कितं गते, सहसा तस्मात् जलधेः अभ्रंलिहाग्रः सुमहान् जाम्बूनदविनिर्मितः विचित्रवर्ण-विचलद्वैजयन्तीविभूषितः गजः विस्मयं जनयन् उत्तस्थौ। तस्मिंश्च काले (भ) समुन्नद्धघनावली सहसा अम्भः वर्षितु-मारेभे, तीव्रो मारुतश्च ववौ, द्विपः वर्षवातैर्बलादाकृष्य आधारणैरिव तस्मिन् पोतध्वजस्तम्भे आसज्यत; तावच्च तस्मिन्

---

(फ) प्रैषयत्—प्रेरयत् (प्र+इष+णिच्+लङ्-द्)। राज्ञा आदिष्टैः,—आज्ञप्तैः राज्ञाऽऽदिष्टैः,—सत्त्वशीलेन सह गन्तुं प्राप्तराजादेशैः (विश०। ३या तत्पु०)। पोतं—जलयानम्।

(ब) मध्यभागं, समुद्रस्येति शेषः। अशङ्कितं—निर्भयं, निर्विघ्नमिति भावः (क्रिया विश०)। जलधेः,—समुद्रात्, अभ्रम्—आकाशं, लेढि—परिचुम्बति इति अभ्रंलिहः,—गगनस्पृक् [अभ्र+लिह+"वहाभ्रे लिहः" (३।२।३२ पा०) इति खश् "अरुर्द्विषदजन्तस्य मुम्" (६।३।६७ पा०) इति मुमागमः] तादृशम् अग्रम्—उपरिदेशो यस्य सः अभ्रंलिहाग्रः,—गगनचुम्बिशिराः (विश०। बहुव्री०)। जाम्बूनदेन—सुवर्णेन ("स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्। रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमरः), विनिर्मितः,—विरचितः जाम्बूनदविनिर्मितः,—स्वर्णमयः (विश०। ३या तत्पु०), विचित्रवर्णाभिः,—नानावर्णाभिः, विचलन्तीभिः,—चञ्चलाभिः, यद्वा,—विचित्रवर्णेन विचलन्तीभिः,—विलसन्तीभिः, वैजयन्तीभिः,—पताकाभिः, विभूषितः,—शोभितः विचित्रवर्णविचलद्वैजयन्तीविभूषितः,—विविधवर्णविरञ्जितचञ्चलपताकासुशोभितः (विश०। ३या तत्पु०)।

(भ) समुन्नद्धाना—समुत्कटाना, भीषणानामित्यर्थः, घनानां—मेघानाम्, आवली—श्रेणी समुन्नद्धघनाऽऽवली—उत्कटमेघश्रेणी। आरेभे—प्रचक्रमे (आ+रभ+लिट्-ए)। ववौ—प्रवहति स्म [वा+लिट्-णल् "आत औ णलः" ७।१।३४ पा०) इति औः]। द्वाभ्यां—मुखशुण्डाभ्यां, पिबति इति द्विपः,—हस्ती; [द्वि+पा+"सुपि स्थः" (३।२।४ पा०) इति कः], वर्षः,—वर्षणं, तेन सह वाताः,—वायवः तैः वर्षवातैः,—वृष्ट्या सह प्रवहद्वायुभिः (कर्तृ), बलात्—बलमाश्रित्य (ल्यब्लोपे

वीचिविप्लुते वारिधौ स गजस्तेन वहनेन समं मज्जितुं प्रावर्त्तत। ततस्ते द्विजाः तत्रस्थाश्चण्डसेनं स्वभूपतिमुद्दिश्य भयार्त्ताः (म) अब्रह्मण्यमुदघोषयन्। तदाकर्ण्य स सत्त्वशीलः स्वामिभक्त्यतिशयात् (य) असहिष्णुः निस्त्रिंशहस्तः बद्धोत्तरीयकः अनुध्वजमात्मानं निरपेक्षः वारणाशङ्की उदधेः प्रतिविधित्सया प्राक्षिपत्।"

पूर्वो०)। आधोरणैः,—हस्तिपकैः, हस्तिपालकैरित्यर्थः (उपमा०। "आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः), आधोरणैरिव वर्षवातैः बलादाकृष्य इत्यन्वयः, आधोरणा यथा बलात् गजमाकृष्य स्थानान्तरं नयन्ति, वर्षवाता अपि तथा तमाकृष्य ध्वजस्तम्भे आसञ्जयन् इत्यर्थः। पोतस्य यः ध्वजस्तम्भः,—पताकाविन्यासार्थं दण्डविशेषः तस्मिन् पोतध्वजस्तम्भे—अर्णवपोतस्यपताकादण्डे, आसज्यत—समलग्यत, संसक्तोऽभवत इत्यर्थः (आ+सन्ज+कर्मणि लङ्-त)। वीचिभिः,—तरङ्गैः, विप्लुते—विक्षुब्धे, चञ्चले इत्यर्थः, वीचिविप्लुते—उत्तरङ्गित (विण०। ३या तत्पु०), वारिधौ—समुद्रे। उह्यते अनेन इति वहनं—यानं, पोत इति यावत् (वह+ल्युट्), तेन वहनेन—जलयानेन (सहार्थकसमशब्दयोगात् ३या०), समं—सह ("साकं सार्द्धं समं सह" इत्यमरः), मज्जितुं—निमग्नीभवितुं (मस्ज+तुमुन्), प्रावर्त्तत—प्रारभत (प्र+वृत+लङ्-त)।

(म) अब्रह्मण्यम्—अवध्य, भो राजन्! यथा वयं न वध्या भवामः, तथा कुरु इत्यर्थः, मृत्युकवलात् अस्मान् रक्ष रक्ष इति भावः ("अब्रह्मण्यमवध्योक्तौ" इत्यमरः), उदघोषयन्—उच्चैरव्यापयन् (उत्+घुष+णिच्+लङ्-अन्)।

(य) असहिष्णुः,—असहनशीलः, तेषामब्रह्मण्यघोषणमिति शेषः (विण०। न+सह+इष्णुच्), निस्त्रिंशः,—खड्गः ("खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः" इत्यमरः), हस्ते यस्य सः निस्त्रिंशहस्तः,—खड्गपाणिः (विण०। बहुव्री०), बद्धोत्तरीयकः,—संयमितोत्तरासङ्गः, ध्वजं—पताका, गजेन सह मज्जमानं पोतध्वजमिति भावः, अनु—लक्ष्यीकृत्य अनुध्वज—पताका लक्ष्यीकृत्य (अव्ययी०)। निरपेक्षः,—अस्याचित् साहाय्यमप्याशामकुर्वन्नेवेत्यर्थः, एकाकी एव इति यावत्, स्वजीवनानपेक्ष इत्यर्थो वा, वारणं—गजम्, आशङ्कते—वितर्कयति इति वारणाशङ्की—गजोत्प्रेक्षी (शङ्कते इत्यस्य ग्रहादित्वात् णिनिः), उदधेः,—समुद्रस्य, उदधेः

अथ (र) तस्मिन् मग्ने, वातोर्म्मिभिर्दूराक्षिप्तं तत् वहनमभज्यत, तत्स्थाश्च सर्वे यादसां मुखे निपेतुः। स च सत्त्वशीलोऽम्बुधौ मग्नो यावत् निरीक्षते स्म, तावत्तत्र (ल) दिव्यं पुरं ददर्श, न वारिधिम्। तत्र (व) मणिमयस्तम्भभास्वरे हेममन्दिरे सद्भिः रत्नैर्बद्धसोपानवापीके उद्यानशालिनि नानामणिशिलाभित्तिरत्नचित्रोच्छ्रितध्वजं मेरुप्रोन्नतं कात्या-

वारणागतौ इत्यन्वयः; तं सामुद्रिकहस्तिनं विविध्येत्यर्थः, प्रतिविधातुमिच्छया प्रतिविधित्सया—प्रतिचिकीर्षया, गजकर्तृकपोतनिमज्जनभयनिवारणेच्छया इत्यर्थः, गजजिघांसया इति भावः [ प्रति+वि+धा+सन्+"सनि मीमाघु—"( ७।४।५४ पा० ) इति अच इस् अभ्यासलोपश्च, "सः स्यार्द्धधातुके" ( ७।४।४९ पा० ) इति सस्य तः "अ प्रत्ययात्" ( ३।३।१०२ पा० ) इति अ, स्त्रियां टाप् तथा ]।

( र ) तस्मिन्—सत्त्वशीले। वातेन—वातविक्षोभेण, जनिताभिः ऊर्म्मिभिः,—तरङ्गैः, वातेन सहिताभिः ऊर्म्मिभिरिति वा वातोर्म्मिभिः,—वातविक्षुब्धतरङ्गैः, दूराक्षिप्तं—बहुदूरमाकृष्टम्। अभज्यत—अखण्ड्यत ( भञ्ज+कर्म्मकर्त्तरि लङ्-त )। यादसां—जलजन्तूनां, नक्रमकरादीनामिति यावत् ( "यादांसि जलजन्तवः" इत्यमरः )।

( ल ) दिव्यं—रमणीयम्। न वारिधिं, ददर्शेति पूर्व्वेणान्वयः।

( व ) मणिमयैः,—रत्नात्मकैः, स्तम्भैः,—स्थूणाभिः, भास्वरे—द्योतमाने मणिमयस्तम्भभास्वरे—रत्नानिर्म्मितस्तम्भशोभिते ( विश०। ३या तत्पु० )। हेममन्दिरे—स्वर्णमयगृहसन्निधौ ( उपश्लेषे ७मी० ), स्थितामिति शेषः, कात्यायनीमन्दिरमित्युत्तरेण सम्बन्धः; सद्भिः,—उत्तमैः, रत्नैः बद्ध—घटितं, सोपानम—आरोहणं यस्याः तादृशी वापी—दीर्घिका, जलाशयविशेष इति यावत्, यत्र तादृशं बद्धसोपानवापीके—रत्नखचितसोपानोपेतदीर्घिकाशालिनि [ विश०। बहुव्री०। "नद्यृतश्च" (५।४।१५३ पा० ) इति कप् ]। नानाः,—विविधाः, मणिशिलाः,—रत्नशिलाः, तन्मयी भित्तिः,—कुड्यं, विविधमणिमयकुड्यमित्यर्थः, तस्यां यानि रत्नानि—भित्तिगात्रस्था ये मणयः, तैः चित्रः,—शबलः, उच्छ्रितः,—समुन्नतश्च, ध्वजः,—पताका यत्र तादृशं नानामणिशिलाभित्तिरत्नचित्रोच्छ्रितध्वजं—विविधरत्नमयभित्तिगात्रनिबद्धभासुरमणीनां प्रभया शबलितोन्नतपताकासंयुक्तामित्यर्थः ( विश०। बहुव्री० ), मेरुवत्—सुमेरुपर्वत इव,

यत्नीमन्दिरं प्रविश्य, तां तत्रस्थां देवीं प्रणम्य स्तुत्वा अभ्यर्च्य च, तदग्रतः "किमेतदिन्द्रजालम् ?" इति सविस्मयमुपाविशत्। तावच्च सहसा काऽपि (घ) दिव्या इन्दीवराक्षी चन्द्रवदना कुसुमस्मिता मृणालमृदुकलेवरा स्त्रीसहस्रपरिवारा सहसा कवाटमुद्घाट्य देवीगर्भगृहं सत्त्वशीलस्य च हृदयं समं विवेश। सा च तत्र देवीमभ्यर्च्य तस्मात् गर्भगृहात् निरगात्, न पुनः सत्त्वशीलस्य हृदयात्; प्राविशच्च तत्रैव प्रभामण्डलकान्तारे। सत्त्वशीलोऽपि तामनुजगाम। ददर्श च अन्यत् उत्तमं सर्वासां

---

शोन्नतं—समुच्छ्रितं मेरुप्रोन्नतं—सुमेरुपर्वतवदत्युन्नतं (विश०)। तां—कात्यायनीम्। अभ्यर्च्य—पूजयित्वा (अभि+अर्च+णिच्+ल्यप्)। इन्द्रेण—कौशलादैश्वर्येण, जालं—यथास्थितवस्तुदर्शनाच्छन्नत्वसाधनात् द्रष्टॄणां आवरणम् इन्द्रजालम्?—मन्त्रौषधादिना अन्यथास्थितस्य वस्तुनः अन्यथात्वेन दर्शनसाधनं कुहकविशेषः?। उपाविशत्—आस्त (उप+विश+लङ्-द)।

(घ) दिव्या—अलौकिकसौन्दर्यशालिनीत्यर्थः, इन्दीवरे—नीलोत्पले इव, अक्षिणी—चक्षुषी यस्याः सा इन्दीवराक्षी—नीलोत्पललोचना [विश०। बहुव्री०। इन्दीवर+अक्षिन्+"बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५।४।११३ पा०) इति षच्, षित्वात् ङीष्]। कुसुमवत्—पुष्पमिव, रमणीयमिति भावः, स्मितम्—ईषद्धास्यं यस्याः सा कुसुमस्मिता—ईषद्धास्यसुन्दरीत्यर्थः (विश०। बहुव्री०), मृणालवत् मृदु—सुकुमारं, कलेवरं—शरीरं यस्याः सा मृणालमृदुकलेवरा—सुकोमलाङ्गी (विश०। बहुव्री०), स्त्रीणां—नारीणां, सहस्रं—दशशतसङ्ख्यकाः, बहवः वा, दशशतसङ्ख्यकाः स्त्रियः बह्व्यः स्त्रियो वा इत्यर्थः, परिवाराः,—परिजनाः, सहचारिण्यः इति यावत्, यस्याः सा स्त्रीसहस्रपरिवारा—बहुस्त्रीपरिवृता (विश०। बहुव्री०)। उद्घाट्य—उन्मोच्य (उत+घट+णिच्+ल्यप्), देव्याः,—कात्यायन्याः, गर्भगृहं—गृहाभ्यन्तरं देवीगर्भगृहं—देवीगृहमध्यं (६ष्ठी तत्पु०)। समं—युगपत्, एकदैवेत्यर्थः, यदैव सा देवीगृहं प्राविशत्, तदैव सत्त्वशीलस्यापि हृदयाभ्यन्तरं प्राविशत् इति स्फुटार्थः; सत्त्वशीलस्तस्यामनुरागवान् सञ्जातः इति भावः। तत्रैव—तस्मिन्नुद्याने एव, प्रभाणां—ज्योतिषां, मण्डलं—समूहः यत्र तादृशः कान्तारः,—विलं, रन्ध्रमिति यावत् ("कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि" इति

(ष) भोगसम्पदां सङ्केतोद्यानमिव भवनम्। (स) तत्रान्तर्मणि-पर्य्यङ्कनिषण्णां तां विलोक्य समुपेत्य तत्पार्श्वे समुपाविशत्, आसीच्च तन्मुखासक्तलोचनो लिखित इव।

इत्थं (ह) सोत्कण्ठपुलकैरङ्गैर्वदनाऽऽलोकनोत्सुकं तं स्मराऽऽविष्टं दृष्ट्वा काऽपि तदीया चेटी तदिङ्गितज्ञा तमब्रवीत्,—"भद्र! अतिथिस्त्वमिह प्राप्तः, तदस्मत्स्वामिन्या कृतम् आतिथ्यं भजस्व, उत्तिष्ठ, स्नाहि, भुङ्क्ष्व"। ततश्च स आशां कथ-

मेदिनी), तस्मिन् प्रभामण्डलकान्तारे—ज्योतिर्मण्डलोद्भासितविवरे इत्यर्थः (आकपा०)।

(ष) भोगाय—विषयसुखसम्भोगाय, सम्पदः,—ऐश्वर्य्याणि तासां भोगसम्पदां—सकृचन्दनवनितादुपभोगसाधनविभवानामित्यर्थः (४र्थी तत्पु०), यद्वा,—भोगानां—भोग्यवस्तूनां, सम्पदः,—सौष्ठवानि तासां भोगसम्पदां—प्रचुरभोग्यवस्तूनामित्यर्थः, सङ्केतार्थम्—अभिसारार्थम्, उद्यानम्—उपवनं तदिव सङ्केतोद्यानमिव—रति-भोगार्थमुद्यानवाटिकामिवेत्यर्थः, सङ्केतोद्याने यथा सर्वविधं भोगसाधनं प्रभूतमानेन तिष्ठति, एतद्भवनेऽपि तत्सर्वं तथैव आतिष्ठत् इति निष्कर्षः।

(स) तत्रान्तः,—तद्गृहाभ्यन्तरे, मणिपर्य्यङ्के—रत्नमयखट्वायां, निषण्णाम्—उपविष्टां (विश०। ७मी तत्पु०)। तस्याः,—कामिन्याः, मुखे आसक्ते—आकृष्टे, निबद्धे वा, लोचने यस्य तथाभूतः तन्मुखासक्तलोचनः,—तन्मुखनिबद्धदृष्टिः (विश०। बहुव्री०), लिखित इव—चित्रार्पित इव।

(ह) उत्कण्ठा—उत्कलिका, प्रियाद्यभिलाषजनितौत्सुक्यमित्यर्थः, पुलकः,—रोमाञ्चः ("क्रिमिप्रभेदे रोमाञ्चे पुलकः प्रस्तरे विदुः" इति शाश्वतः), सात्त्विक-भावविशेष इति यावत्, ताभ्यां सह वर्त्तमानैः सोत्कण्ठपुलकैः,—कामावेशजनित-भावविशेषेण रोमाञ्चेन च युक्तैः (विश०। ३या तत्पु०), अङ्गैः (करणे इत्थम्भूतलक्षणे वा ३या०)। चेटी—परिचारिका, तस्याः,—सुन्दर्याः, इङ्गितम्—अभिप्रायानुरूप-स्वरादिचेष्टाविशेषं, जानातीति तादृशी तदिङ्गितज्ञा—प्रभोरभिप्रायवित् [विश०। तदिङ्गित+ज्ञा+"आतोऽनुपसर्गे कः" (३।२।३पा०) इति कः, "आतो लोपः—" (६।४।६४ पा०) इति आकारलोपः, स्त्रियां टाप्]। भद्र!—साधो! ("भद्रः शिवे खञ्जरीटे वृषभे च कदम्बके।......। "त्रिषु श्रेष्ठे च साधौ स्यात् नपुंसि कल्याणके"॥

श्चित् (क) तदुक्तितः सम्प्राप्य तया दर्शितामिकामुद्यानवापी-मगात्, उदतिष्ठच्च तस्यां निमग्नस्तत्क्षणं ताम्रलिप्त्यां चण्ड-सिंहस्य नृपतेर्वापीमध्यात्। तत्राकस्मात् प्राप्तमात्मानं वीक्ष्य सोऽचिन्तयत्,—"अहो! किमेतत्? क्व तदुद्यानं दिव्यम्? क्व च (ख) तत्र अमृतसारमयं तस्या दर्शनम्? क्व चानन्तर-मेव तद्विश्लेषमहाविषमिदम्? स्वप्नोऽयं न, विनिद्रोऽहं, ननं तया चेट्या अहं विप्रलब्धः विमूढोऽस्मि" इति चिन्तयन् तां कन्यां विना सोन्माद इव तस्मिन्नुद्याने भ्रमन् कामार्त्तो विल-लाप। तदवस्थञ्च (ग) पिशङ्गैः पुष्परेणुभिर्वातोद्धूतैर्वियोगा-नलैरिव परीताङ्गं तं दृष्ट्वा उद्यानपालः चण्डसिंहं महीपतिं

इति मेदिनी)। प्राप्तः,—आगतः। भजस्व—गृहाण इत्यर्थः। स्नाहि—स्नानं कुरु (स्ना+लोट् हि), भुङ्क्ष्व—अद्धि (भुज+लोट्-स्व)।

(क) तस्याः,—चेट्याः, उक्तितः,—वचनात् तदुक्तितः,—चेटीवचनात्, चेट्याः वाक्यं श्रुत्वा इत्यर्थः (ल्यब्लोपे पञ्चमी०)। उद्याने—उपवने, स्थिता वापी—दीर्घिका ताम् उद्यानवापीम्—उपवनस्थां पुष्करिणीं (शाकपा०)। "उदतिष्ठत्" इत्यस्य "वापीमध्यात्" इत्युत्तरग्रन्थेनान्वयः।

(ख) तत्र—उद्याने, अमृतसारमयं—सुधानिःष्यन्दरूपम्। तस्याः,—सुन्दर्याः, विश्लेषः,—वियोगरूपं, महाविष—तीक्ष्णविषं तद्विश्लेषमहाविषं—प्राणघातितीक्ष्ण-विषरूपं तद्वियोगदुःखमित्यर्थः, तीव्रविषं यथा प्राणान् बाधते, तद्विश्लेषदुःखमपि मां तथा बाधते इति सरलार्थः (रूपक-कर्म्मधा०)। विप्रलब्धः,—वञ्चितः, तद्दर्शनसुखा-दिति भावः (वि+प्र+लभ्+क्तः), विमूढः,—जड़प्राय इत्यर्थः। कन्यां विना (विनाशब्दयोगात् २या०)।

(ग) पिशङ्गैः,—पिङ्गलवर्णैः (विश०। "कड़ारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ" इत्यमरः)। वातेन—वायुना, उद्धूतैः,—उत्क्षिप्तैः वातोद्धूतैः,—अनिलेरितैः (विश०। ३या तत्पु०), वियोगः,—कान्ताविरहः, अनलः,—अग्निरिव, सन्तापकत्वादिति भावः, तैः वियोगानलैः,—विच्छेदवह्निभिः, अग्नेः पिङ्गलवर्णत्वात् पिङ्गलवर्णपुष्परेणुषु वह्नित्वारोपः; परीतानि—व्याप्तानि, अङ्गानि—अवयवा यस्य तं परीताङ्गं—वेष्टितावयवं (विश०। बहुव्री०)।

गत्वा व्यजिज्ञपत्। स च तदाकर्ण्य (घ) उद्भ्रान्तः स्वयमेत्य तं ददर्श, पप्रच्छ च सान्त्वयन्,—"किमिदं ब्रूहि सखे! त्वं क्व प्रस्थितः? क्व च प्राप्तः? क्व आस्थाः? क्व च पतितः?" इति। तदाकर्ण्य स तस्मै सर्वं वृत्तान्तम् (ङ) अशंसत्। राजा व्यचिन्तयत्,—"हन्त! वीरोऽयं (च) मदर्थं कामिनैवं विडम्बितः, तदिदानीमस्याऽऽनृण्यं लब्धुमयमवसरो मया प्राप्तः" इति चिन्तयित्वा स राजा तं जगाद,—"सखे! मुधा शोकं मुञ्च, अहं त्वां तेनैव मार्गेण नीत्वा तामसुरकन्यकां प्रापयामि" इति उक्त्वा स्नानादिना तं समाश्वासयत्।

अथान्येद्युः स मन्त्रिविन्यस्तराज्यभारः तेन समं पोताऽऽरूढः तद्दर्शितेन अम्बुधिमार्गेण गच्छन् तन्मध्यभागे प्राग्वत् समुत्थितं सपताकं गजं ददर्श। तदवलोक्य सत्त्वशीलो राजानमभ्यधात्,—"देव! सोऽयं दिव्यप्रभावो महागजः समुत्थितः, मयि (छ) अत्र मग्ने देवेनानुध्वजं मज्जनीयम्" इत्युक्त्वा अस्य निमज्जतो ध्वजस्य निकटं प्राप्य स सत्त्वशीलः

---

(घ) उद्भ्रान्तः,—उद्विग्नः (विशे०। उत्+भ्रम+क्तः "अनुनासिकस्य क्विझलोः क्ङिति" (६।४।१५ पा०) इति उपधादीर्घः]। सान्त्वयन्—आश्वासयन् (सान्त्व+णिच्+शतृ)। प्राप्तः, इदमवस्थान्तरमिति शेषः। आस्थाः,—अतिष्ठः (आस+लङ्-थास्)।

(ङ) अशंसत्—अकथयत (शंस+लङ्-द)।

(च) मदर्थे—मन्निमित्त, मम प्रयोजनसाधनाय इत्यर्थः, प्रयोजनन्तु सिंहले श्वरसकाशे तद्दुहितृपाणिप्रार्थनरूपम्। विडम्बितः,—तिरस्कृतः, दुरवस्थां गमित इति यावत्। न ऋणः अनृणः (नञ् तत्पु०), तस्य भावः आनृण्यम्—ऋणाभावता (भावे ष्यञ्)। मुधा—वृथा (अव्य०। "व्यर्थके तु वृथा मुधा" इत्यमरः)। समाश्वासयत्—स्वस्थितमकारयत् (सम्+आ+श्वस+णिच्+लङ्-द)।

(छ) अत्र—गजसन्निधौ इत्यर्थः, मग्ने (भावे ७मी०)। अनुध्वजं—पीतध्वजस्य समीपस्थितध्वजस्य वा पश्चात् (पश्चादर्थे अव्ययी०), मज्जनीयं (मस्ज+भावे

पूर्वमात्मानं तत्र न्यक्षिपत्; ततो राजाऽपि तमनु आत्मानं निचिक्षेप। अन्तर्मग्नौ च तौ तत्र तत् दिव्यं पुरमवापतुः। तच्च दृष्ट्वा राजा सविस्मयो देवीं तां पार्वतीं प्रणम्य सत्त्वशीलेन सममुपाविशत्। तावच्च तत्र सा कन्या सखीजनसमन्विता रूपिणी प्रभेव ततः प्रभामण्डलकान्तारात् निरगात्।

"इयं सा सुमुखी" इति सत्त्वशीले वदति, स राजा तस्यामस्यानुरागो युक्त इत्यमन्यत। साऽपि तं राजानं (ज) दिव्यशारीरलक्षणं वीक्ष्याचिन्तयत्,—"कोऽयमपूर्वः पुरुषातिशयः?" विवेश च अम्बिकापूजार्थं तन्मन्दिरम्। सोऽपि नृपः तं सत्त्वशीलमादाय अवज्ञां प्रदर्शयन् उद्यानमाजगाम। क्षणेन च सा कन्यका कृतदेवीपूजा (झ) तस्या देव्याः सत्पतिलाभं याचित्वा तद्गृहाभ्यन्तरात् निर्गत्य सखीमेकां प्राब्रवीत्,—"सखि! क्वासौ वीक्ष्यतां, यो मया इह दृष्टः, स महात्मा क्व तिष्ठति? युष्माभिर्विचित्य 'आतिथ्यमेत्य गृह्यतां, प्रसादो मे त्वया क्रियताम्' इत्येवम् अभ्यर्थनीयः, स हि पूज्यः कोऽपि

---

अनीयर्)। तमनु—सत्त्वशीलस्य ध्वजस्य वा पश्चात् इत्यर्थः ["लक्षणेत्थम्भूताख्यान—" (१।४।९० पा०) इत्यनेन २या०]।

(ज) दिव्यम्—अलौकिकं, महाप्रभावव्यञ्जकमित्यर्थः, मनोज्ञमिति वा, शारीरलक्षणं—चक्राङ्कुशकमलादिराजचिह्नमिति यावत्, यस्य तं दिव्यशारीरलक्षणम्—असाधारणगात्रशोभितदैहिकचिह्नं (विश०। बहुव्री०)। न पूर्वः,—पूर्वदृष्ट इत्यर्थः, अपूर्वः,—अदृष्टपूर्वः, अज्ञात इत्यर्थः, पुरुषेषु अतिशयः,—अधिकः पुरुषातिशयः,—पुरुषश्रेष्ठः।

(झ) तस्याः देव्याः, समीपे इति शेषः। वीक्ष्यतां—दृश्यतां, त्वयेति शेषः (वि+ईक्ष+कर्मणि लोट्-ताम्)। विचित्य—अन्विष्य (वि+चि+ल्यप् "ह्रस्वस्य पिति कृति तुक्" (६।१।७१ पा०) इति तुक्], आतिथ्यम्—अतिथिसत्कारम्। प्रसादः,—अनुग्रहः। अभ्यर्थनीयः,—याचनीयः (अभि+अर्थ+णिच्+अनीयर्)।

उत्तमः पुमान्"। एवं तयोक्ता सखी तं विचित्य उद्यानवर्त्तिनं (ञ) स्वस्वामिनीनिदेशं प्रह्वा व्यजिज्ञपत्। तदाकर्ण्य स वीरो नृपः सावज्ञं तामुवाच,—(ट) "भद्रे! वचसैव कृतमातिथ्यं, नान्यत् किमपि उपयुज्यते"। एतदाकर्ण्य तया सख्या गत्वा सा असुरनन्दिनी (ठ) श्राविता। तदा (ड) उदारं तम-सामान्यं कमपि अभ्यमन्यत। ततस्तेन (ढ) मानुषायोग्येऽपि आतिथ्ये निःस्पृहेण राज्ञा धैर्य्यपाशेनाकृष्यमाणा पत्यर्थ-पार्वतीसेवापरिपाकसमन्विता दैत्यकन्यका स्वयमुपेत्य उद्यानं प्राविशत्, प्रविश्य च राजानं तमभ्येत्य प्रश्रयान्विता आतिथ्य-ग्रहणार्थं प्रार्थयामास।

(ञ) स्वस्याः,—निजायाः, स्वामिन्याः,—प्रभोः, निदेशम्—आज्ञां स्वस्वामिनी-निदेशं—निजप्रभोरादेशं (६ष्ठी तत्पु०), प्रह्वा—विनीता सती।

(ट) भद्रे!—सुचरिते। कृतं—सम्पन्नमित्यर्थः। अन्यत्—पाद्यादिकम्। उपयुज्यते—प्रयोजनत्वेनार्हति, तव मधुरवाक्येनैव अतिथिसत्कारः सुनिष्पन्नः एतदतिरिक्तं किमपि प्रयोजनं नास्तीत्याशयः।

(ठ) श्राविता—आकर्णिता (श्रु+णिच्+क्तः, स्त्रियां टाप्), राजवचन-मिति शेषः।

(ड) उदारं—महान्तं, महदाशयमित्यर्थः (विश०)। असामान्यम्—असाधारणं, महाप्रभावमिति यावत्। अभ्यमन्यत—अबुध्यत (अभि+मन+लङ्-त)।

(ढ) मानुषायोग्ये—मानुषदुर्लभे (विश०), तस्याः पुर्य्याः नरलोकागम्यत्वा-दिति भावः। धैर्य्यं—धीरत्वं, सुन्दरीलाभामभृतायां तस्यामनादरप्रदर्शनरूपमिति यावत्, तदेव पाशः,—रज्जुः तेन धैर्य्यपाशेन—धैर्य्यरज्ज्वा (करणे ३या०), राज्ञः धैर्य्याधिक्यदर्शनेन महागुणः महाप्रभाववानयमिति मत्वातिशय्यवशात् तद्दर्शनोत्सुका स्वयमेव तदन्तिकं गतवतीत्यर्थः। पत्यर्थम्—अनुरूपस्वामिलाभार्थं, पार्वत्याः,—अम्बिकायाः, या सेवा—आराधना, तस्याः परिपाकः,—परिणतिः, कालप्राप्तिकाल इति यावत्, तेन समन्विता—संयुता पत्यर्थपार्वतीसेवापरिपाक-समन्विता—समुपस्थितवाभीष्टवरलाभकाला (विश०)। प्रश्रयेण—विनयेन, अन्विता—युक्ता प्रश्रयान्विता—विनीता सतीत्यर्थः (विश०। ३या तत्पु०)।

ततः स नृपस्तं सत्त्वशीलम् (ण) उद्दिश्य तामुवाच,—"भद्रे! अनेन कथितां देवीमिह द्रष्टुमहमागतः, दृष्टा च सा गौरी परमाद्भुतकेतनं ध्वजपथं प्राप्य, तदनु त्वञ्च"। तदाकर्ण्य सा कन्यका प्रत्यभाषत,—"राजन्! तर्हि कौतुकात् त्रिजगदद्भुतं पुरं वीक्षितुमागम्यताम्"। एवंवादिनीं तां स नृपः (त) विहस्यावदत्,—"तदपि अनेन मे कथितं, यत्र सा स्नानवापी अस्ति" इति। कन्यकाऽवादीत्,—"देव! मैवमादिश, नाहं (थ) विड़म्बनशीला, पूज्ये विड़म्बना का? विशेषतस्त्वहं युष्माकं सत्त्वोत्कर्षेण किङ्करीकृताऽस्मि, तन्मम

(ण) उद्दिश्य—लक्ष्यीकृत्य (उत्+दिश+ल्यप्)। परमाद्भुतम—अत्याश्चर्यं, केतनं—पताका यस्य तादृशं परमाद्भुतकेतनम—अतिविचित्रपताकासमन्वितं (विश०। बहुव्री०), ध्वजः,—ध्वजयष्टिरेव, पथः तं ध्वजपथं—ध्वजयष्टिरूपमार्गमित्यर्थः, गर्त्तोपरिस्थध्वजानुसरणेनेहागत्य देवी गौरी मया दृष्टा इति समुदायार्थः। तदनु—तत्पश्चात्, देवीदर्शनानन्तरमित्यर्थः, त्वञ्च इत्यतःापि दृष्टा इत्यनुषञ्जनीयम्।

(त) विहस्य—विहसितं कृत्वा, नात्युच्चैः न वा ईषत्, किन्तु मध्यमहास्यं कृत्वा इत्यर्थः, "आकुञ्चितकपोलाक्षं सस्वनं निःस्वनं तथा। प्रस्तावोत्थं सानुरागमाहुर्विहसितं बुधाः"॥ इत्युक्तलक्षणं हास्यं कृत्वा इति यावत् (वि+हस+ल्यप्। "मध्यमः स्यात् विहसितम्" इत्यमरः)। अनेन—सत्त्वशीलेन। स्नानाय वापी—दीर्घिका स्नानवापी—स्नानार्थपुष्करिणी (४र्थी तत्पु०), यत्र पुष्करिण्यां स्नात्वा अयं मे सहचरः तादृशीं विड़म्बनाम् अलभत, तादृशी पुष्करिणी यत्र पुरे वर्त्तते, तत् त्रिजगदद्भुतमिति सत्यमेव, किन्तु युष्माकं वाग्जालेनाकृष्टा एतत्सदृशविडम्बनाभोगार्थं तत्र न गच्छामि, न वा स्नामि, व्यर्थस्ते अस्मद्विड़म्बनप्रयासः इति राज्ञः हास्याभिप्रायः इति वेदितव्यम्।

(थ) विड़म्बनं—तिरस्कारणं, परपीड़नं परप्रतारणं वा इति यावत्, शीलं—स्वभावो यस्याः सा विड़म्बनशीला—परपीड़कस्वभावा, प्रतारणापरायणा वा (विश०। बहुव्री०)। सत्त्वस्य—चित्तस्य स्वभावस्य वा ("सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु"॥ इति मेदिनी), उत्कर्षेण—प्रशस्ततया सत्त्वोत्कर्षेण—उदारस्वभावेन प्रशस्तमनस्तया वा (कर्मधा

प्रार्थनाभङ्गं मा कुरुष्व"। एतदाकर्ण्य स राजा सत्त्वशीलेन सहितः "तथा" इत्युक्त्वा तया सह प्रभासमण्डलोपान्तं ययौ।

अथ (द) अपावृतकवाटे तस्मिन् प्रविष्टः अपरं दिव्यं नित्यं सर्वर्त्तुकुसुमफलशोभितं रत्नकाञ्चनैर्निर्मितमपरं मेरुपृष्ठमिव पुरं ददर्श। तत्र सा (ध) महार्हे रत्नासने राजानमुपवेश्य यथोचितं अर्घ्यादिकमानाय्य राजसुताऽब्रवीत्,—"महाभाग!

श्या०। ६ष्ठी तत्पु०), किं—किञ्चित् कुत्सितं वा कर्म्म करोति या सा किङ्करी—परिचारिका [किं+कृ+"कि यत्तद्बहुषु कृञोऽज्विधानम्" (वा०) इति अच्, स्त्रियां ङीष्] अकिङ्करी किङ्करीकृता किङ्करीकृता—दासीकृता (अभूततद्भावे च्विः)। प्रार्थनाभङ्गं—याच्ञावैफल्यम्।

(द) अपावृतः,—उद्घाटितः, कवाटः यस्य तस्मिन् अपावृतकवाटे—उन्मुक्तकवाटे (विण०। बहुव्री०), तस्मिन्—प्रभासमण्डले। नित्य—सदैव, न तु कालविशेषे इत्यर्थः, सर्वेषु ऋतुषु—हेमन्तादिषु षट्सु ऋतुषु, यानि कुसुमानि, यानि च फलानि, तैः शोभितं—कान्तं सर्वर्त्तुकुसुमफलशोभितं—हिमादिषु पृथक् पृथक् कालेषु यानि कुसुमानि यानि च फलानि जायन्ते, तानि सर्वाणि सर्वकालमेव युगपदेव तत्र उत्पद्य पुरीं तां शोभयन्ति इत्यर्थः। मेरुपृष्ठ—सुमेरुपृष्ठमिव, मेरुपृष्ठमपि सर्वर्त्तुकुसुमफलशोभितं रत्नकाञ्चनसानुमयञ्च।

(ध) महस—उत्सवम्, अर्हति—युज्यते इति तस्मिन् महार्हे—उत्सवकालव्यवहारोचिते, महामूल्य इत्यर्थः, यद्वा,—महः,—तेजः, स अस्य अस्तीति महः,—तेजस्वी (अर्श-आदित्वादच्), तम् अर्हतीति तस्मिन् महार्हे—तेजस्विजनोपवेशनयोग्ये इत्यर्थः (विण०। "मह उत्सवतेजसोः" इति मेदिनी), "महार्घे" इति पाठे—महान् अर्घः,—मूल्यं यस्य तादृशे महार्घे—बहुमूल्ये। यथोचितं—राजयोग्यमित्यर्थः, अर्घः,—पूजाविधिः ("मूल्ये पूजाविधावर्घः" इत्यमरः), तस्मै इदम् अर्घ्यम्—अतिथिपूजार्थं दीयमानं जलादिकम् [अर्घ+"पादार्घाभ्यां च" (५।४।२५ पा०) इति यत्। "अर्घ्यमर्घार्थे पाद्यं पादाय वारिणि" इत्यमरः], तदादिकम् अर्घ्यादिकं—जलमधुपर्कगन्धपुष्पादिकमित्यर्थः, आनाय्य—आनाययित्वा (आ+नी+णिच्+ल्यप्), परिजनेनेति शेषः। महान्—प्रशस्तः, भागः,—भाग्यं ("भागो रूपार्द्धके भाग्यैकदेशयोः" इति हैमः) यस्य सः महाभागः, तत्सम्बुद्धौ महाभाग!—

अहमस्मि असुरेन्द्रस्य महात्मनः कालनेमेः सुता, चक्रिणा स मम पिता स्वर्गं प्रापितः, इदञ्च मे पैतृकं पुरद्वयं विश्वकर्मणा कृतं, सर्वकामदे अत्र न जरा न च मृत्युः बाधते ; इदानीञ्च त्वं मे पिता सपुरायाः"। (न) इति समर्पितात्मसर्वस्वां तामवादीत् स राजा,—"यदि एतत्, तर्हि त्वं मम सुता अस्मै सत्त्वशीलाय सुहृदे वीराय बान्धवाय च मया दत्ता"। एवं (प) देवीप्रसादेन मूर्त्तेनेव नृपेण सा उक्ता गुणाढ्या विनता तं राजानं "तथा" इति अन्वमन्यत।

---

भाग्यवन्, महाशय ! इत्यर्थो वा। चक्रिणा—चक्रपाणिना, विष्णुना इत्यर्थः। स्वर्गं प्रापितः,—गमितः, विनाशित इत्यर्थः [प्र+आप+णिच्+क्तः। अत्र मम पिता स्वर्गं प्राप्तः, चक्रिणा स मम पिता स्वर्गं प्रापितः इति णिजन्तेः पितुः कर्मसंज्ञा, ततः "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्। बुद्धिभक्ष्यार्थयोः शब्दकर्मकाणां निजेच्छया। प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः" ॥ (का०) इति कारिकानुसारेण प्रयोज्यकर्मणि पितरि १मा ज्ञातव्या]। पितृतः आगतं पैतृकं—पितृस्वामिकमित्यर्थः, पितृतः प्राप्तमिति यावत् [पितृ+"पितुर्यच्च" (४।३।७९ पा०) इति ठञ्]। सर्वान् कामान्—अभीष्टान्, ददाति—यच्छति इति तस्मिन् सर्वकामदे—कृत्स्नाभिलषितप्रदानपरे [विशे०। सर्वकाम+दा+"आतोऽनुपसर्गे कः" (३।२।३ पा०) इति कः]। पुराभ्यां—नगराभ्यां सह वर्त्तमानायाः सपुरायाः,—पुरद्वयसहितायाः ("मे" इत्यस्य विशे०)।

(न) इति—उक्तप्रकारेण (अव्य०), आत्मा—स्वञ्च, सर्वस्वं—सर्वधनञ्च आत्मसर्वस्वे, समर्पिते—सम्यक् दत्ते, आत्मसर्वस्वे यया तां, यद्वा,—समर्पितम् आत्मनः सर्वस्वं यया तां समर्पितात्मसर्वस्वां—राजाधीनीकृतसर्वविभवाम् (विशे०। बहुव्री०)।

(प) देव्याः,—कात्यायन्याः, प्रसादेन—अनुग्रहेण देवीप्रसादेन—अम्बिकाप्रसन्नतारूपेणेत्यर्थः, मूर्त्तेन—रूपिणा, मूर्त्तेन देवीप्रसादेनेव नृपेण—राजरूपधारिणा देव्यनुग्रहेणेत्यर्थः, सेवासन्तुष्टा देवी वाञ्छितसम्पत्तिदानार्थं राज्ञः रूपं धृत्वा तत्र समागताऽभूदिति भावः। अन्वमन्यत—अन्वजानात्, स्वीकृतवतीत्यर्थः (अनु+मन+लङ्-त)।

ततस्तस्याः (फ) पाणिग्रहं कृत्वा कृतार्थे तस्मिन् सत्त्वशीले, राजा असुरैश्वर्य्यं सर्वं दत्त्वा तं सत्त्वशीलमुवाच,—"सखे! भुक्तयोरामलकयोरेकमद्य मया तव संशोधितम्, असंशोधितात् द्वितीयात् तेऽहं ऋणी तिष्ठामि" इति प्रणतं तमुक्त्वा, तां दैत्यपुत्रीमब्रवीत्,—"भद्रे! मार्गो मम दर्श्यतां, येन स्वां पुरीं प्राप्नुयाम्" इति। ततः सा अपराजितं नाम खड्गम् एकञ्च जन्मजरामृत्युहरं फलं दैत्यनन्दिनी तस्मै भूपाय प्रादात्। अथ स राजा ताभ्यां खड्गफलाभ्यामन्वितः तयोक्तायां तस्यामेव वाप्यां मग्नः (ब) स्वदेशतः समुत्थाय सर्वकार्य्यसिद्धिमानभूत्। स च सत्त्वशीलः (भ) दैत्यस्त्रीपुरराज्यं सुखेन शशास"।

इति कथामाख्याय वेतालो राजानम् (म) अप्राक्षीत्,—"राजन्! कोऽनयोर्द्वयोरब्धिपतने सत्त्वाधिकः?" इति।

(फ) पाणेः,—करस्य, ग्रहः,—ग्रहणं तं पाणिग्रहं—विवाहकाले कन्यग्रहण-रूपाचारविशेषम्। कृतार्थे—पूर्णमनोरथे (विण०), सतीति शेषः (भावे ७मी०)। असंशोधितात् द्वितीयात्, आमलकादिति शेषः, ऋणादिति भावः ["अकर्त्तर्य्यृणे पञ्चमी" (२।३।२४ पा०) इति ५मी०]। मार्गः,—पन्थाः। दर्श्यताम्—अवलोक्यतां (दृश+णिच्+कर्म्मणि लोट्-ताम्), त्वयेति शेषः; येन—मार्गप्रदर्शनेनेत्यर्थः, स्वां—निजाम्। प्राप्नुयां—लभेय, गच्छेयमिति यावत् (प्र+आप+लिङ्-याम्)।

(ब) स्वदेशतः,—स्वदेशे, निजनगरे इत्यर्थः [स्वदेश+"आद्यादिभ्य उपसङ्ख्यानम्" (वा०) इति सप्तम्यास्तसिः], समुत्थाय इत्यनेनान्वयः, यद्वा,—स्वदेशतः,—स्वदेशाय, स्वदेशमुद्दिश्य इत्यर्थः, मग्न इत्यनेनान्वयः (अत्रापि पूर्वसूत्रेण चतुर्थ्यास्तसिः), अत्र पक्षे—समुत्थाय इत्यत्र स्वदेशे इति शेषः, सर्वेषु कार्य्येषु सिद्धिः,—साफल्यं विद्यते यस्य तादृशः सर्वकार्य्यसिद्धिमान्—निखिलप्रारब्धकर्म्मसफलताभाक्।

(भ) दैत्यस्त्रियाः,—दैत्यकन्यायाः, निजपत्न्या इति यावत्, पुरमेव राज्यं दैत्यस्त्रीपुरराज्यम्—असुरनगरम्।

(म) अप्राक्षीत्—अजिज्ञासीत् (प्रच्छ+लुङ्-द)। द्वयोः (निर्द्धारे ६ष्ठी०)। सत्त्वाधिकः,—मनस्वी, निर्भीकचेता इत्यर्थः।

तदाकर्ण्य राजा शापात् भीतः सदुत्तरमेव प्रत्यभाषत,—"एतयोः सत्त्वशील एव अधिकः सत्त्ववान् मे प्रतिभाति ; स हि पूर्वम् (य) अविज्ञाततत्त्वः निराश एवाम्बुधौ पतितः, राजा तु तत्त्वं विज्ञाय अम्भोधिमाविशत्"। इति समाकर्ण्य राज्ञो निरस्तमौनस्य वचनं स वेतालः स्कन्धात् पूर्ववत् अलक्षितः तमेव शिंशपातरुमगमत्। राजाऽपि पूर्ववत् तमानेतुं पुनरुद्योगमकरोत्। न हि (र) प्रारब्धे असमाप्ते धीराः शिथिलीभवन्ति।

---

## अथ अष्टमकथा।

ततश्च स राजा भूयः शिंशपामूलं गत्वा तं वेतालं तथैव प्राप्य स्कन्धे कृत्वा भिक्षुमुद्दिश्य (क) प्रातिष्ठत। प्रयान्तञ्च तं स स्कन्धवर्त्ती वेतालः सम्बोध्य प्राब्रवीत्,—"राजन्! श्रमविनोदाय पुनरिमां कथामाकर्णय,—

(य) अविज्ञातम्—अविदितं,तत्त्वं—याथार्थ्यं, ध्वजरहस्यमिति यावत्, येन तादृशः अविज्ञाततत्त्वः,—अज्ञातरहस्यः (विश०। बहुव्री०), निराशः, स्वजीवने इति शेषः।

(र) प्रारब्धे—प्रक्रान्ते, कार्य्ये इति शेषः। शिथिलीभवन्ति—मन्दप्रयत्नीभवन्ति, प्रारब्धकार्य्यमसमाप्य न विरमन्तीत्यर्थः [ अशिथिलाः शिथिलाः भवन्ति शिथिलीभवन्ति, शिथिल+"कृभ्वस्तियोगे—" (५।४।५० पा०) इति अभूततद्भावे च्विः ]।

---

(क) प्रातिष्ठत—अगच्छत् [ प्र+स्था+लङ्-त "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मने पदम् ]।

अस्त्यङ्गदेशे महान् (ख) हुक्कघटाभिधः जनपदः, तत्र विष्णुस्वामीति महान् यज्वा महाधनो द्विजः प्रतिवसति; तस्य स्वानुरूपायां पत्न्यां क्रमात् त्रयः पुत्रा जज्ञिरे। कदाचित् ते (ग) तरुणा भोगवैदग्ध्यशालिनः कूर्महेतोः पित्रा प्रारब्ध-यज्ञेन प्रेषिताः भ्रातरः अम्बुधिं ययुः; तत्र कूर्ममेकं प्राप्य ज्यायान् कनिष्ठावाह स्म,—"युवयोरेकः कूर्ममिमं पितुः क्रत्वर्थं गृह्णातु, अहमेनं विस्रं पिच्छिलञ्च ग्रहीतुं न शक्नोमि"।

---

(ख) हुक्कघटः इति अभिधा—नाम यस्य तादृशः हुक्कघटाभिधः,—हुक्कघटाख्यः (विण०। बहुव्री०), जनपदः,—जननिवासस्थानं, देश इत्यर्थः, नगर इति यावत् ("भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी)। यज्वा—विधानेन कृतयागः याजकः, यथाविधि यागशील इत्यर्थः [विण०। यज+"सुयजोर्ङ्वनिप्" (३।२।१०३ पा०) इति ङ्वनिप्। "यज्वा तु विधिनेष्टवान्" इत्यमरः]। स्वस्य—आत्मनः, अनुरूपा—सदृशी तस्यां स्वानुरूपायां—निजयोग्यायाम्। जज्ञिरे—बभूवुः [जन+लिट्-इरे "गमहनजन—" (६।४।९८ पा०) इति उपधा-लोपः "स्तोः श्चुना श्चुः" (८।४।४० पा०) इति नकारस्य ञकारः]।

(ग) तरुणाः,—युवानः (विण०। "वयस्थस्तरुणो युवा" इत्यमरः), भोगे—विविधसुखास्वादे, यत् वैदग्ध्यं—पाण्डित्यं, नैपुण्यमिति यावत्, तेन शालन्ते—शोभन्ते, ख्यातिमापद्यन्ते इति यावत्, ये ते तादृशाः भोगवैदग्ध्यशालिनः,—भोगनिपुणाः, उपभोग्यद्रव्याणां गुणदोषविचारणे अद्भुतनैपुण्यतया सुप्रसिद्धा इति भावः (भोगवैदग्ध्य+शाल+ग्रहादित्वात् णिनिः), कूर्महेतोः,—कच्छपनिमित्तम्। प्रारब्धः,—प्रक्रान्तः, कृतारम्भ इत्यर्थः, यज्ञः,—यागः येन तेन प्रारब्धयज्ञेन—अनुष्ठीयमानयागेन (विण०। बहुव्री०)। ज्यायान्—ज्येष्ठः [अयमेषामतिशयेन वृद्धः इति वाक्येन वृद्ध+"द्विवचनविभज्योपपदे तरबीयसुनौ" (५।३।५७ पा०) इति ईयसुनि "वृद्धस्य च" (५।३।६२ पा०) इति ईयसुनि परे वृद्धस्य ज्यादेशे "ज्यादादीयसः" (६।४।१६० पा०) इति ईयसुनः ईकारस्य आत्वम्], अत्र ज्येष्ठस्य वार्द्धक्याभावेऽपि भ्रातृत्रयमध्ये तस्य अतिवृद्धत्वात् प्रयोगोऽयं बोध्यः। युवयोः (निर्द्धारे ६ष्ठी०)। क्रतवे—यज्ञाय इदं क्रत्वर्थं—यज्ञनिमित्तम् (अर्थेन सह नित्यसमासः। "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः), यद्वा,—

इत्युक्तवन्तं तं ज्येष्ठं कनिष्ठावूचतुः,—(घ) "आर्य्य! तवात्र चेत् जुगुप्सा, तदाऽऽवयोः कथं न स्यात्?"। तदाकर्ण्य स ज्येष्ठोऽवादीत्,—"युवां कच्छपं गृह्णीतम्, अन्यथा (ङ) युवाभ्यां कृते पितुर्यज्ञलोपः स्यात्, ततो युवयोस्तस्य च पितुः ध्रुवं नरकपातः स्यात्"। इति तेनोक्तावनुजौ विहस्य तमवोचताम्,—"आर्य्य! आवयोरेव समानं (च) धर्मं वेत्सि? नाऽऽत्मनः?"। ततो (छ) ज्येष्ठोऽवादीत्,—"किं युवां मम भोजनचण्डतां न जानीथः? अहं हि भोजनेषु चण्डः, कथमिमं जुगुप्सितं स्पृशामि?"। एतत्तस्य वचः श्रुत्वा मध्यमो-

क्रतवे अर्थः,—प्रयोजनं यस्य तादृशं क्रत्वर्थं—यज्ञप्रयोजनकं (कूर्म्ममित्यस्य विण०। बहुव्री०)। विस्रम—आमगन्धिम्, अपक्वमांसगन्धिम् इत्यर्थः (विण०। "विस्रं स्यादामगन्धि यत्" इत्यमरः)।

(घ) आर्य्य!—पूज्य!। जुगुप्सा—घृणा [गुप्+सन् "गुप्तिज्किद्भ्यः सन्" (३।१।५ पा०) इति सन् "अ प्रत्ययात्" (३।३।१०२ पा०) इति अ, स्त्रियां टाप्]। "विचिकित्सा" इति पाठे—विचिकित्सा—सन्दिग्धता, गृह्णामि न वा इति सन्देहजनितविमुखता इति भावः।

(ङ) युवाभ्यां कृते—निमित्तम् [अव्य०। "निमित्तपर्य्यायप्रयोगे सर्वासां प्रायदर्शनम्" (वा०) इति निमित्तार्थक-कृतेशब्दयोगाच्चतुर्थी]। ध्रुवं—निश्चितम्।

(च) धर्म्मं—पितुः यज्ञलोपजनितनरकपातनिवारणार्थम् आवयोश्च कर्त्तव्याकरणजनितनरकपातनिवारणार्थं धर्म्मं जानीवोधनरूपमित्यर्थः, वेत्सि—जानासि (विद+लट्-सि), आत्मनः,—स्वस्य, न, वेत्सि? इति पूर्वेणान्वयः।

(छ) अयमेषामतिशयेन वृद्धः ज्येष्ठः,—अग्रजः [वृद्ध+"अतिशायने तमबिष्ठनौ" (५।३।५५ पा०) इति इष्ठनि "वृद्धस्य च" (५।३।६२ पा०) इति ज्यादेशः]। भोजने—आहारविषये, चण्डता—तीव्रता, तीव्रानुभवशक्तिरिति यावत्, तां भोजनचण्डतां—भोज्यद्रव्यस्य दोषगुणविचारणे तीव्रास्वादशक्तिमित्यर्थः, जानीथः,—वित्थः (ज्ञा+लट्-थस्)। चण्डः,—तीव्रः, तीव्रास्वादशक्तिसमन्वितः इत्यर्थः। जुगुप्सितं—घृणितं, विस्रत्वपिच्छिलत्वाभ्यामिति भावः [गुप्+"गुप्तिज्किद्भ्यः सन्" (३।१।५ पा०) इति सन्+क्तः]।

ऽब्रवीत्,—"अहं हि (ञ) अधिकखण्डः नारीषु, तत् कथमिमं स्प्रष्टुमर्हामि?"। एवं मध्यमेनोक्ते ज्येष्ठः (झ) कनीयांसमवादीत्,—"त्वं तावत् आवयोः कनीयान्, कूर्मं गृहाण"। ततः स कनीयान् (ञ) भ्रुकुटिं विधाय ताववोचत्,—"मूर्खौ! अहं हि विशेषेण तूलिकाचण्डः"। इत्थं ते कलहाऽऽसक्तास्त्रयो भ्रातरः (ट) निर्णयाय अभिमानिनः तं कूर्मं विहाय प्रसेनजिदाख्यभूपतेर्नगरं विटङ्कपुरं ययुः; तत्र गत्वा प्रतीहारमुखेनाऽऽवेद्य, तेन च प्रवेशितास्तं नृपं तं वृत्तान्तं विज्ञापयामासुः। राजा च सर्वं श्रुत्वाऽब्रवीत्,—"तिष्ठत यूयमत्र, परीक्षिष्ये वः (ठ) क्रमात्" इति। ततस्ते "तथा"

(ज) अधिकखण्डः नारीषु—सम्भोग्यानां नारीणां दोषगुणविचारणे तीव्रानुभवशक्तिसमन्वित इत्यर्थः। अर्हामि—युज्ये, शक्नोमि इत्यर्थः (अर्ह + लट्-मिप्)।

(झ) कनीयांसम्—अयमेषामतिशयेन युवा अल्पो वा इति कनीयान्—कनिष्ठः, अनुजः इति यावत्, तं कनीयांसं—कनिष्ठभ्रातरमित्यर्थः [युवन् अल्प वा + "अजादी गुणवचनादेव" (५।३।५८ पा०) इति ईयसुनि "युवाल्पयोः कनन्यतरस्याम्" (५।३।६४ पा०) इति कन्। "कनीयानतियूनि स्यादत्यल्पानुजयोस्त्रिषु" इति मेदिनी]।

(ञ) भ्रुकुटिं—भ्रूभङ्गम्। तूलिकासु—तूलगर्भशयनोपकरणविशेषेषु, "तोषक" वा "गदि" इति ख्यातासु ("तूलिका कूर्चिकायान्तु शय्योपकरणेऽपि च" इति मेदिनी), चण्डः,—तीव्रः तूलिकाचण्डः,—शय्योपकरणानां गुणदोषविचारणे तीक्ष्णानुभूतिसम्पन्न इत्यर्थः।

(ट) निर्णयाय—निश्चयाय, कोऽधिकखण्डः इति वादमीमांसायै इत्यर्थः, अभिमानिनः,—अहमेवाधिकखण्डः इत्यहङ्कारवन्तः इत्यर्थः। प्रतीहारस्य—द्वारपालस्य ("प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः" इत्यमरः), मुखेन प्रतीहारमुखेन—द्वाररक्षकद्वारा, आवेद्य—विज्ञाप्य, स्वेषामागमनप्रयोजनमिति शेषः (आ + विद + णिच् + ल्यप्), तेन—प्रतीहारेण।

(ठ) क्रमात्—पौर्वापर्यानुसारेण, ज्येष्ठादिक्रममवलम्ब्य इत्यर्थः (ल्यप्-लोपे पञ्चमी०)।

इत्युक्त्वा सर्वे तत्र (ड) अवतस्थिरे। ततः स नृपः स्वाऽऽहारकाले तानानीय तेभ्यः (ढ) अग्र्याणि आसनानि, राजार्हाणि च षड्रसानि स्वादूनि अन्नादीनि दापयामास। ततः सर्वेषु (ण) भुञ्जानेषु तेषु भोजनचण्डो जुगुप्सा-कलितानाननो न बुभुजे। "कथं न भोजनं स्वादु सुगन्ध्यपि भुङ्क्ते?"। इति राज्ञा स्वयं पृष्टः स शनैर्जगाद, —"राजन्! अस्मिन् (त) भक्ते शवधूमदुरामोदो वर्त्तते, तेनाहमिदं भोक्तुं स्वादु अपि नेच्छामि"। इत्युक्ते तेन सर्वेऽपि नृपाऽऽज्ञया तदाघ्राय (थ) "कलमशाल्यन्नमिदं

---

(ड) अवतस्थिरे—न्यूषुः, अवस्थितवन्तः इत्यर्थः [अव+स्था+लिट्-इरे "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम्]।

(ढ) अग्र्याणि—श्रेष्ठानि। राजानम् अर्हन्ति—युज्यन्ते इति तानि राजार्हाणि—नृपोचितानि (विश०), षड्—मधुराम्ललवणकटुतिक्तकषायाः षट्सङ्ख्यकाः, रसाः,—आस्वादाः यत्र तानि षड्रसानि (विश०। बहुव्री०), स्वादूनि—मनोज्ञानि ("स्वादुर्मिष्टमनोज्ञयोः" इति मेदिनी)। दापयामास—उत्सर्जयामास, सूपकारहस्तेनेति शेषः [दा+णिच्+लिट्-णल् "अर्तिह्रीव्लीरी क्नू—" (७।३।३६ पा०) इति पुक् "कास्प्रत्ययादाममन्त्रे लिटि" (३।१।३५ पा०) इति प्रत्ययान्तादनेकाचः आम्, "कृञ्चानुप्रयुज्यते लिटि" (३।१।४० पा०) इत्यामन्तादस्यनुप्रयोगः]।

(ण) भुञ्जानेषु—खादत्सु, भोजननिरतेषु इत्यर्थः (निर्द्धारे ७मी०। भुज+आनच्)। जुगुप्सया—घृणया, कलितम्—आप्तं, प्राप्तमित्यर्थः, विकृतमिति यावत् (कलितं विदिताऽऽप्तयोः" इति मेदिनी), आननं—मुखं यस्य सः जुगुप्साकलिताऽऽननः,—घृणाविकृतमुखः (विश०। बहुव्री०)। बुभुजे—आश [भुज+लिट्-ए "भुजोऽनवने" (१।३।६६ पा०) इति आत्मनेपदम्]।

(त) भक्ते—अन्ने, शवस्य—दाह्यमानमृतदेहस्य, यो धूमः, चितोत्थित इत्यर्थः, तस्य दुरामोदः,—दुर्गन्धः (६ष्ठी तत्पु०। "आमोदो गन्धहर्षयोः" इति मेदिनी)।

(थ) कलमशालिः,—कलमाख्यतण्डुलविशेषस्य, अन्नं, यद्वा,—कलमशालिना—तदाख्यतण्डुलविशेषेण, कृतमन्नं कलमशाल्यन्नं—कलमाख्यशालितण्डुलान्नं (६ष्ठी

सुगन्धि च" इति शशंसुः। स तु भोजनचतुरः (द) पिहितनासिक-स्तत्र बुभुजे। ततः स राजा सञ्चिन्त्य कुमारात् यावदन्विष्यति, तावत् (ध) नियोजितजनमुखात् तदन्नं ग्रामश्मशाननिकटक्षेत्र-सम्भवशालिजं बुबुधे। ततोऽतिविस्मितस्तुष्टश्च राजा तमभाषत,—"ब्रह्मन्! सत्यं त्वं भोजनचण्डः, तदन्यत् भुज्यताम्" इति।

ततो राजा कृताहारान् तान् वासगृहेषु (न) विसृज्य स्वामिकां गणिकोत्तमाम् आनयामास, प्राहिणोच्च निशि तां सर्वाङ्गसुन्दरीं कृतमण्डनां तस्मै द्वितीयस्मै नारीचण्डाय भ्रात्रे।

---

तत्पु० शाकपार्थिवादि वा)। शोभनो गन्धः यस्य इति सुगन्धि—मनोहरगन्धयुक्तः [सु+गन्ध+"गन्धस्येदुत्पूतिसुसुरभिभ्यः" (५।४।१३५ पा०) इति इकारादेशः]। शशंसुः,—कथयामासुः (शन्स+लिट्-उस्)।

(द) पिहिता—आवृता [अपि+धा+क्तः "दधातेर्हिः" (७।४।४२ पा०) इति हिः "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां यथा वाचा निशा दिशा"॥ (का०) इति अपेरकारलोपः], नासिका येन सः पिहित-नासिकः,—आच्छादितनासः [विश०। बहुव्री०। "गोस्त्रियोरुपसर्जनस्य" (१।२।४८ पा०) इति नासिकाया आकारस्य ह्रस्वः]।

(ध) नियोजितानां—तण्डुले शवधूमगन्धित्वस्य तत्त्वानुसन्धानाय नियुक्तानां, जनानां मुखात् नियोजितजनमुखात्—आज्ञप्तलोकाननात् (अपा० ५मी०)। ग्रामे—ग्रामप्रान्ते, यत् श्मशानं—मृतदेहदाहस्थानं, तस्य निकटे—समीपे, यत् क्षेत्रं—केदारं, शस्योत्पत्तिस्थानमित्यर्थः, तस्मात् सम्भवः,—उत्पत्तिः यस्य तादृशः यः शालिः,—धान्यविशेषः, तस्मात् जायते इति तत् ग्रामश्मशाननिकटक्षेत्रसम्भवशालिजं—ग्रामप्रान्तवर्त्तिश्मशानसमीपभूमिसम्भूतधान्यविशेषकृतं (विश०), बुबुधे—विवेद, ज्ञातवानित्यर्थः (बुध+लिट्-ए)।

(न) विसृज्य—सम्प्रेष्य इत्यर्थः (वि+सृज+ल्यप्), स्वां—स्वकीयां, निजो-पभोग्यामित्यर्थः। प्राहिणोत्—प्रेरयत् (प्र+हि+लङ्-द)। कृतं—सम्पादितं, मण्डनं—प्रसाधनं, विभूषणक्रिया इत्यर्थः, यया यस्या वा तां कृतमण्डनां—परिहितालङ्कारां (विश०। बहुव्री०। "मण्डनन्तु प्रसाधने" इति हैमः)। द्वितीयस्मै भ्रात्रे—मध्यमाय भ्रात्रे (तादर्थ्ये ४र्थी०)।

सा च राजभृत्येन (प) अन्विता तस्य द्वितीयस्य वासगृहं प्रागात्। तस्याश्च (फ) प्रभासितवेश्मनि प्रविष्टायां समुत्पन्न-मोहः वामपाणिना संरुद्धनासाग्रोऽसौ नारीचतुरो राजभृत्या-नब्रवीत्,—"निष्कास्यतामेषा, नो चेत् म्रियेऽहम्, अस्या-श्छागलगन्धो निर्याति"। इत्युक्ता राजपुरुषाः समुद्विग्नाः सविस्मयाश्च (ब) ततो राजान्तिकं नीत्वा तं वृत्तान्तं तस्मै न्यवेदयन्। राजा तं नारीचण्डमानीय तदाऽब्रवीत्,—"ब्रह्मन्! येयं (भ) चन्दनकर्पूरकालागुरुभिः कृतदेहविलेपना दिक्षु प्रसरच्चारुसौरभा वर्त्तते, तस्या वारविलासिन्याश्छागमलगन्धः कुतः?"। इत्युक्तोऽपि स नारीचण्डः यदा न (म) प्रतिपेदे, तदा राजा विचारकुतुकोऽभवत्, अबुध्यत च तां तस्या एव

(प) अन्विता—मिलिता इत्यर्थः (अनु+इ+क्तः)। प्रागात—प्रागमत् [प्र+इ+लुङ् द "इणो गा लुङि" (२।४।४५ पा०) इति गाऽऽदेशः "गातिस्था—" (२।४।७७ पा०) इत्यनेन सिचो लुक्]।

(फ) प्रभासितं—भास्वरं, दीपप्रभया उद्भासितं, यत् वेश्म—गृहं तस्मिन् प्रभासितवेश्मनि—आलोकोज्ज्वलगृहमध्ये (कर्म्मधा०)। निष्कास्यतां—बहि-ष्क्रियतां (निर्+कस+णिच्+कर्म्मणि लोट्-ताम्)। म्रिये—प्राणैः वियुज्ये [मृ+लट्-ए "रिङ् शयग्लिङ्क्षु" (७।४।२८ पा०) इति ऋतो रिङादेशः, "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" (६।४।७७ पा०) इति इयङ्]। अस्याः, गात्रादिति शेषः, यद्वा,—अस्या इति (अपादाने पञ्चमी०)।

(ब) ततः,—तस्मात् स्थानात्। नीत्वा, तामिति शेषः।

(भ) चन्दनञ्च कर्पूरञ्च कालागुरु च तानि तैः चन्दनकर्पूरकालागुरुभिः,—श्वेतचन्दनकर्पूरकृष्णागुरुभिः (करणे ३या०। द्वन्द्व०), कृतं—विहितं, देहे—अङ्गे, देहस्य वा, विलेपनं—वर्णकं यया सा कृतदेहविलेपना—अनुलिप्ताङ्गी (विश०। बहुव्री०)। प्रसरत्—विसर्पत्, चारु—मनोज्ञं, सौरभं—सद्गन्धः यस्याः सा प्रसर-च्चारुसौरभा—व्याप्नुवन्मनोहरगन्धा (विश०। बहुव्री०)। वारविलासिन्याः,—गणिकायाः, अङ्गे इति शेषः।

(म) प्रतिपेदे—स्वीचकार, तत्सकाशे अवस्थातुमिति शेषः, प्रतिपूर्वस्य

सुखेन शेशते मातृवियोगात् अजाचोरविवर्जिताम्। ततो राजा अतिविस्मितस्तस्य नारीचण्डस्य चण्डतां बहु प्रशंसन् तस्मै तृतीयाय तूलिकाचण्डाय आशु शय्यामदापयत्।

स च तूलिकाचतुरः पर्य्यङ्कोपरि (य) सप्तसङ्ख्यतूलिकायां शय्यायां धौतश्लक्ष्णपटप्रच्छदवाससि सुष्वाप। रात्रेः (र) यामार्द्धे एव गते स सहसा पाणिना अवष्टब्धपार्श्वः क्रन्दन् व्यथाऽऽकुलः तस्मात् शयनादुत्तस्थौ। ततस्तैश्च राजपुरुषैः तस्य पार्श्वे (ल) गाढ़लग्नस्य केशस्य कुटिलाऽरुणा मुद्रा च अदृश्यत। तैश्च

पदधाताः स्त्रीकारार्थकत्वात् (प्रति+पद+लिट्-ए)। विचाराय—सत्यनिर्णयाय, कुतुकं—कौतूहलं यस्य तादृशः विचारकुतुकः,—अस्याम्कागतत्वमस्ति सत्यं न वा इति निर्णयकुतूहली इत्यर्थः (विश०। बहुव्री०। "कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलम्" इत्यमरः)। अबुध्यत—अजानात् (बुध+लङ्-त)। तस्याः,—शयिकायाः।

(य) सप्तसङ्ख्याः तूलिकाः,—"तोषक" वा "गदि" इति ख्याताः तूलगर्भ-शय्योपकरणविशेषाः यस्यां तादृश्यां सप्तसङ्ख्यतूलिकायाम्—उपर्य्युपरि पातिततूल-गर्भशय्योपकरणसप्तकायां (विश०। बहुव्री०), शय्यायां—शयनीये, धौतः,—शुभ्रः इति यावत्, श्लक्ष्णः,—चिक्कणः, सूक्ष्म इति यावत्, पटः,—सुचेलकः, उत्तमवस्त्रमित्यर्थः ("सुचेलकः पटोऽस्त्री स्यात्" इत्यमरः), स एव प्रच्छदवासः,—आस्तरणवस्त्रं यस्यां तस्यां धौतश्लक्ष्णपटप्रच्छदवाससि—मनोज्ञास्तरणावृतायां (विश०। बहुव्री०), सुष्वाप—निदद्रौ [स्वप+लिट्-णल् "लिट्यभ्यासस्योभयेषाम्" (६।१।१७ पा०) इति अभ्यासस्य सम्प्रसारणम्]।

(र) यामार्द्धे—प्रहरार्द्धे, अर्द्धप्रहरे इत्यर्थः। अवष्टब्धः,—अवलम्बितः ("अवष्टब्धोऽविदूरे स्यादाक्रान्ते चावलम्बिते" इति मेदिनी), वेदनाऽऽधिक्यादिति भावः, पार्श्वः,—एकतरकक्षाधोभागः येन सः अवष्टब्धपार्श्वः,—प्रपीड़ितैकतरबाहु-मूलाधोदेशः (विश०। बहुव्री०)। शयनात्—शय्यातः ("शयनं सुरते निद्रा-शय्ययोश्च नपुंसकम्" इति मेदिनी)।

(ल) गाढ़म्—अशिथिलं, दृढ़मित्यर्थः, गभीरमिति यावत्, तद्यथा तथा लग्नस्य—संसक्तस्य (विश०)। कुटिला—कुञ्चिता, अरुणा—रक्तवर्णा, मुद्रा—रेखा इति यावत्।

तत्क्षणं गत्वा निवेदितो राजा तानुवाच,—"तूलिकानां तलेषु किञ्चित् स्यात् न वा, वीक्ष्यताम्"। ततस्ते गत्वा यावद्वीक्षन्ते एकैकं तूलिकातलं, तावत् सर्वतले स्थितमेकं (व) बालं प्रापुः, दर्शयामासुश्च तं नीत्वा तत्क्षणं राज्ञे। स च राजा तं तूलिका-चक्रमानीय तस्याङ्गं (श) तद्रूपमङ्कितं दृष्ट्वा परं विस्मयमवाप; "सप्तभ्यस्तूलिकाभ्यः अस्य तनौ कथमयं बालो मग्नः?" इति चित्रीयमाणस्तां रात्रिमनैषीच्च। प्रातश्चोत्थाय राजा,—(ष) "अद्भुतवैदग्ध्यसौकुमार्य्या अमी" इति परितुष्टः तेभ्य-स्त्रिभ्योऽपि चण्डेभ्यो हेमलक्षत्रयं ददौ। ततस्ते सुखिता विस्मृतकाच्छ्रपाः पितुर्यज्ञविघ्नेन उपार्जितपातकास्तत्र तस्थुः।

इति अद्भुतां कथामाख्याय (स) स्कन्धनिषण्णः स वेतालः

---

(व) बालं—केशं ("चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इत्यमरः)। दर्शयामासुः,—दर्शयामासुः [दृश+णिच्+लिट् उस् "काम्-प्रत्ययादा—" (३।१।३५ पा०) इत्याम् "कृञ्चानुप्र—" (३।१।४० पा०) इत्यामन्ताद-नुप्रयोगः], तं—बालम्।

(श) तद्रूपमङ्कितं—केशाकारचिह्नयुक्तम्। परम्—अत्यर्थम्। सप्तभ्य-स्तूलिकाभ्यः,—सप्तसङ्ख्यकतूलिकाः भित्त्वा इत्यर्थः (ल्यब्लोपे ५मी०)। चित्रं—विस्मयम् अनुभवन् ("विस्मयोऽद्भुतमाश्चर्य्यं चित्रम्" इत्यमरः) चित्रीयमाणः,—सञ्जातविस्मयः [चित्र+"नमोवरिवश्चित्रङः क्यच्" (३।१।१९ पा०) इति क्यच् "क्यचि च" (७।४।३३ पा०) इति अस्य ईत्वे चित्रीय+शानच्]। अनैषीत्—अत्यवीवहत, अतिवाहितवानित्यर्थः (नी+लुङ्-द)।

(ष) वैदग्ध्य—नैपुण्यं, भोजनविषये नारीविषये च अनुभूतिपाण्डित्यमिति यावत्, सौकुमार्य्यं—कोमलाङ्गत्वं, वैदग्ध्यञ्च सौकुमार्य्यञ्च ते वैदग्ध्यसौकुमार्य्ये (द्वन्द्व०), अद्भुते—आश्चर्य्ये, वैदग्ध्यसौकुमार्य्ये येषां ते अद्भुतवैदग्ध्यसौकुमार्य्याः,—विस्मयजनकनैपुण्यसुकोमलभावाः इत्यर्थः (विश०। बहुव्री०), अमी, भ्रातर इति शेषः। हेम्नः,—सुवर्णस्य, लक्षत्रयं—त्रिलक्षं हेमलक्षत्रयं—त्रिलक्षसौवर्णमुद्रामित्यर्थः।

(स) स्कन्धे—अंसदेशे, निषण्णः,—अवस्थितः (नि+सद+क्तः) स्कन्धनिषण्णः,—स्कन्धस्थितः (विश०। ७मी तत्पु०)।

तं राजानमपृच्छत्,—"राजन्! पूर्वोक्तं शापं विचिन्त्य त्वम् एषां त्रयाणां कोऽधिकखण्डः इति ब्रूहि"। तदाकर्ण्य स धीमान् नृपतिस्तं वेतालं प्रत्यभाषत,—"अहमेतम् (ह) अकैतवं तूलिका-खण्डमधिकं मन्ये, यस्याङ्गे प्रगाढ़बाललाञ्छनं प्रत्यक्षमुद्गतं दृष्टम्; इतराभ्यान्तु कदाचित् तत्पूर्वमवगतं सम्भवेत्"। इत्युक्तवतो नरपतेः स्कन्धात् स वेतालः प्राग्वत् प्रययौ। राजाऽपि तमानेतुं पुनः शिंशपातरुमूले तमन्वगात्।

---

# अथ नवमकथा।

तत: स राजा पुन: शिंशपान्तिकं गत्वा तं वेतालं स्कन्धे-मादाय प्रस्थितस्तेन वेतालेन (क) प्राग्वदभ्यधायि,—"राजन्! कथमस्मिन् श्मशाने निशि ते एतादृक् प्रयासः? भूतसङ्कुलं रात्रिभीषणं चिताधूमैरिव ध्वान्तैर्निरुद्धं पितृकाननं किं नेक्षसे?

---

(ह) अकैतवं—कैतवविरहितम्, अकपटमित्यर्थः। प्रगाढ़ं—सुदृढ़, गभीर-मित्यर्थः, बालस्य—केशस्य, लाञ्छनं—चिह्नं ("कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्" इत्यमरः) प्रगाढ़बाललाञ्छनं—दृढ़विद्धकेशरेखामित्यर्थः (६ष्ठी तत्पु०)।

---

(क) प्राग्वत्—पूर्ववत्, अभ्यधायि—अवादि [ अभि+धा+कर्म्मणि लुङ्-त "चिण् भावकर्म्मणोः" (३।१।६६ पा०) इति चिण् "आतो युक् चिण्कृतोः" (७।३।३३ पा०) इति युक् "चिणो लुक्" (६।४।१०४ पा०) इति चिणः परस्य लुक् ]। प्रयासः,—प्रयत्नः, आगमनार्थमिति शेषः, भूतैः,—देवयोनिविशेषैः, सङ्कुलं—व्याप्तं ("सङ्कुलं त्रिषु विस्पष्टवाचि व्याप्ते" इति मेदिनी) भूतसङ्कुलं—भूताकीर्णं (विश०। ३या तत्पु०), रात्र्या—रजन्या हेतुना, रात्रौ वा, भीषणं—

तस्य भिक्षोरनुरोधतः कथमीदृश्या प्रयासेन आत्मानं खेदयसि ? तदिमं मे प्रश्नं मार्गविनोदकं शृणु,—

अवन्तीषु देवनिर्मिता ( ख ) शैवी तनुरिव उद्दामभोगभूतिविभूषिता पद्मावती, भोगवती हिरण्यवतीति च कृतादिषु त्रिषु युगेषु पुरी क्रमशः आसीत्। कलौ च उज्जयिनीति पुरी अस्ति, तस्यामासीत् वीरदेवो नाम नृपतिः, तस्य पद्मरतिनाम्नी ( ग ) महादेवी आसीत्।

भयङ्करं रात्रिभीषणं—निशादारुणं ( विश० । ३या तत्पु० ७मी तत्पु० वा )। ध्वान्तैः,—अन्धकारैः ( "अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः ), निरुद्धं—नष्टम्, अदृष्टमित्यर्थः, आहतमित्यर्थो वा, पितृकाननं—पितृवनं, श्मशानमित्यर्थः ( "श्मशानं स्यात् पितृवनम्" इत्यमरः )। अनुरोधतः,—अनुरोधात्, इष्टसम्पादनेच्छावशादित्यर्थः ( हेतौ ५मी० । पञ्चम्यास्तसिल् )। अयमिव पश्यति इति ईदृक् तेन ईदृशा—एवम्प्रकारेण [ इदम्+दृश्+"त्यदादिषु दृशोऽनालोचने कञ्च" ( ३।२।६० पा० ) इति क्विन् "इदंकिमोरीश्की" ( ६।३।९० पा० ) इति इदम ईश्-भावः ]। खेदयसि—क्लेशयसि ( खिद+णिच्+लट्-सिप् )।

( ख ) शिवस्य इयं शैवी—शिवसम्बन्धिनी [ विश० । शिव+"तस्येदम्" ( ४।३।१२० पा० ) इत्यण्, ततः स्त्रियां ङीप् ]। उद्दामेन—उत्कटेन, भीषणेनेति यावत्, अन्यत्र,—प्रचुरेणेत्यर्थः, भोगेन—सर्पशरीरेण, सर्पफणया वा, अन्यत्र—धनेन ( "भोगः सुखे धने चाहेः शरीरफणयोरपि" इति मेदिनी ), भूत्या—भस्मना, अन्यत्र—सम्पत्त्या ( "भूतिर्भस्मनि सम्पत्तिहस्तिशृङ्गारयोः स्त्रियाम्" इति मेदिनी ), यद्वा,—उद्दामाभ्याम्—अत्युग्राभ्यां, प्रभूताभ्यामित्यर्थः, भोगभूतिभ्याम् उद्दामभोगभूतिभ्यां, विभूषिता—कृतमण्डना, अन्यत्र—शोभिता उद्दामभोगभूतिविभूषिता—भीषणसर्प-भस्मालङ्कृता, अन्यत्र—प्रभूतधनसम्पत्तिसमन्विता ( विश० । ३या तत्पु० )। कृतं—युगः, सत्ययुग इति यावत्, तत् आदिर्येषां तादृशेषु कृतादिषु—सत्यत्रेताद्वापरेषु इत्यर्थः, उद्दामभोगभूतिविभूषिता शैवी तनुरिव कृतादिषु त्रिषु युगेषु क्रमशः उद्दामभोगभूतिविभूषिता देवनिर्मिता पद्मावती भोगवती हिरण्यवतीति पुरी आसीत् इत्यन्वयः।

( ग ) महादेवी—पट्टमहिषी।

एकदा राजा (घ) तया साकं मन्दाकिनीतटे पुत्रकाम्यया तपसा हरमाराधयामास, चिरञ्च तपश्चरन् कदाचित् परितुष्ट-शङ्करोदिताम् आकाशवाणीं शुश्राव,—"राजन्! उत्पत्स्यते ते पुत्रः शूरः कुलोद्वहः, कन्या चैका लावण्येन जिताप्सराः"। एतां (ङ) नाभसीं वाणीं श्रुत्वा स भूपतिरभीष्टसिद्धिप्रहृष्टः महिष्या सम स्वनगरीमाययौ। तस्य प्रथमं पद्मरत्यां देव्यां शूरदेवो नाम पुत्रः (च) तदनु च अनङ्गरतिर्नाम अनङ्गमोहिनी कन्या समजायत। क्रमेण च तस्यां वृद्धिं गतायां

(घ) तया—महादेव्या पद्मरत्या (सहार्थक-साकंशब्दयोगात् ३या०), साकं—सह ("साकं सार्द्धं समं सह" इत्यमरः), मन्दाकिनीतटे—गङ्गातीरे, पुत्रकाम्यया—निजपुत्रेच्छया [आत्मनः पुत्रमिच्छतीति पुत्र+"काम्यच्च" (३।१।९ पा०) इति काम्यच् "अ प्रत्ययात्" (३।३।१०२ पा०) इति स्त्रियाम् अकारः, ततः टाप् पुत्रकाम्या तया]। आराधयामास—अर्चयामास (आ+राध+णिच्+लिट्-आम्), चिरं—दीर्घकालम् (अव्य०)। परितुष्टेन—सेवाप्रीतेन, शङ्करेण—हरेण, उदिताम्—उक्ता [वद+क्त "वचिस्वपियजादीनां किति" (६।१।१५ पा०) इति सम्प्रसारणम्] परितुष्टशङ्करोदिता—सन्तुष्टशिवभाषिता (विश०। बहुव्री०)। उत्पत्स्यते—जनिष्यते (उत्+पद+लृट्-स्यते)। कुलं—वंशम्, उद्वहति—धारयतीति कुलोद्वहः—वंशधरः, यद्वा,—कुलम् उत—ऊर्द्ध्वं, वहति—नयतीति कुलोद्वहः,—वंशोन्नतिकरः, विविधसत्कार्यानुष्ठानेन वंशस्य गौरववर्द्धकः इत्यर्थः (विश०। कुल+उत+वह+पचाद्यच्)। जिताः,—पराभूताः, अप्सरसः,—स्वर्गवेश्याः यया सा जिताप्सरा,—अप्सरोविजयिनी, अतीव सुरूपा इति भावः (विश०। बहुव्री०)।

(ङ) नभसः,—आकाशस्य इमा नाभसीम्—आकाशीया [नभस्+"तस्येदम्" (४।३।१२० पा०) इति अण्, स्त्रियां ङीप्]। अभीष्टसिद्ध्या—मनोरथपूर्त्या, प्रहृष्टः,—आनन्दितः अभीष्टसिद्धिप्रहृष्टः,—अभिलाषपूरणजन्यानन्दितः (विश०। ३या तत्पु०), महिष्या (सहार्थकसमशब्दयोगात् ३या०), सम—सह।

(च) तदनु—तत्पश्चात्। अनङ्गं—कामं, मोहयति—मूर्च्छयतीति अनङ्गमोहिनी—कामस्यापि चित्तहारिणी (विश०)।

स राजा (छ) सदृशं वरं प्रेप्सुः पृथिवीमण्डलस्थान् सर्वान् नृपतीन् पटलिखितानानाययत्। यदा तेषु एकोऽपि तस्याः सदृशो न (ज) प्रत्यभासत, तदा स राजा वात्सल्यात् तां सुतामभाषत,—"वत्से! अहं तावत् ते सदृशं वरं न पश्यामि, तत् सर्वान् नृपान् समानाय्य स्वयंवरं कुरुष्व"। एतत् पितृवचनमाकर्ण्य सा राजपुत्री जगाद,—"तात! स्वयंवरम् (झ) अतिक्लेपणं, तदहं नेच्छामि; यो हि युवा सुरूपः केवलं पूर्णं विज्ञानं वेत्ति, तस्मै त्वया अहं देया, न्यूनाधिकेन मे नास्ति प्रयोजनम्"।

---

(छ) समान इव पश्यतीति तं सदृशं—कन्याऽनुरूपमित्यर्थः [विश०। समान+दृश+"समानान्ययोश्चेति वाच्यं" (वा०) इति कञ् "दृग्दृशवतुषु" (६।३।८९ पा०) इति समानस्य सभावः]। प्रेप्सुः,—लिप्सुः, प्राप्तुमिच्छुः सन् इत्यर्थः [प्र+आप्+सन् "आप्ज्ञप्यृधामीत्" (७।४।५५ पा०) इति आप्नोतेरच ईत् "अत्र लोपोऽभ्यासस्य" (७।४।५८ पा०) इत्यभ्यासलोपः "सनाशंसभिक्ष उः" (३।२।१६८ पा०) इति उः], पटे—चित्रपटे ("पटश्चित्रपटे वस्त्रेऽस्त्री पियालद्रुमे पुमान्" इति मेदिनी), लिखितान्—अङ्कितान् पटलिखितान्—आलेख्याङ्कितान् (विश०। ७मी तत्पु०), आनाययत्—प्रापयत्, आनीतवानित्यर्थः (आ+नी+णिच्+लङ्-द), चित्रकरैरिति शेषः।

(ज) प्रत्यभासत—अशोभत इत्यर्थः (प्रति+भास+लङ्-त))। वत्सलस्य—स्निग्धस्य, स्नेहयुक्तस्येत्यर्थः, भावः वात्सल्यं तस्मात् वात्सल्यात्—स्निग्धभावात्, स्नेहादित्यर्थः (हेतौ ५मी०)। वत्से!—पुत्रि! ("वत्सः पुत्रादिवर्षयोः। तर्णके नोरसि क्लीबम्" इति विश्वः)। समानाय्य—समानाययित्वा (सम्+आ+नी+णिच+ल्यप्), स्वयम्—आत्मना, न तु पित्रादिनिर्देशेनेति भावः, वरः,—वरणं, पतिग्रहणमिति यावत्. तं स्वयंवरं—निजानुरूपपतिग्रहणं (स्वयं+वृ+पचाद्यच्)।

(झ) अतिक्लेपणम्—अतीवक्लेशाकरं [क्ली+णिच्+"अर्त्तिह्रीव्ली—" (७।३।३६ पा०) इति पुक्+ल्युट्]। केवलम्—एकम्, एकमात्रमिति यावत् ("एकं मुख्यान्यकेवलाः" इत्यमरः), पूर्णं—सम्पूर्णं, न तु कियन्मात्रमिति भावः, विज्ञानं—शिल्पविषयकं शास्त्रविषयकं वा बोधं ("मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्प-

इति दुहितुर्वचः समाकर्ण्य यावत् स भूपतिस्तादृशं वरम् अन्विष्यति, तावत् तत् लोकमुखात् विदित्वा चत्वारो वीरा विज्ञानिनो (ञ) भव्याः पुरुषा दक्षिणापथात् तं राजानमाययुः। ते च राज्ञा (ट) सत्कृताः एकैकशः स्वं स्वं विज्ञानं राजसमक्षं शशंसुः। तेषामेको जगाद,—"अहं तावत् शूद्रः (ठ) नाम्ना पञ्चफुट्टिकः; एकोऽहमन्वहं पञ्च अग्र्याणि वसनयुग्मानि करोमि, तेषामेकं देवाय प्रयच्छामि, एकं द्विजाय, एकमात्मनः कृते परिगृह्णामि, एकञ्च भार्य्यायै ( या मे भवति ) ददामि; पञ्चमञ्च विक्रीय आहारादिकं विदधामि। तदेवं विज्ञानिने मह्यम् अनङ्गरतिस्ते दुहिता दीयताम्" इति।

---

शास्त्रयोः" इत्यमरः ), यद्वा,—विज्ञानं—ज्ञानं, कर्म्म वा ( "विज्ञानं कार्म्मणे ज्ञाने" इति हैमः ), यः एकमात्रं शिल्पम्, एकमात्रं शास्त्रं वा सम्पूर्णं वेत्ति, न तु असम्पूर्णम्, अथवा यः एकविषयकं ज्ञानम्, एकमात्रं कर्म्म वा सुचारुरूपं वेत्तीति समुदायार्थः। देया—समर्प्या [ दा + कर्म्मणि यत् "ईद्यति" ( ६।४।६५ पा० ) इति आत ईद्भावे गुणः, ततः स्त्रियां टाप् ], न्यूनः,—हीनः, असम्पूर्णविज्ञानविदिति भावः, अधिकः,—अतिरिक्तः, एकमात्रविज्ञानाधिकविज्ञानविदिति भावः, तेन न्यूनाधिकेन—हीनातिरिक्तविज्ञानिनेत्यर्थः ( करणे ३या० )।

( ञ ) भव्याः,—योग्याः, कन्याऽनुरूपा इति यावत् ( "भव्यं शुभे च सत्ये च योग्ये भाविनि तु त्रिषु। कर्म्मरङ्गतरौ पुंसि स्त्रियां करिकणोमयोः॥ ओवमस्थनि—" इति मेदिनी )। दक्षिणापथात्—अवन्तिनगरीमतिक्रम्य दक्षिणदिग्वर्त्तिदेशभेदात् ( अपादाने ५मी० )।

( ट ) सत्कृताः,—कृतादराः, सम्मानिता इति यावत् ( विश० ), एकः एकः एकैकशः,—प्रत्येकशः, पृथक् पृथगित्यर्थः [ "सङ्ख्यैकवचनाच्च वीप्सायाम्" ( ५।४।४३ पा० ) इति एकशब्दात् वीप्सायां शस् ], स्वं स्वं—निजं निजम्।

( ठ ) नाम्ना—नामधेयेन ( प्रकृत्यादिभ्यः ३या० )। अहनि अहनि अन्वहं —प्रतिदिनं [ वीप्सायामव्ययी०। अनु + अहन् + "नपुंसकादन्यतरस्याम्" ( ५।४।१०९ पा० ) इति टच् "नस्तद्धिते" ( ६।४।१४४ पा० ) इति टिलोपः ]। देवाय ( सम्प्र० चतुर्थी० ), प्रयच्छामि—ददामि [ प्र + दाण् + लट् मिप् "पाघ्राध्माऽस्थाम्नादाण्—"

द्वितीयोऽब्रवीत्,—"अहं तावत् वैश्यः भाषाज्ञो नाम सर्वेषां मृगपक्षिणां (ङ) रुतं वेद्मि, तदेषा राजपुत्री मह्यं दीयताम्" इति।

ततस्तृतीयोऽभाषत,—"अहं खड्गधरो नाम भुजवीर्य्यशाली क्षत्रियः, खड्गविद्याविज्ञाने अस्यां क्षितौ मे (ढ) प्रतिमल्लो नास्ति; हे राजन्! तदेषा तनया ते मह्यं दीयताम्" इति।

अतश्चतुर्थोऽब्रवीत्,—"राजन्! अहं तावत् जीवदत्तो नाम विप्रः, मम चैतादृशं विज्ञानमस्ति यत्, मृतानपि जन्तून् आनीय आशु (ण) जीवतो दर्शयामि, तद्वीरचर्य्यासिद्धं माम् एषा ते तनया पतिं प्रपद्यताम्" इति। एवं ब्रुवतः तान् (त) दिव्यवेशाऽऽकृतीन् पश्यन् राजा वीरदेवः सुतया दोलाऽऽरूढ़ इवाभवत्"।

---

(७।३।७८ पा०) इति दाण्-दाधातोर्यच्छादेशः]। कृते—निमित्तम्। ददामि—दास्यामीत्यर्थः, ["वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (३।३।१३१ पा०) इति लट्]। पञ्चमं, वसनयुग्मनिति शेषः।

(ङ) रुतं—वाशितं, ध्वनिमित्यर्थः (रु+क्तः। "तिरश्चां वाशितं रुतम्" इत्यमरः)।

(ढ) प्रति—प्रतिरूपः, मल्लः,—बलीयान् ("मल्ल. पात्रे कपोले च मत्स्यभेदे बलीयसि" इति मेदिनी) प्रतिमल्लः,—तुल्यबलवान्, प्रतियोद्धा इति यावत् (प्रादिस०)।

(ण) जीवतः,—सजीवान् इत्यर्थः (विश०। जीव+शतृ जीवत्, तान्)। वीरचर्य्यया—वीराचारेण, तन्त्रोपदिष्टव्रतविशेषानुष्ठानेनेति यावत्, सिद्धं—सफलतां गतं, प्राप्तैश्वर्य्यमित्यर्थः, वीरचर्य्यासिद्धं—तन्त्रोक्तप्रक्रियाविशेषैरैश्वर्य्यवन्तं (विश०। ३या तत्पु०)। प्रपद्यतां—लभतां, स्वीकरोतु इत्यर्थः (प्र+पद+लोट्-ताम)।

(त) दिव्याः,—उदाराः, रमणीया इत्यर्थः ("दिव्यं लवङ्गे धात्र्यां स्त्री क्लीबे दिविभवे त्रिषु" इति मेदिनी), वेशाः,—नेपथ्यानि, वसनभूषणानीत्यर्थः ("नेपथ्ये ग्रहमात्रे च वेशो वेश्यागृहेऽपि च" इति रभसः), आकृतयः,—रूपाणि च येषां तान् दिव्यवेशाऽऽकृतीन्—सुपरिच्छदान् सुरूपांश्च इत्यर्थः (विश०। बहुव्री०)।

इति कथामाख्याय वेतालः राजानमप्राक्षीत्,—"राजन्! पूर्वोक्तं शापं स्मृत्वा ब्रूहि, (ध) एतेषां कस्मै कन्यैषा देया" इति। एतदाकर्ण्य राजा तं वेतालं प्रत्यवादीत्,—"भवान् केवलं कालक्षेपाय (द) मां मौनं त्याजयति, अन्यथा कोऽयं गहनः प्रश्नः? तदुच्यताम्; शूद्राय कुविन्दाय कथं क्षत्रिया दीयते, वैश्याय च? यच्च तद्गतं मृगादिभाषाविज्ञानं, तत् कस्मिन् कार्य्ये उपयुज्यते? विप्रेणापि तेन स्वकर्मप्रच्युतेन ऐन्द्रजालिकेन पतितेन वीरमानिना किम्? तस्मात् क्षत्रियायैव खड्गधराय विद्याशौर्य्यशालिने सा देया" इति। एतस्य

---

सुतया—कन्यया, सहेति शेषः, दोलायां—क्रीडार्थंदोलनयन्त्रविशेषे, यानविशेषे वा, आरूढः,—अधिष्ठितः दोलाऽऽरूढः,—इतस्ततः आन्दोलनशीलयन्त्रविशेषासीनः यानविशेषासीनो वा इत्यर्थः, दोलाऽऽरूढो यथा कदाचित् पुरतः कदाचित् पश्चात् पुनः पुनः आंदोल्यमानो भवति, तथा राजाऽपि समानगुणेषु तेषु कस्मै सुतां ददामि इति निश्चेतुमसामर्थ्यात् पुनः पुनः दोलायमानचेता अभवत् इति भावः।

(ध) एतेषां—पूर्वोक्तविज्ञानिचतुष्टयानां मध्ये (निर्द्धारणे ६ष्ठी०)।

(द) माम् इति (अणिकर्त्तुः कर्मसंज्ञा), अहं मौनं त्यजामि, भवान् मां मौनं त्याजयति—विक्षेपयति (त्यज+णिच्+लट्-तिप्)। गहनः,—दुर्बोधः इत्यर्थः। कुविन्दाय—तन्तुवायाय ("तन्तुवायः कुविन्दः स्यात्" इत्यमरः)। तद्गतं—वैश्यगतं, वैश्येन विज्ञातमित्यर्थः। स्वकर्मभ्यः,—ब्राह्मणोचितयजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपेभ्यः षट्कर्मभ्यः, प्रच्युतेन—स्खलितेन स्वकर्मप्रच्युतेन—क्रियाभ्रष्टेन (विशे०। ५मी तत्पु०), इन्द्रेण—कौशलाद्यैश्वर्य्येण, जालं—द्रष्टुर्नेत्रावरणं, यथास्थितवस्तुदर्शनाक्षमत्वसाधनमिति भावः, इन्द्रजालं—मन्त्रौषधादिना अन्यथास्थितस्य वस्तुनः अन्यथात्वेन दर्शनसाधनं कुहकमित्यर्थः, तेन जीवतीति तेन, इन्द्रजालं शिल्पमस्य इति वा तेन, ऐन्द्रजालिकेन—कुहकविद्याजीविना (विशे०। इन्द्रजाल+ठक्), पतितेन—क्रियालोपात् पातित्यदोषयुक्तेन (विशे०), आत्मानं वीरं मन्यते इति तेन वीरमानिना—अलीकवीराभिमानवता, अवीरेणेत्यर्थः [विशे०। वीर+मन+"आत्ममाने खश्च" (३।२।८३ पा०) इति णिनिः। अत्र श्रवंत कारणे ६ष्ठा०]।

वचो (घ) निशम्य स वेतालः योगबलात् स्कन्धदेशात् सहसा प्रलम्बितः क्वापि जगाम। राजाऽपि तथैव तमनुययौ; (ङ) सोत्साहघने हि वीरहृदये न जातु खेदोऽन्तरं लभते।

---

## अथ दशमकथा।

ततश्च स राजा पुनः शिंशपामूलं गत्वा तं वेतालं तथैव स्कन्धमारोप्य सत्वरं कृतमौनः समुच्चचाल। (क) प्रयान्तञ्च तं स्कन्धवर्त्ती स वेतालोऽपृच्छत्,—"राजन्! श्रान्तोऽसि, तदिमां श्रान्तिहारिणीं कथां शृणु,—

आसीत् वीरबाहुर्नाम (ख) सकलभूपालशिरःसमभ्यर्चित-

---

(घ) निशम्य—श्रुत्वा (नि+शम+ल्यप्)। योगबलात—योगशक्तिमाश्रित्येत्यर्थः, वेतालस्य दैवयोनिविशेषत्वादिति भावः (ल्यब्लोपे पञ्चमी०)।

(ङ) उत्साहः,—अध्यवसायः, आरब्धकार्य्यं साधयाम्येव इत्येवंरूपः सङ्कल्पः इत्यर्थः, घनः,—दार्ढ्यं, सङ्कल्पस्य दृढता इत्यर्थः, न तु शिथिलसङ्कल्पता इति भावः ("घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे। सङ्घे मुस्ते घनं मध्यनृत्यवाद्यप्रभेदयोः"॥ इति हैमः), उत्साहश्च घनश्च उत्साहघनौ, ताभ्यां सह वर्त्तमाने सोत्साहघने—उद्यमदृढतासंयुक्ते इत्यर्थः, यद्वा,—उत्साहेन घनः,—दृढः, दृढोत्साह इत्यर्थः, तेन सह वर्त्तमाने, अथवा,—उत्साहेन घनः,—सान्द्रः, निरन्तरः इत्यर्थः, पूर्ण इति यावत, पूर्णोत्साह इत्यर्थः, तेन सह विद्यमाने (विशे०। बहुव्रीे०)। जातु—कदाचित्, खेदः,—दैन्यम्, अवसादः इत्यर्थः, अन्तरम्—अवकाशं, स्थानमित्यर्थः।

---

(क) प्रयान्तं—गच्छन्तं (प्र+या+शतृ, तम्)

(ख) सकलानां—सर्वेषां, भूपालानां—राज्ञां, शिरोभिः,—मस्तकैः, यद्वा,—

शासनः पाकशासन इवापरो नृपतिः, तस्यामङ्गपुरं नाम नगरवरमभवत्। तत्रार्थदत्तो नाम महाधनः (ग) सार्थवाहः प्रतिवसति स्म, तस्य धनदत्तो नाम ज्येष्ठः पुत्रः कनीयसी च कन्या मदनसेना नाम समजायत।

एकदा धर्मदत्तो नाम कस्यचित् (घ) वणिक्पतेस्तनयः तां लावण्यरसनिर्भरां कुचकुम्भाग्रवलित्रितयरञ्जितां यौवनद्विरदस्येव लीलामज्जनवापिकां वीक्ष्य सद्यः स्मरबाणौघपाता-

---

सकलैः भूपालैः, शिरसा—नतमस्तकेन, समभ्यर्च्चितं—सम्पूजितं, समादरेण गृहीतमिति यावत, शासनम्—आज्ञा ("शासनं राजदत्तोर्व्यां लेखाऽऽज्ञाशास्त्रशास्तिषु" इति मेदिनी) यस्य सः सकलभूपालशिरःसमभ्यर्च्चितशासनः,—सर्वराजपूजिताऽऽदेशः (विश०। बहुव्री०), पाकः,—असुरविशेषः, तस्य शासनः,—निहन्ता पाकशासनः,—इन्द्रः, अपरः,—द्वितीयः, अपरः पाकशासन इव इत्यन्वयः। नगरवरं—नगरश्रेष्ठं, श्रेष्ठनगरमित्यर्थः, अभवत्—आसीदित्यर्थः।

(ग) सार्थं—समूहं, धनसमूहं द्रव्यसमूहं वा इत्यर्थः, वहति यः सः सार्थवाहः,—वणिक् [ सार्थ+वह+"कर्म्मण्यण्" (३।२।१ पा०) इत्यण्। "वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्" इत्यमरः ]।

(घ) वणिक्पतेः,—वणिक्श्रेष्ठस्य। लावण्यं—"मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते"॥ इत्युक्तलक्षणकान्तिविशेषः, तदेव रसः,—जलं ("रसो गन्धरसे जले" इति मेदिनी), तस्य निर्भरः,—वारिप्रवाहः, स इव इत्यर्थः, तां लावण्यरसनिर्भरां—लावण्यवारिभराम्, अतीव लावण्यवतीमित्यर्थः (विश०। ६ष्ठी तत्पु०), कुचौ—स्तनौ, कुम्भौ—घटौ हस्तिशिरःस्थमांसपिण्डौ इव वा ("कुम्भौ घटेभमूर्द्धांशौ" इत्यमरः), तयोरग्रं कुचकुम्भाग्र—चुचुक, वलिः,—जठरावयवविशेषः ("वलिर्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्री तु जरया श्लथचर्म्मणि॥ गृहदारुप्रभेदे च जठरावयवेऽपि च" इति मेदिनी), तस्याः त्रितयं—त्रिसङ्ख्यकं वलित्रितयम्—उदररेखात्रयं, कुचकुम्भाग्रञ्च वलित्रितयञ्च कुचकुम्भाग्रवलित्रितये (द्वन्द्व०), ताभ्यां रञ्जितां—शोभितां कुचकुम्भाग्रवलित्रितयरञ्जितां—चुचुकत्रिवलिशोभितां (विश०। ३या तत्पु०), यौवनं—तारुण्यमेव, द्विरदः,—हस्ती, दुर्वारवेगत्वादिति भावः,

पहृतचेतनः समपद्यत,—(ङ) "अहो ! मारेण धाराऽधिरूढ़ेन अमुना रूपेण द्योतिता मल्ली मे हृदयं भेत्तुमिव निर्मिता"। इत्येवं प्रासादाग्रमारूढ़ां तां दृष्ट्वा चिन्तयतः (च) चक्राह्वस्येव तस्य वासरोऽतिचक्राम।

---

तस्य यौवनद्विरदस्य—तारुण्यगजस्य, लीलार्थं—क्रीडार्थं, जलक्रीडार्थञ्च, मज्जनवापिका—स्नानसरः, तां तादृशीं लीलामज्जनवापिका—क्रीडासरसीम्, इव इत्युपमानान्वयः; द्विरदो यथा सरसि अवगाह्य क्रीडति, तथा यौवनमपि लावण्य-रसनिर्भरे निमज्ज्य विक्रीडिष्यति (विश०। ४र्थी तत्पु०)। सद्यः,—तत्क्षणं, यौगपद्येनैवेत्यर्थः, स्मरस्य—कामस्य, बाणौघानां—शरसमूहानां, पञ्चानामेव बाणानामित्यर्थः, पातेन—पतनेन, आघातेनेत्यर्थः, अपहृता—चोरिता, विनष्टा इत्यर्थः, चेतना—संवित् यस्य तादृशः स्मरबाणौघपातापहृतचेतनः,—कामशराघात-विनष्टसंज्ञः (विश०। बहुव्री०), समपद्यत—समजायत (सम्+पद+लङ्-त)।

(ङ) अहो!—खेदे विस्मये वा, मारेण—स्मरेण, कामेनेत्यर्थः ("मारो मृत्यौ स्मरे विघ्ने" इति मेदिनी), धारा—सैन्याग्रिमस्कन्धः, सैन्यपुरोभागः इत्यथः ("धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके।··· खड्गादेर्निशितमुखे" इति मेदिनी), तत्र अधिरूढेन—अधिष्ठितेन धाराऽधिरूढेन—सैन्याग्रस्थितेन, सेनापतिरूपिणा इत्यर्थः (मारेण इत्यस्य विश०। ७मी तत्पु०), अमुना रूपेण—सौन्दर्य्येण, द्योतिता—प्रकाशिता, मल्ली—मल्लिकापुष्पं, मल्लिकापुष्पवत् सुकोमला मनोहारिणी च इत्यर्थः। भेत्तुं—वेद्धुं (भिद+तुमुन्), कामदेवः सैनापत्यं गतः मल्लिकापुष्पमेव बृंहण-सौन्दर्य्येण परिवर्त्तितं कृत्वा मम हृदयं वेद्धुं निर्मितवान् इति समुदायार्थः, कुसुम-सुकुमाराऽपि इयं निशितशरवत् मम हृदयं पीडयति, इत्यहो! इति भावः; यद्वा,—धारा—खड्गादेर्निशितमुखं, तामधिरूढ़ेन—तत्त्वं गतेन, धारात्वं प्राप्ते-नेत्यर्थः, धाराऽधिरूढ़ेन—तीक्ष्णाग्रखड्गादिरूपिणा, हृदयभेदकसाधर्म्यादिति भावः (अमुना रूपेणेत्यस्य विश०। २या तत्पु०)।

(च) चक्राह्वस्येव—चक्रवाकाख्यपक्षिविशेषस्य इव, निशि प्रियाविरह-विधुरस्येति भावः, चक्रवाकदम्पती रात्रौ परस्परमेकत्रावस्थातुं न शक्नुतः, नद्याः जलाशयस्य वा एकस्मिन् तीरे चक्रवाकः अपरस्मिन् चक्रवाकी रात्रौ अवस्थाय प्रभाते पुनः संयुज्येते इति प्रसिद्धिः। वासरः,—दिवसः, अतिचक्राम—अतीयाय, अपक्रान्तवानित्यर्थः, रजनी समागतवती इति भावः (अति+क्रम+लिट्-णल्);

ततः सा मदनसेना (छ) चित्तञ्च तस्य धर्म्मदत्तस्य तद्दर्शन-दुःखाग्निसन्तप्तं गृहान्तरं विवेश। (ज) भास्वांश्च तद्दर्शन-जनितरागोऽपराम्बुधौ निपपात। ताञ्च सुमुखीं (झ) नक्तम् अभ्यन्तरागतां दृष्ट्वा तन्मुखाब्जविनिर्जितश्चन्द्रः शनैरुदगात्। धर्म्मदत्तश्च तावत् गृहं गत्वा तामनुचिन्तयन् (ञ) शयने

विरहसम्पादनात् रजनीसमागमो यथा चक्रवाकस्य दुःखकरः, वासराभ्युदयश्च मिलनसम्पादनात् तथा सुखकरः, किन्तु सुखवासरो मुहूर्त्तमिव अतिगच्छति, दर्शनपिपासा च न पूर्णतृप्तिं लभते, एवं धर्म्मदत्तस्यापि मदनसेनादर्शनसुयोग-सम्पादकः सुखवासरः मुहूर्त्तमिव अपजगाम, अदर्शनसम्पादिका सुदीर्घा दुःखरजनी च समायाता इति तात्पर्य्यम्।

(छ) चित्तं—मनः, मदनसेनया अपहृतमिति भावः, धर्म्मदत्तस्य इत्यनेन अन्वयः। तस्याः,—मदनसेनायाः, दर्शनेन—आलोकेन, यत् दुःखं—कामबाधा-कृतिजनितकष्टं, तदेव अग्निः,—अनलः, तेन सन्तप्तं—प्रज्वलितं तद्दर्शनदुःखाग्नि-सन्तप्तं—तदप्राप्तिनिमित्तकक्लेशानलदग्धमित्यर्थः (चित्तम् इत्यस्य विश०), गृहान्तरं विवेश इति मदनसेनाया गृहमध्यप्रवेशात् तयाऽपहृतस्य धर्म्मदत्तचित्तस्यापि गृहमध्य-प्रवेशो बोद्धव्यः इति भावः।

(ज) भास्वान्—सूर्य्यः (भास+मतुप्), तस्याः,—मदनसेनायाः, दर्शनात् जनितः,—उत्पन्नः, रागः,—अनुरागः रक्तवर्णता च ("रागस्तु मात्सर्य्ये लोहिता-दिषु। क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च" इति मेदिनी) यस्य तादृशः तद्दर्शनजनितरागः,—तां दृष्ट्वा समुत्पन्नानुरागः, अस्तगमनकालिकरक्तवर्णश्च, तादृशः सन् इत्यर्थः, अपराम्बुधौ—पश्चिमसमुद्रे, निपपात, तदप्राप्तिजनितदुःखादिति भावः; अस्तमितः सूर्य्यः समुद्रगर्भे निमज्जतीति प्रतीतिर्जायते दूरात्।

(झ) नक्तं—रात्रौ। तस्याः,—मदनसेनायाः, मुखाब्जात्—मुखपद्मात्, विनि-र्जितः,—पराभूतः, अत एव पलायित इति भावः, तन्मुखाब्जविनिर्जितः,—तद्वदन-कमलपराभूतः (विश०। ३मी तत्पु०)। शनैः,—मन्दं मन्दम्, उदगात्—उदैगमत् (उत्+इ+लुङ्-द), तस्याः मुखशोभया निर्जितश्चन्द्रः तदग्रतः स्थातुं लज्जितः सन् एतावन्तं कालमन्तराले अतिष्ठत्, इदानीं तां स्वागारान्तरगतां दृष्ट्वा पुनः शने-रुदागतवान् इति तात्पर्य्यम्।

(ञ) शयने—शय्यायां ("शयनं सुरते निद्राशय्ययोश्च नपुंसकम्" इति

चन्द्रपादाहतो लुठन् निपत्य तस्थौ ; यत्नेन सखिभिर्बन्धुभिश्च पृच्छ्यमानो न किञ्चित् कथयामास। निशि च कष्टात् प्राप्तनिद्रः (ट) तथैव तां पश्यन् अनुनयंश्च समुत्सुकः किमिव नाकरोत् ; प्रातश्च प्रबुद्धो गत्वा रहसि स सख्यौ प्रतीक्षमाणाम् उद्यानवर्त्तिनीं मदनसेनां ददर्श, उपेत्य च परिष्वङ्गलालसः प्रेमपेशलैर्वचोभिश्चरणानतः उपच्छन्दयामास।

साऽब्रवीत्,—"अहं (ठ) कन्या, साम्प्रतं ते परदाराश्च,

---

मेदिनी ), चन्द्रस्य पादेन—किरणेन, आहतः,—पीड़ितः चन्द्रपादाहतः,—चन्द्रांशु-सन्तप्तः, चन्द्रकिरणस्य विरहोद्दीपकत्वादिति भावः ; लुठन्—इतस्ततो गात्राणि विक्षिपन् ( लुठ+शतृ )। सखिभिः,—सुहृद्भिः ( "अथ मित्रं सखा सुहृत्" इत्यमरः ), बन्धुभिः,—स्वजनैः ( "सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः ), यद्वा,—सखिभिः,—सहायैः, सहचरैरिति यावत् ("सखा मित्रे सहाये ना वयस्यायां सखी मता" इति मेदिनी ), बन्धुभिः,—मित्रैः ( "बन्धुः स्यात् पुंसि बन्धूके मित्रे भ्रातरि बान्धवे" इति मेदिनी ), पृच्छ्यमानः,—जिज्ञास्यमानः ( प्रच्छ+कर्म्मणि शानच् )।

(ट) तथैव—पूर्ववदेव, मदनसेना प्रासादाग्रमारुह्य तत्पुरतस्तिष्ठति इत्येवं-रूपेणेत्यर्थः। पश्यन्, स्वप्ने इति भावः। समुत्सुकः,—समुत्कण्ठितः, तत्प्राप्तिनिमित्तक इति भावः ; यद्वा,—इष्टार्थोद्युक्तः, तदनुनयेन निजाभिलाषपूरणार्थोद्यमवान् सन्नित्यर्थः ( विश०। "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः )। प्रबुद्धः,—जागरितः ( विश०। प्र+बुध+क्तः )। रहसि—निर्जने। उपेत्य—तत्समीपं गत्वा ( उप+आ+इ+ल्यप् ), परिष्वङ्गाय—संश्लेषाय, आलिङ्गनाय इत्यर्थः, परिष्वङ्गे वा ("परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्" इत्यमरः ), लालसा—अतीव तृष्णा, औत्सुक्यं वा ("लालसौत्सुक्यतृष्णातिरेकयाञ्चासु च द्वयोः" इति विश्वः ) यस्य तादृशः परिष्वङ्ग-लालसः,—आलिङ्गनकामः सन् इत्यर्थः ( विश०। बहुव्री० ), प्रेम्णा—अनुरागेण, पेशलैः,—चारुभिः, मनोहरैरित्यर्थः ( "चारौ दक्षे च पेशलः" इत्यमरः ), प्रेमपेशलैः,—अनुरागमधुरैः ( विश०। तृया तत्पु० )। उपच्छन्दयामास—प्रार्थयामास, तां प्रतिरूपेण ग्रहणार्थम् अनुरुरोधेत्यर्थः ( उप+छन्द+णिच्+लिट्-आम् )।

(ठ) कन्या—कुमारी, अनूढेति यावत् ("कन्या कुमारी" इत्यमरः ), साम्प्रतम्

यतोऽहं पित्रा समुद्रदत्ताय वणिजे वाचा दत्ता, कतिपयैरेव दिनैर्विवाहो मे भविता, तत् तूष्णीं गच्छ, मा कश्चित् पश्येत्, ततो दोषो भवेत्"। इत्युक्तस्तया (ड) त्यक्तश्च स धर्मदत्तस्तां जगाद,—"सुन्दरि! यदस्तु, (ढ) त्वां विना नाहं जीवेयम्"। तदाकर्ण्य सा वणिक्सुता (ण) कन्याभावदूषणभयाऽऽकुला तमुवाच,—"तर्हि विवाहो मे तावत् सम्पद्यतां, पिता मे चिरकाङ्क्षितं कन्यादानफलं लभतां, ततोऽहं त्वां निश्चितं प्रणयेन

—अधुना (अव्य०)। परदाराः,—परस्त्री ("अथ पुं भूम्नि दाराः" इत्यमरवचनात् दारशब्दस्य पुंस्त्वं बहुवचनत्वञ्चावगन्तव्यम्)। वाचा—वाक्येन, न तु विवाहविधिना इति भावः, दत्ता—समर्पिता, अहं वाग्दत्ता अभवमित्यर्थः, कन्यामिमां तुभ्यमहं विवाहविधिना दास्यामि, इत्येवंरूपेण पित्रादिभिः दातुं सङ्कल्पिता कन्या वाग्दत्ता, तस्या अन्येन सह विवाहः गर्हितः इति शास्त्रकृतां मतम्; कारणवशात् भवति चेदन्येन परिणयः, तदा पातित्यं तस्या जायते इति बोध्यम्); कतिपयैरेव दिनैः (प्रकृत्यादिभ्यः ३या०)। भविता [भू+"अनद्यतने लुट्" (३।३।१५ पा०) इति लुट्-ता]।

(ड) त्यक्तः,—विसर्जितः, प्रत्याख्यात इत्यर्थः (त्यज+क्तः)।

(ढ) त्वां (विना-योगे २या०)। जीवेयं—प्राण्याम् [जीव+"आशंसावचने लिङ्" (३।३।१३४ पा०) इति आशंसायां विधिलिङ्-याम्]।

(ण) कन्याभावस्य—कुमारीत्वस्य, पुंसंसर्गाभावरूपस्येत्यर्थः, दूषणं—दुष्टिः, बलपूर्वकालिङ्गनादिना धर्मदत्तेन तद्विघटिताया अपनोदनमित्यर्थः, तस्मात् भयाऽऽकुला—व्यस्ता कन्याभावदूषणभयाऽऽकुला—सतीत्वनाशभयव्यस्ता (विण०। पञ्चमी-तत्पु०)। तर्हि—यद्येवं तदेत्यर्थः (अव्य०)। सम्पद्यतां—सिध्यतु, निष्पन्नो भवतु इत्यर्थः (सम्+पद+लोट्-ताम्)। कन्यादानेन—दुहितृसम्प्रदानेन, यत् फलं—पुण्यरूपमित्यर्थः (कन्यादानफलमुक्तं ब्रह्मवैवर्त्ते, तद् यथा,—"कन्यां ये तु प्रयच्छन्ति यथाशक्ति स्वलङ्कृताम्। विवाहकाले सम्प्राप्ते यथोक्तसदृशे वरे॥ क्रमात् कर्म क्रतुशतमनुपूर्वं लभन्ति ते॥ श्रुत्वा कन्यासम्प्रदानं पितरः प्रपितामहाः। विमुक्ताः सर्वपापेभ्यः ब्रह्मलोकं व्रजन्ति ते॥ ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति। ब्रह्मलोकं व्रजेच्छीघ्रं ब्रह्माद्यैः पूजितः सुरैः॥ दिव्येन तु विवाहेन

समुपैष्यामि"। तदाकर्ण्य सोऽब्रवीत्,—(त) "अन्यपूर्वा मम प्रिया नेष्टा, परभुक्ते कमले विमलेऽपि किं रतिर्जायते?"। इति तेनाभिहिता साऽवादीत्,—"तर्हि (थ) कृतोद्वाहैव पूर्वं त्वामुपयास्यामि, ततः पतिम्" इति। एवमुक्तवतीं तां वणिक्पुत्रीं प्रत्ययार्थं शपथेन सत्येन स धर्मदत्तः सम्बबन्ध। ततस्तेनोज्झिता सा समुद्विग्ना स्वं मन्दिरं विवेश।

अथ (द) प्राप्ते लग्नदिवसे निर्वृत्तोद्वाहमङ्गला सा गत्वा

वरस्तु कन्यां प्रयच्छति। भित्त्वा द्वारन्तु सूर्यस्य स्वर्गलोकञ्च गच्छति॥ गान्धर्वेण विवाहेन यस्तु कन्यां प्रयच्छति। गन्धर्वलोकमासाद्य क्रीडते देववच्चिरम्॥ शुल्केन दत्त्वा यो कन्या ता कन्या सम्यगर्च्यते। स किन्नरैश्च गन्धर्वैः क्रीडते कालमव्ययम्"॥ शुल्केन—गोमिथुनरूपशुल्कादपलक्षितेनार्षेणेत्यर्थः)। प्रणयेन—प्रेमभावेन, समुपैष्यामि—सङ्गमार्थे, त्वत्प्रणयिनीरूपेण तव समीपं गमिष्यामीत्यर्थः (सम्+उप+इ+लृट् स्यामि)।

(त) अन्यः,—अपरः पुरुषः, पूर्वः,—प्रथमः, प्रणयीति भावः, यस्याः सा अन्यपूर्वा—पूर्वप्रणयिनं विहाय पश्चात्कृततद्भिन्नप्रणयपात्रा, पुनर्भूरिति यावत् (विश०। बहुव्री०); यद्वा,—अन्येन—पुरुषान्तरेण, पूर्वं—प्रथमम्, उपभुक्तेति भावः, या सा अन्यपूर्वा—पुरुषान्तरोपभुक्ता (विश०। बहुव्री०), मम इति ["क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति वर्त्तमानविहितक्तप्रत्यययोगात् कर्त्तरि षष्ठी०), नेष्टा—न अभिमता, न प्रार्थिता इत्यर्थः, न प्रीतिजननीति भावः [इष+"मति-बुद्धिपूजार्थेभ्यश्च" (३।२।१८८ पा०) इति वर्त्तमाने निष्ठा]; परभुक्ते—अन्योपभुक्ते, कमले—पद्मे, जनान्तरोपभुक्तकमलमाल्ये इत्यर्थः। रतिः,—प्रीतिः, अनुराग इति यावत्।

(थ) कृतः,—सम्पादितः, उद्वाहः,—परिणयः यस्याः सा कृतोद्वाहा—सम्पन्नविवाहव्यापारा (विश०। बहुव्री०), पूर्वं—विवाहानन्तरं स्वामिसम्भाषणात् प्रागेव।

(द) प्राप्ते—उपस्थिते, लग्नेन—शुभराशीनामुदयेन इत्युक्ता ("राशीनामुदयो लग्नम्" इत्यमरः), दिवसे—विवाहार्थनिर्दिष्टदिने लग्नदिवसे—वैवाहिक-शुभराशियुक्ताह्नि (कर्म० ७मी०। इया तत्पु०), निर्वृत्त—निष्पन्न ("सिद्धे निर्वृत्त-निष्पन्नौ" इत्यमरः), उद्वाहाय—विवाहाय, विवाहकर्मसम्पादनायेत्यर्थः, मङ्गलं

पतिगृहं, नीता च उत्सवेन वासरं, निशि पत्या समं शयनीयगृहमध्यास्त ; तत्र शय्यानिषण्णाऽपि पराङ्मुखी समुद्रदत्तस्य तस्य पत्युः परिष्वङ्गं न प्रत्यपद्यत। तेनानुनीयमानाऽपि सा यदा (ध) उदश्रुः बभूव, तदा स नाहमस्या अभिमतोऽस्मीति हृदाऽकरोत्, अवादीच्च,—"सुन्दरि! यदि तेऽहं नाभिमतः, तत्ते योऽभिमतः, तं सेवितुं गच्छ"। तदाकर्ण्य सा नतमुखी शनैरवादीत्,—"नाथ! त्वं मे प्राणाधिकः प्रेयान्, किन्तु मे विज्ञप्तिमिमकां शृणु, सहर्षं मे अभयं प्रयच्छ, शपथञ्च कुरुष्व, आर्य्यपुत्र! अवक्तव्यमपि ते वदामि"। एवमुक्त-

—शुभकर्म यस्याः सा निर्वृत्तोद्वाहमङ्गला—सम्पन्नशुभपरिणयव्यापारा (विश०। बहुव्री०)। नीत्वा—अतिवाहयित्वा। वासरं—दिवसम्। शयनीयगृहम् ["अधिशीङ्स्थासां कर्म" (१।४।४६ पा०) इति आधारस्य कर्मत्वम्], अध्यास्त—अध्यतिष्ठत् (अधि+आस+लङ् त)। शय्यायां निषण्णा—उपविष्टा शय्यानिषण्णा—शय्यास्थिता [विश०। ७मी तत्पु०। नि+षद्+क्त. "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" (८।२।४२ पा०) इति निष्ठा-तस्य धातोर्दकारस्य च नः], न सम्मुखम्—अभिमुखगतं, मुखं यस्याः सा असम्मुखी—पराङ्मुखी, पत्यौ पराङ्मुखीत्यर्थः (विश०)। प्रत्यपद्यत—प्राप्नोत्, पतिं पश्चात्कृत्य स्थितत्वात् तस्य आलिङ्गनादिकं न बहु अमन्यत इत्यर्थः (प्रति+पद+लङ्-त)।

(ध) उत्—उद्गतम्, अश्रु—नेत्रोदकं यस्याः सा उदश्रुः,—दृष्टनेत्रनीरा, रोदनोन्मुखीति यावत् (विश०। बहुव्री०)। सः,—समुद्रदत्तः। अस्याः,—अनया इत्यर्थः ["क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति कर्त्तरि ६ष्ठी०], अभिमतः,—प्रार्थितः, प्रियः इत्यर्थः (अभि+मन+वर्त्तमाने क्त.)। हृदा—हृदयेन, मनसा इत्यर्थः (करणे ३या०)। अयमनयोरतिशयेन प्रियः प्रेयान्—प्रियतमः [प्रिय+"द्विवचनविभज्योपपदे तरबीयसुनौ" (५।३।५७ पा०) इति ईयसुन् "प्रियस्थिरस्फिरोरु—" (६।४।१५७ पा०) इति प्रियस्य प्राऽऽदेशः]। विज्ञप्तिं—विज्ञापनम्। हर्षेण—आनन्देन सह सहर्षं—सानन्दं, प्रसन्नचेतसा इत्यर्थः (क्रिया विश०)। आर्य्यपुत्र! इति पत्युः सम्बोधनम्, अवक्तव्यमपि—वक्तुमनर्हमपि, लज्जाकरत्वात् घृणाजनकत्वाच्च इति भावः।

ततो सा (न) "तथा" इति कथञ्चित् प्रतिपद्यमानं तं सविषादं सलज्जं सभयञ्चावादीत्,—"नाथ! एकदा एकाकिनीं स्वोद्याने मां दृष्ट्वा धर्मदत्तो नाम मम भ्रातुः सखा युवा स्मराऽऽतुरः मामरुणत्। अहं परीवादं पितुः कन्यादानफलञ्च रक्षन्ती हठप्रवृत्तस्य तस्य वाचमयच्छं यत्,—'पूर्वं विवाहिता त्वामुपैष्यामि, ततः पतिम्' इति। तत् प्रभो! मे सत्यं प्रतिपालय, (प) अनुमन्यस्व मा तदन्तिकगमनाय, तन्निकटं गत्वा क्षणेनागमिष्यामि, न हि आबाल्यसेवितं सत्यमतिक्रमितुं शक्नोमि"। इति तस्याः (फ) वचोवज्रपातेन सहसा हतः समुद्रदत्तः सत्येन बद्धः क्षणमचिन्तयत्,—"अहो! धिक्! इयमन्यरक्ता, एतया

(न) तथा—तदेव भवतु, वक्तव्यं ते ब्रूहि, अभयं ददामि, शपथञ्च करोमि इत्येवंरूपमित्यर्थः। प्रतिपद्यमानम्—अङ्गीक्रियमाणं (प्रति+पद+शानच्), तं—समुद्रदत्तं, सविषादं सलज्जं सभयमिति पदत्रयं (क्रिया विश०), पत्युरसन्तोषभयात् सविषादत्वं सभयत्वञ्चावगन्तव्यम्। अरुणत्—अबाधिष्ट, मम गृहगमनमार्गम् अवरुरोध इत्यर्थः: (रुध+लङ् द)। परीवादम्—अपवादं, लोकनिन्दामित्यर्थः [परि+वद+घञ् "उपसर्गस्य घञि" (६।३।१२२ पा०) इति दीर्घः। "परीवादो ऽपवादे स्यात् वीणावादनवस्तुनि" इति मेदिनी]। रक्षन्ती—पालयन्ती (विश०। रक्ष+शतृ, स्त्रियां ङीप्), हठ—बलात्कारे, बलपूर्वकावरोधे इत्यर्थः. ("प्रसभन्तु बलात्कारो हठः" इत्यमरः), प्रवृत्तस्य—उद्यतस्य हठप्रवृत्तस्य—प्रसभं मामवरोद्धुमुपक्रान्तस्य (विश०। ७मी तत्पु०), तस्य (सम्बन्धविवक्षया शेषे ६ष्ठी०)। अयच्छम्—अददाम्, अङ्गीकृतवतीत्यर्थः. [दाण्+लङ् अमप् "पाघ्राध्मा—" (७।३।७८ पा०) इति यच्छादेशः]।

(प) अनुमन्यस्व—अनुजानीहि, अनुज्ञां कुरु इत्यर्थः; (अनु+मन+प्रार्थनायां लोट्-स्व)।

(फ) वचांसि—वाक्यानि, वज्रम्—अशनिरिव (उपमितसमा०), तस्य पातेन—पतनेन वचोवज्रपातेन—वाग्वज्राघातेनेत्यर्थः: (कर्तरि ३या०। ६ष्ठी तत्पु०)। धिगिति आत्मनिभर्त्सनसूचकमव्ययं ("धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः), तामिति शेषः। अन्यस्मिन्—पुरुषान्तरे, पतिव्यतिरिक्ते इत्यर्थः, रक्ता—अनुरक्ता, अनुरागि-

ध्रुवमेव गन्तव्यं, तत् कथं मत्वं हन्मि ? यातु इयं, कोऽस्याः परिग्रहः ?" इत्यालोच्य तां यथेष्टगमनाय अनुमेने । साऽपि सहसा समुत्थाय तस्मात् ( व ) वेश्मनो निरगात् ।

अथ सा यान्ती मदनसेना निशि मार्गे एकाकिनी केनापि चौरेण ( भ ) प्रधाव्य वसनाञ्चलात् रुरुधे, ऊचे च बिभ्यती सा,—"का त्वं सुभ्रु ! ? क्व यासि ?" इति । साऽवादीत्,—"मुञ्च मां, किं तवानेन प्रसङ्गेन ? कार्य्यमस्ति मे" । ततश्चौरो-

रीत्यर्थः ( "रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु" इति मेदिनी ), अन्यरक्ता—परपुरुषासक्ता ( विश० । ७मी तत्पु० ) । "इयमन्यरक्ता" इत्यत्र "यतः" इत्युह्नीयम्, यतः परपुरुषानुरक्तामिमामहं कामये, अतो मां धिगिति समुदायार्थः । हन्मि—विनाशयामि, लङ्घयामीत्यर्थः ( हन+लट् मिप् ) । परिग्रहः,—स्वीकारः, ग्रहणमित्यर्थः, अस्याः परिग्रहः कः ?—अस्याः ग्रहणे किं प्रयोजनम् ? नैवैनां पत्नीत्वेन ग्रहीष्यामीत्यर्थः, यद्वा,—परिग्रहः,—परिवारः, परिजनः इत्यर्थः, स्वामीति यावत, कोऽस्याः पतिः ? नैवाहं कुलटाया अस्याः पतित्वं स्वीकरोमीत्यर्थः; ( "परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुग्रस्तेऽर्कभास्करे" इत्यजयः ) । अनुमेने—अनुजज्ञौ, अनुमतिं दत्तवानित्यर्थः ( अनु+मन+लिट् ए ) ।

( व ) वेश्मनः,—गृहात् ( अपा० ५मी० । "गृहगेहोदवसितं वेश्म सद्म निकेतनम्" इत्यमरः ) ।

( भ ) प्रधाव्य—धावित्वा, द्रुतमागत्येत्यर्थः ( प्र+धाव+ल्यप् ), वसनाञ्चलात्—वस्त्रप्रान्तभागात्, वस्त्रप्रान्तदेशमाक्रम्येत्यर्थः ( ल्यब्लोपे ५मी० ), रुरुधे—बबन्धे, प्रतिबद्धा इत्यर्थः ( रुध+कर्मणि लिट्-ए ), ऊचे—आबभाषे [ वच+कर्मणि लिट-ए "वचिस्वपियजादीनां किति" ( ६।१।१५ पा० ) इति धातोः सम्प्रसारणं "लिड्यभ्यासस्योभयेषाम्" ( ६।१।१७ पा० ) इत्यभ्यासस्य च सम्प्रसारणम् ], बिभ्यती—त्रसन्ती ( विश० । भी+शतृ, स्त्रियां ङीप् ) । सु—सुष्ठु, शोभने इत्यर्थः, शुभौ भ्रुवौ यस्याः सा सुभ्रूः, तत्सम्बुद्धौ सुभ्रु !—सुन्दरभ्रूसमन्विते इत्यर्थः [ सुभ्रु ! इति प्रयोगो न पाणिनिसम्मतः, "हे सुभ्रूः । कथं तर्हि 'स्वपिति क्वासि हे सुभ्रु !' इति भट्टिः ? प्रमाद एवायमिति बहवः" इति दीक्षितोक्तेः ] ।

ऽब्रवीत्,—"सुन्दरि ! चौरात् (म) मत्तः कथं त्वं मुच्यसे ?"। तदाकर्ण्य साऽवदत्,—"गृहाण मे आभरणानि"। ततश्चौरः (य) अभ्यधात्,—"शोभने ! किमेभिरुपलैः ? चन्द्रकान्ताननां जगदाभरणभूतां भवतीं नैवाहं त्यजामि"। इति तेनोक्ता (र) विवशा सा वणिङ्नन्दिनी निजवृत्तान्तमाख्याय तमेवं प्रार्थयामास,—"भद्र ! क्षणम् अपेक्षस्व, यावत् सत्यमनुपालयामि ; इहस्थस्यैव ते पार्श्वं सत्वरमेष्यामि, नाहमिमां गिरमुल्लङ्घयिष्यामि"। एतदाकर्ण्य चौरस्तां (ल) सत्यसन्धां मत्वा मुमोच, तस्थौ च तत्र तदागमं प्रतीक्षमाणः। साऽपि तस्य धर्मदत्तस्य वणिजोऽन्तिकमाजगाम। स च धर्मदत्तस्ताम् (व) अभीष्टां प्राप्तां दृष्ट्वा यथावृत्तं पृष्ट्वा विचिन्त्य च क्षणमब्रवीत्,

(म) मत्तः,—मत्सकाशात् [अस्मदः पञ्चम्येकवचननिष्पन्नम्। "भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इति ५मी०]। मुच्यसे ?—त्रायसे (मुच+कर्म्मकर्त्तरि लट्-से)।

(य) अभ्यधात्—अवादीत् [अभि+धा+लुङ्-द् "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्], शोभने !—सुन्दरि ! इत्यर्थः। उपलैः,—प्रस्तरैः, आभरणानां रत्नमयत्वात् तेषु प्रस्तरत्वारोपो बोद्धव्यः, यद्वा,—उपलखण्डवदतितुच्छैरित्यर्थः (करणे ३या०। "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः), चन्द्रवत् कान्तं—सुन्दरम्, आननं—वदनं यस्यास्तां चन्द्रकान्ताऽऽननाम्—इन्दुसुन्दरमुखीं (विण०। उप० बहुव्री०), जगतां—भुवनानाम्, आभरणभूताम्—अलङ्काररूपिणीं जगदाभरणभूतां—लोकललामभूताम्, अतीव सुरूपामित्यर्थः (विण०। ६ष्ठी तत्पु०)।

(र) विवशा—व्याकुला (विण०)। गिरं—वाचम्, उल्लङ्घयिष्यामि—अतिक्रमिष्यामि, अपलपिष्यामि वा (उत्+लघि+णिच्+लृट्-स्यामि)।

(ल) सत्या—अमृषा, सन्धा—प्रतिज्ञा ("सन्धा प्रतिज्ञा मर्य्यादा" इत्यमरः) यस्याः तादृशीं सत्यसन्धां, यथार्थवादिनीम् इति यावत् (विण०। बहुव्री०)। तस्याः,—मदनसेनायाः, आगमनम्—आगमनं तदागमं—तत्प्रत्यावर्त्तनं (६ष्ठी तत्पु०)।

(व) अभीष्टाम्—अभिलषिताम्, प्रियामिति यावत्। वृत्तम्—अतीतम्,

—"सुन्दरि ! सत्येन ते तुष्टोऽस्मि; त्वया परस्त्रिया मे नास्ति प्रयोजनं, यावत् त्वां कश्चिन्नेक्षते, तावत् यथाऽऽगतं गम्यताम्" इति तेन त्यक्ता सा "तथा" इति तद्गेहात् प्रत्यागमत् ।

अथ पथि चौरस्य (अ) प्रतिपालयतो निकटं प्राप्य,—"ब्रूहि कस्ते वृत्तान्तस्तत्र गतायाः ?" इति पृच्छते तस्मै सा तेन वणिजा यथोक्तं, तत् सर्वमाख्यातवती । ततः चौरस्तामवादीत्,—"यद्येवं, तत् मयाऽपि (ब) सत्यतुष्टेन विमुक्ताऽसि, साम्प्रतं साभरणा गृहं व्रज" इति । एवं तेनापि सन्त्यक्ता रक्षिता (स) अनृणा अलुप्तशीलमुदिता पत्युरन्तिकमाययौ । तत्र गुप्तं प्रविष्टा प्रहृष्टेवाऽऽगता पृष्टा तस्मै पत्ये तत् सर्वं

---

अतीतविषयमित्यर्थः, अनतिक्रम्य यथोक्तं—पतिसकाशे यत्किञ्चित् संघटितं तत् सर्वमित्यर्थः ( अनतिक्रमेऽव्ययी० ) । सत्येन—सत्यपालनेनेत्यर्थः । यथा—येन प्रकारेण, येन पथा वा, आगतं—प्राप्तं यथाऽऽगतं—येन प्रकारेण येन पथा वा अत्र समुपस्थितं, तेनैव प्रकारेण तेनैव पथा वा ( अनतिक्रमणेऽव्ययी० ) । तथा—तदेवास्तु, भवदुक्तप्रकारेणैव गृहं गच्छामीत्यर्थः, इति, उक्तेति शेषः ।

(अ) प्रतिपालयतः,—प्रतीक्षमाणस्य [ प्रति + पा + णिच् + शतृ "पातेर्णौ लुग्वक्तव्यः" ( वा० ) इति लुगागमः ] । प्राप्य—समागत्य ( प्र + आप + ल्यप् ) । पृच्छते—जिज्ञासमानाय [ विश० । प्रच्छ + शतृ "ग्रहिज्यावयिव्यधि—" ( ६।१।१६ पा० ) इति सम्प्रसारणम् ], तस्मै—चौराय । आख्यातवती—कथितवती ( आ + ख्या + क्तवतु, स्त्रियां ङीप् ) ।

( ब ) सत्येन—सत्यधर्मसंरक्षणेन, तुष्टः,—प्रीतः तेन सत्यतुष्टेन—सत्यपालनहेतुकसन्तुष्टेन ( विश० ), विमुक्ताऽसि इत्यत्र त्वम् इति शेषः ।

( स ) नास्ति ऋणं—देयं, प्रतिज्ञापालनरूपम् अवश्यपरिशोधनीयमित्यर्थः ( "ऋणं देये जले दुर्गे" इति हैमः ), यस्याः सा अनृणा—प्रतिज्ञा-ऋणमुक्ता ( विश० । बहुव्री० ), अलुप्तेन—अविनष्टेन, शीलेन—सद्वृत्तेन, चारित्रेण हेतुना इत्यर्थः, मुदिता—हृष्टा अलुप्तशीलमुदिता—निजसतीत्वसंरक्षणप्रीता इत्यर्थः ( विश० । तृया तत्पु० ), यद्वा,—अलुप्तं शीलं यस्याः सा अलुप्तशीला, सा चासौ मुदिता चेति ( कर्मधा० ) । गुप्तं—सुरक्षितम्, अन्यैरदृष्टं यथा तथेत्यर्थः ( क्रिया

यथावदवर्णयत्। सोऽपि ( ङ ) अम्लानमुखकान्तिमसम्भोगलक्षणाम् अनष्टचारित्रां सत्यपालनगताम् अदुष्टमानसां सम्भाव्य अभिनन्द्य च तया सह यथासुखं तस्थौ"।

इति कथामुक्त्वा स वेतालस्तं भूपं पृच्छति स्म,—"राजन्! पूर्वोक्तं शापमनुस्मृत्य ब्रूहि, एषां ( क ) चौरवणिजां मध्यात् कः त्यागी ?" इति। तदाकर्ण्य स राजा मौनं विहाय तं वेतालमाह स्म,—"एषां चौरस्त्यागी, न पुनरुभौ तौ वणिजौ। यो हि पतिस्ताम् अत्याज्यां ( ख ) विवाह्यापि अजहात्, स कुलजः सन् अन्याऽऽसक्तां भार्य्यां जानन् कथं वहति ?। योऽपि

---

विण० )। पृष्टा, पत्या इति शेषः। अवर्णयत्—अकथयत्, वर्णितवतीति यावत् ( वर्ण+णिच्+लङ्-द् )।

( ङ ) अम्लाना—अमलिना, प्रफुल्ला इति यावत्, अस्खलितचारित्र्यादिति भावः, मुखकान्तिः,—मुखशोभा यस्यास्ताम् अम्लानमुखकान्तिम्—अकलङ्कचारित्रतया हृष्टवदनां ( विण०। बहुव्री० )। न विद्यते सम्भोगस्य—रतस्य, पुंसंसर्गस्य इत्यर्थः ( "रतभोगौ च सम्भोगौ" इति शाश्वतः ), लक्षणं—चिह्नं, विशृङ्खलवेशादिकमिति यावत्, यस्यां यस्या वा ताम् असम्भोगलक्षणाम्—अदृष्टशृङ्गारचिह्नां, यथापूर्ववेशामिति यावत् ( विण०। बहुव्री० ), अनष्टम्—अस्खलितं, चारित्रं—सद्वृत्तं, सत्स्वभावः इत्यर्थः, यस्यास्तामनष्टचारित्राम्—अकलङ्कितस्वभावां (विण०। बहुव्री०), सत्यस्य—शपथस्य ( "सत्यं शपथतथ्ययोः" इत्यमरः ), पालनाय—रक्षणाय, गतां—प्रयातां सत्यपालनगतां—प्रतिज्ञारक्षणार्थमेव प्रस्थितां, न तु अभिसारार्थमिति भावः ( विण०। ४र्थी तत्पु० ), अदुष्टं—पवित्रं, मानसं—चित्तं यस्यास्ताम् अदुष्टमानसां—विशुद्धहृदयां ( विण०। बहुव्री० ), सम्भाव्य—वितर्क्य ( सम्+भू+णिच्+ल्यप् ), अभिनन्द्य—प्रशस्य, सन्तोष्य वा ( अभि+नन्द+ल्यप् )।

( क ) चौरवणिजां—चौरस्य तथा समुद्रदत्तधर्मदत्ताख्यवणिग्द्वयोश्च। त्यागी—त्यागशीलः, विषयेषु अनासक्त इत्यर्थः, निस्पृह इति यावत्।

( ख ) विवाह्य—विवाहं कृत्वा ( वि+वह+णिच्+ल्यप् ), अजहात्—अत्यजत् ( हा+लङ्-द् )। कुलजः,—सत्कुलोत्पन्नः। वहति—रक्षतीत्यर्थः, पोषयितुं शक्नोतीति यावत्।

(ग) अपरः, स भयात्, अथवा कालेन जीर्णाऽऽसक्तिवेगात् तामत्याक्षीत्। चौरस्तु (घ) गूढ़चारी निरपेक्षः पापी, प्राप्तं साभरणं स्त्रीरत्नं यदमुञ्चत्, तेन स एव त्यागी" इति। एतदाकर्ण्यैव स वेतालः पूर्ववत् स्वं (ङ) पदमगात्, राजाऽपि पुनस्तमानेतुं सयत्नोऽभवत्।

---

## अथ एकादशकथा।

ततः स राजा शिंशपासकाशं गत्वा तं वेतालं पुनः स्कन्धमधिरोप्य तं भिक्षुं प्रति आगन्तुमारेभे। गच्छन्तञ्च तं स्कन्धस्थितः स वेतालः प्राब्रवीत्,—"राजन्! विचित्रामेकां अमापहां कथां ते निवेदयामि, शृणु,—

---

(ग) अपरः,—धर्म्मदत्तः। जीर्णः,—क्षीणः, आसक्तिवेगः,—अनुरागातिशय्यं तस्मात् जीर्णाऽऽसक्तिवेगात्—बहुकालादर्शनेन मन्दानुरागत्वात् (कर्म्मधा०। हेतौ पञ्चमी०)। अत्याक्षीत्—अहासीत्, त्यक्तवान् इत्यर्थः (त्यज+लुङ्-द)।

(घ) गूढ़ं—गुप्तं, चरति—भ्रमतीति गूढ़चारी—निशाविहारी, निर्जनप्रदेशविहारी वा (विश०। गूढ़+चर+ग्रहादित्वात् णिनिः), गूढ़चारीति विशेषणेन तस्य पुरुषान्तरकर्तृकदर्शनभयं नास्ति, येन तां त्यजेत् इति बोध्यम्; निरपेक्षः,—समाजसम्बन्धपरिशून्यः, ईदृक्कार्य्यकरणे जनसमाजे मम निन्दा भविष्यति, अत एवं न करिष्यामीत्यादि अपेक्षाविहीन इत्यर्थः, एतदपि विशेषणम् अत्यागहेतुत्वेनोपन्यस्तमिति बोद्धव्यम्; पापीति विशेषणमपि अत्यागहेतुत्वबोधनाभिप्रायेणैव उपन्यस्तं, यतः पापिनः परदारसम्भोगस्य पापजनकत्वे बुद्ध्यभावात्।

(ङ) पदं—स्थानं, शिंशपावृक्षमित्यर्थः ("पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः)।

पूर्व्वमासीत् उज्जयिन्यां धर्म्मध्वजो नाम नृपतिः। तिस्रः राजकन्यास्तस्यातिवल्लभा भार्य्या आसन्। तासामेका इन्दुलेखा, द्वितीया तारावली, तृतीया मृगाङ्कवती। ताभिः राज्ञीभिः सह (क) विहरन् राजा जिताशेषरिपुः सुखमासाञ्चक्रे।

एकदा तत्र वसन्तोत्सवे समुपस्थिते ताभिः प्रियाभिः सह स राजा क्रीड़ितुम् उद्यानमगात्। तत्र (ख) अलिमालामौर्व्वीका: पुष्पाऽऽनता लताः अनङ्गस्य सज्जिताश्चापयष्टीरिव पश्यन्, तत्रत्यतरूपरि वर्त्तमानानां कोकिलानां गिरं सम्भोगैक-

(क) विहरन्—क्रीड़न् (वि+हृ+शतृ)। जिताः,—पराभूताः, अशेषाः,—सकलाः, रिपवः,—शत्रवः येन तादृशः जिताशेषरिपुः,—वशीकृतनिखिलारिमण्डलः (विश०। बहुव्री०)। आसाञ्चक्रे—तस्थौ [आस+लिट्-ए "दयायासश्च" (३।१।३७ पा०) इति आम् "कृञ्चानुप्रयुज्यते लिटि" (३।१।४० पा०) इति कृञोऽनुप्रयोगः]।

(ख) अलिमालाः,—भ्रमरपङ्क्तयः ("माला तु पङ्क्तौ पुष्पादिदामनि" इति हेमः), मौर्व्यः,—ज्याः ("मौर्व्वी ज्या शिञ्जिनी गुणः" इत्यमरः) इव यासु ताः, अथवा,—अलिमाला एव मौर्व्यः यासु ताः अलिमालामौर्व्वीकाः,—स्थितभ्रमरावलीभिः गुणभ्रान्तियुक्ताः, अथवा,—भ्रमरावलिरचितगुणाः, "मौर्व्वी रोलम्बमाला" इति कविसमयप्रसिद्धेः अनङ्गचापे भ्रमरपङ्क्तय एव मौर्व्वीकार्य्यं साधयन्तीति ज्ञातव्यं [विश०। बहुव्री०। "नद्यृतश्च" (५।४।१५३ पा०) इति कप्]। पुष्पैः,—पुष्पसमूहभारैः, आनताः,—ईषन्नम्राः पुष्पाऽऽनताः,—कुसुमभारावनताः (विश०। ३या तत्पु०)। सज्जिताः,—लक्ष्यवेधार्थं कल्पिताः, सगुणीकृता इत्यर्थः, चापयष्टीः,—धनुर्दण्डान्, वसन्तागमनात् सर्व्वाः लताः पुष्पिताः तथा पुष्पभारेण ईषदानताश्च अभवन्, पुष्पेषु च तेषु मधुपश्रेणयः मधुपानार्थं न्यषेदुः, तास्तु कामस्य सगुणीकृताः धनुर्यष्टीरिव परिदृश्यमाना आसन्, यतः पुष्पधन्वनः धनुः पुष्पमयं, ज्या भ्रमरमयी, बाणानि च पुष्पमयानि, "मौर्व्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतोः" इति कविसमयसिद्धेः। सम्भोगः,—सुरतः, शृङ्गार इत्यर्थः ("सम्भोगस्तु पुमान् भोगे सुरते जिनशासने" इति मेदिनी),

रसस्य मनोजस्य आज्ञामिव शृण्वन्, वासवोपमः स राजा अन्तःपुरिकाभिः सार्कं कन्दर्पजीवितस्यापि जीवितं मधु सिषेवे। तत्र (ग) तस्य राज्ञः इन्दुलेखाया देव्याः केलिकचग्रहात् कर्णाग्रात् उत्सङ्गे उत्पलं पपात। तदभिघातेन च व्रते जाते (घ) अभिजाता सा महादेवी,—"हा! हा!" इत्युक्त्वा मुमूर्च्छ। तदवलोक्य (ङ) विह्वलेन राज्ञा परिजनेन च शीताम्बुमारुतैः समाश्वासिता सा कथञ्चित् संज्ञामवाप। अथ

---

एव, एकः,—प्रधानः, रसः,—आस्वादः यस्य तस्य सम्भोगैकरसस्य—शृङ्गारमात्ररसस्य (विश०। बहुव्री०), मनसि जायते इति तस्य मनोजस्य—आत्मभुवः, कामस्येत्यर्थः [मनस्+जन+"सप्तम्यां जनेर्डः" (३।२।९७ पा०) इति डः]। वासवेन—इन्द्रेण, उपमा—तुलना यस्य सः वासवोपमः,—इन्द्रतुल्यः (विश०। बहुव्री०)। अन्तःपुरिकाभिः,—अन्तःपुरनिवासिनीभिः, महिषीभिरित्यर्थः (सहार्थकसाकं-शब्दयोगात् ३या०), सार्कं—सह (अव्य०। "साकं सार्द्धं समं सह" इत्यमरः), कन्दर्पस्य—कामस्य, जीवितं—जीवनं, जीवनतुल्या रतिरित्यर्थः, तस्य कन्दर्पजीवितस्य—कामपत्न्याः रतेरित्यर्थः, जीवितं—जीवनम्, उद्दीपकमिति यावत्, रत्युद्दीपकमिति भावः, मधु—मद्यं ("मधु मद्यं मधु क्षौद्रं मधु पुष्परसं विदुः। मधुर्दैत्यो मधुश्चैत्रो मधुकोऽपि मधुर्मतः"॥ इति शाश्वतः), सिषेवे—पपौ (सेव+लिट्-ए)।

(ग) तस्य राज्ञः,—तेन राज्ञा इत्यर्थः ["कर्तृकर्मणोः कृति" (२।३।६५ पा०) इत्यनेन अक्तप्रत्यययोगात् कर्तरि ६ष्ठी०]। केली—क्रीडायां, क्रीडाकाले इत्यर्थः, यः कचग्रहः,—केशधारणं तस्मात् केलिकचग्रहात—क्रीडाकालिककेशग्रहणव्यापाराद्धेतोः (हेतौ ५मी०)। उत्सङ्गे—क्रोडदेशे, उत्पलं—कर्णभूषणीकृतं कुवलयं, राज्ञा केलिकचग्रहणवेगात् देव्या उत्सङ्गे तस्या एव कर्णाग्रात् उत्पलं पपात इति योजना कार्या।

(घ) अभिजाता—कुलीना, सत्कुलोत्पन्ना इत्यर्थः, तथाविधत्वादतीव सुकुमारीति भावः (विश०। "न्याय्ये कुलीनबुधयोरभिजातपदं विदुः" इति शाश्वतः)।

(ङ) विह्वलेन—विक्लवेन, शोकावेगात् स्वाङ्गान्यपि धारयितुमशक्तेनेत्यर्थः। समाश्वासिता—सान्त्विता इत्यर्थः (सम्+आ+श्वस+णिच्+क्त, स्त्रियां टाप्)।

राजा तां राजधानीं नीत्वा (च) भिषजां शतैर्विविधौषधैः प्रियामुपाचरत्।

ततः स राजा रात्रौ तां सुखितां दृष्ट्वा द्वितीयया तारावल्या सह (छ) चन्द्रप्रासादमारुरोह। तत्र तस्य राज्ञः क्रोड़सुप्तायां तस्यां गवाक्षमार्गेण (ज) हिमकरत्विषः तदङ्गेषु पेतुः; ततः क्षणात् प्रबुद्धा सा,—"दग्धाऽस्मि" इतिवादिनी सहसा शयनादुत्तस्थौ। अथ स राजा प्रबुद्धः,—"किमेतत्?" इति (झ) सम्भ्रान्तः समुत्थाय तस्या अङ्गेषु विस्फोटान् निर्गतान् अपश्यत्। "किमेतत्?" इति पृच्छन्तं तं तारावली राज्ञी प्राह स्म (ञ) नाम,—"अङ्गपतितैरिन्दोः किरणैरेतत् मे कृतम्"। इत्युक्तवत्याः रुदत्यास्तस्यास्ताम (ट) आर्त्तिं दृष्ट्वा राजा विह्वलः परिजनमाह्वयत्, अकारयच्च तेन परिजनेन सजलैर्नलिनीदलैः शय्याम्, अदापयच्च अङ्गेषु आर्द्रश्रीखण्ड-विलेपनानि।

---

(च) भिषजां—चिकित्सकानां, शतैः,—बहुभिः, बहुचिकित्सकैरित्यर्थः। उपाचरत—अचिकित्सत (उप+आ+चर+लङ् द)।

(छ) चन्द्रः,—चन्द्रवत् आह्लादक इत्यर्थः, प्रासादः,—सौधः तं चन्द्रप्रासादम् (उप० समा०); यद्वा,—चन्द्राय—चन्द्रकिरणसेवनाय इत्यर्थः, प्रासादः तं चन्द्रप्रासादं—प्रासादशिखरस्थगृहमिदमित्यर्थः (४र्थी तत्पु०)।

(ज) हिमकरस्य—चन्द्रस्य, त्विषः,—प्रभाः, किरणानीति यावत्, हिमकरत्विषः,—चन्द्ररश्मयः। प्रबुद्धा—जागरिता (प्र+ बुध+क्त, स्त्रियां टाप्)। इति—दग्धाऽस्मि दग्धाऽस्मि एवं वचनं पुनः पुनः वदितुं शीलमस्याः इतिवादिनी—एवंभाषिणी [विश०। इति+वद+"बहुलमाभीक्ष्ण्ये" (३।२।८१ पा०) इति णिनिः, स्त्रियां ङीप्]।

(झ) सम्भ्रान्तः,—समुद्विग्नः, सभयो वा, त्वरान्वितो वा (विश०)।

(ञ) नाम—प्रकाशार्थकं कुत्सार्थकं वा अव्ययम्; प्रकाशं प्राह स्म, अतिक्रोधेन प्राह स्म इति वा ("प्राकाश्येऽभ्युपगमे कोपे नाम सम्भाव्यकुत्सयोः" इति शाश्वतः)।

(ट) आर्त्तिं—पीड़ां, विस्फोटं, तज्जनितयातनां वा इत्यर्थः ("आर्त्तिः

तावच्चास्य तृतीया महिषी सुमाह्वती तत्पार्श्वम् (ठ) आगन्तुमना निजमन्दिरात् निरगमत्, निर्गच्छन्ती च सा क्वापि निःशब्दायां तस्यां रजन्यां विदूरे सुव्यक्तं धान्यावघातजं मुषलध्वनिं शुश्राव। श्रुत्वैव सा,—"हा! हताऽस्मि" इति वदन्ती करौ (ड) धुन्वती च व्यथिता च मार्गे एव उपाविशत्। ततः प्रतिनिवृत्त्यैव परिजनेन स्वमेवान्तःपुरं नीताऽसा बाला रुदती शयनं भेजे। तत्परिजनश्च,—"किमेतत्?" इति (ढ) चिन्वन् सास्रुः आलीनभ्रमरौ पद्माविव किणाङ्कितौ तस्या हस्तौ ददर्श, उवाच च गत्वा तं वृत्तान्तं राज्ञे।

---

पीडाधनुष्कोट्यो." इति मेदिनी)। सजलैः,—जलसिक्तैः (विश०), नलिनीदलैः,—पद्मिनीपत्रैः। आर्द्राणि—स्तिमितानि, तरलानीत्यर्थः, न तु शुष्काणि सान्द्राणि वा, तथाविधस्य दाहप्रकोपकत्वात् इति भावः, श्रीखण्डस्य—मालयस्य, मलयपर्वतोद्भवस्येत्यर्थं, श्वेतचन्दनस्य इति यावत् ("मालयस्तु स्यात् श्रीखण्डो रौहिणश्च सः" इति त्रिकाण्डशेषः), विलेपनानि—प्रलेपान् आर्द्रश्रीखण्डविलेपनानि—चन्दनद्रवप्रदेहान्, पुनः पुनः तथा प्रलेपान् अदापयत्, यथा ते शुष्कीभवितु न शक्नुयुः, शुष्कीभूतप्रलेपस्य पीडाकरत्वात् मुहुर्मुहुः प्रलेपान् अकारयदित्यर्थः।

(ठ) आगन्तु मनः यस्याः सा आगन्तुमना,—आयातुकामा ["तुम् काममनसोः" (वा०) इति तुमुनो मकारस्य लोपः]। विदूरे—बहुदूरे। धान्यानाम् अवघातात—अभिहननात्, निस्तुषीकरणादिति यावत्, जायते इति ताहृशं धान्यावघातजं—धान्यपीडनोत्थं [विश०। उपपदस०। धान्यावघात+जन+"पञ्चम्यामजातौ" (३।२।९८ पा०) इति डः]।

(ड) धुन्वती—कम्पयन्ती (धु+शतृ, उगितश्चेति ङीप्)।

(ढ) चिन्वन्—अन्विष्यन् (चि+शतृ), सास्रुः,—सजलनेत्रः (परिजन इत्यस्य विश०), आ—सम्यक्, लीनौ—लग्नौ आलीनौ—दृढासक्तौ, गाढलग्नौ इत्यर्थः, भ्रमरौ ययोः ताहृशौ आलीनभ्रमरौ—उपविष्टमधुकरौ (विश० । बहुव्री०)। किणाभ्या—मांसग्रन्थिभ्या, "ब्योटा" "कड़ा" वा इति ख्याताभ्यां घर्षणजचिह्नाभ्यामित्यर्थः, अङ्कितौ—चिह्नितौ किणाङ्कितौ—ग्रन्थिलाञ्छितौ (विश० । तृया तत्पु०); अत्र "आलीनभ्रमरौ पद्माविव" इति उपमानद्वारेण किणयोः नीलता कृष्णवर्णता च

सोऽपि राजा सम्भ्रान्तः समागत्य,—"किमेतत् ?" इति तां प्रियां पप्रच्छ । साऽपि हस्तौ प्रदर्श्य व्यथिता प्रोवाच,— "नाथ ! मुषलध्वनौ श्रुतमात्र एव मे एतौ किणौ जातौ" इति । ततः स राजा दाहप्रशमनमौषधं चन्दनविलेपनादिकं तस्या हस्तयोः अदापयत् । "एकस्या उत्पलेनापि पतता क्षतम् (थ) आहितं, द्वितीयस्याः शशिकरैरपि अङ्गं दग्धं, तृतीयस्यास्त्वस्याः श्रुतेन मुषलशब्देन हस्तयोरीदृशाः किणा जाताः ; अहो ! युगपत् एतासां मे प्रेयसीनां गुणोऽपि अभिजातत्वं दोषायैव जातः" इति चिन्तयतः अन्तःपुरेषु भ्रमतस्तस्य नृपतेः सा त्रियामा शतयामेव कष्टात् विरराम । प्रातश्च स राजा (त) शल्यहर्तृभिर्भिषग्भिः सह तथा विधानमकरोत्, यथा अचिरात् स्वस्थान्तःपुरनिर्वृतोऽभवत्" ।

---

तस्या हस्तयोः आरक्तवर्णता सुकोमलता च प्रकटीकृता, पद्मद्वयोपरि भ्रमरद्वयोपवेशने कृते यथा शोभा जायते, तस्या हस्तौ अपि किणाङ्कनेन तथा शुशुभाते इति भावः ; एतेन तस्या आभिजात्यमतीव सुकुमाराङ्गीत्वञ्च प्रदर्शितम् ।

(थ) आहितं—जनितमित्यर्थः [ आ+धा+क्त "दधातेर्हिः" (७।४।४२ पा०) इति हिः ]। त्रयः यामाः,—प्रहराः यस्याः सा त्रियामा—रात्रिः, आद्यन्तयोः यामार्द्धयोः चेष्टाकालत्वेन दिनप्रायत्वात् रात्रेस्त्रियामात्वं बोध्यम् ; यद्वा,—त्रीन्—धर्मार्थमोक्षान्, यापयति—निरवकाशीकरोति, कामप्रधानत्वात् इति त्रियामा [ त्रि+या+"अर्त्तिस्तुसु—" (१।१४० उ०) इति मन् ; यातेस्तु अन्तर्भावितण्यर्थत्वं बोद्धव्यम् । "निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा" इत्यमरः ], शतं यामा यस्याः सा इव शतयामेव—प्रहरत्रयरूपेण विदिता अपि शतप्रहरैवेत्यर्थः, व्यथितानां निशाया अतिदीर्घत्वेन प्रतीयमानत्वादिति भावः । विरराम—निववृते, अवसितेत्यर्थः [ वि+रम+लिट्-णल् "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम् ]।

(त) शल्यान्—देहान्तर्गतबाणाद्यादीन् ("क्ष्वेडाशङ्कुशरे शल्यं ना श्वाविन्मदनद्रुमे" इति रभसः), हरन्ति—आकर्षन्ति ये ते तैः शल्यहर्तृभिः,—शस्त्रज्ञैः (विप० । शल्य+हृ+तृच्)। विधानं—व्यवस्थामित्यर्थः। स्वस्थैः,—प्रकृतिस्थैः, नीरोगै-

इत्यमेतां कथामाख्याय वेतालः पप्रच्छ,—"राजन्! एतासां का सुकुमारतरा ?"। "यस्याः मुषले अस्पृष्टेऽपि शब्देनैव किणा उद्गताः, उत्पलेन्दुकरैः स्पर्शे जाते ययोर्व्रणविस्फोटा (ख) हत्ताः, ते उभे तस्याः समे न"। इति राज्ञो वचनमाकर्ण्य स वेतालः यथास्थानमगात्, राजा च दृढनिश्चयः पुनस्तमानेतुं सत्वरो बभूव।

## अथ द्वादशकथा।

अथ राजा तथैव तस्य शिंशपातरोरन्तिकं गत्वा तं वेतालं स्कन्धमारोप्य पुनर्गन्तुं प्रावर्त्तत। वेतालश्च भूयस्तमवादीत्,—"राजन्! इत्थम् (क) अनुद्विग्नः त्वं भृशं मे प्रियोऽसि, तदेतां हृद्यामाख्यायिकां ते श्रमविनोदाय कथयामि, शृणु.—

रित्यर्थः, अन्तःपुरैः,—अवरोधैः, अन्तःपुरवर्त्तिभिः राजदारैः हेतुभिरित्यर्थः ("अवरोधस्तिरोधाने राजदारेषु तद्गृहे" इति मेदिनीवचनात् राजदारार्थकस्य अवरोधशब्दस्य "स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्। ? ...इत्यमरवचनेन अन्तःपुरवाचकत्वात् अत्र अन्तःपुरशब्देन राजदारा एव गृह्यन्ते, तेषामन्तःपुराधिष्ठानत्वादिति बोध्यम्); निर्वृतः,—स्वस्थः, निरुद्विग्न इति यावत्, सस्यान्तःपुरनिर्वृतः,—सस्यपोषणमारोग्यलाभेन स्वयमपि सुखित इत्यर्थः (विश०। ३या तत्पु०)।

(ख) हत्ताः,—सञ्जाताः। तस्याः,—मृगाङ्कवत्याः ["तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" (२।३।७२पा०) इति तुल्यार्थक-समशब्दयोगात् ६ष्ठी०]।

(क) अनुद्विग्नः,—अव्याकुलचित्तः, धीरस्वभावः इति यावत्, निर्भय इति वा। भृशम्—अत्यर्थम्। हृदयाय हितां हृद्या—हृदयहारिणीम्, आख्यायिका—कथा, परिज्ञातसत्यवृत्तान्तमित्यर्थः।

आसीदङ्गदेशे (ख) यशःकेतुरिति युवा स्वाङ्गगुप्त्यर्थम् अदग्धः तनुमाश्रितोऽपर इव स्मरो नरपतिः। बाहुवीर्य्येण (ग) पराजित-वैरिकुलस्य तस्य शक्रस्येव बृहस्पतिः दीर्घदर्शी नाम मन्त्री अभूत्। कदाचित् स राजा (घ) वयोरूपमदात् निहत-कण्टकं राज्यं तस्मिन् मन्त्रिणि विन्यस्य शनैः सुखासक्तः सम-जायत। केवलं निरन्तरं (ङ) प्रमदाऽऽस्पदे अन्तःपुरे तस्थौ,

(ख) यशःकेतुरिति, नाम्ना ख्यात इति शेषः। स्वाङ्गस्य—स्वगात्रस्य, गुप्त्यर्थं,—रक्षणार्थं स्वाङ्गगुप्त्यर्थं—निजदेहरक्षणार्थं, हरकोपानलादिति भावः, अदग्धः,—अभस्मीभूतः, तनुमाश्रितः,—देहाश्रितः, अपरः,—द्वितीयः; कामदेवः हरकोपा-नलात् स्वदेहरक्षणार्थं नृपतेः यशःकेतोराकारेण अङ्गदेशे आविर्भूतोऽभूदिति समुदायार्थः, नरपतिरतीव रूपवान् आसीदिति भावः। पुरा पतिनिन्दाश्रवण विकृष्टदेहदाक्षायणीवियोगसङ्क्लिष्टः हरः दीर्घसमाधिमालम्बे, एतस्मिन्नन्तरे तारकासुरोपद्रुताः सुरसङ्घाः चतुर्मुखात् दाक्षायणी देहत्यागानन्तरं हिमगिरि-नन्दिनीरूपेणाविर्भूता आस्ते, तस्याः गर्भे शिववीर्य्येण जनिष्यमाण कार्त्तिकेयं त्रातारं श्रुत्वा, समाधिभङ्गार्थं मधुसहायं मन्मथं हरसन्निधौ प्रेषयामासुः। पार्व्वती च तदा जन्मान्तरीयभर्त्तारं तमिहापि जन्मनि प्राप्य परिचचार। यदा खलु सा परि-चरणार्थं हरसन्निधिमध्यास, तदैव मन्मथः समाधिभञ्जनार्थं हरं पञ्चशरैर्विव्याध, तेन च भग्नसमाधिः स कारणमन्विष्यन् इतस्ततो दृष्टिं निक्षिप्य पृष्ठतः अवस्थितं पञ्चपुष्पधरं पुष्पधन्वानं ददर्श, द्रुतैव क्रोधप्रदीप्तस्य तस्य तृतीयनयनात् प्रधावितः स्फुरज्ज्वालः हुताशनः मदनं भस्मीकृत्य अनङ्गीचकार इति पौराणी वार्त्ता।

(ग) पराजितं—पराभूतं, वैरिकुलं,—रिपुसमूहः येन तस्य पराजितवैरि-कुलस्य—विजिताशेषविपक्षस्य (विश०। बहुव्री०)। शक्रस्य—इन्द्रस्य।

(घ) वयः,—यौवनं ("वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्" इति मेदिनी), रूपं—सौन्दर्यं, ताभ्यां यो मदः,—गर्वः तस्मात् वयोरूपमदात—तारुण्य-सौन्दर्य्योत्थाविवेकात् (इया तत्पु०), निहताः,—विनष्टाः, कण्टकाः,—क्षुद्र-शत्रवः ("रोमाञ्चे क्षुद्रशत्रौ च तरीरङ्गे च कण्टकः" इति शाश्वतः) यस्य तत् निहतकण्टकं—निःसपत्न (विश०। बहुव्री०)। विन्यस्य—निधाय (वि+नि+अस+ल्यप्)।

(ङ) प्रमदानां—नारीणां, यौवनमदमत्तानामिति भावः, आस्पदं—प्रतिष्ठा,

शुश्राव च तासां सानुरागगीतं, न हितैषिणां वचनम्; रज्यति स्म स सततं जालवातायनेषु, न पुनर्बहुच्छिद्रेषु राजकार्य्येषु कदाचिदपि। दीर्घदर्शी तु तं राज्यचिन्ताभारं समुद्वहन् दिवानिशम् (च) अतन्द्रितस्तस्थौ।

अथ (छ) पौरेषु—"नृपं व्यसने प्रक्षिप्य महामन्त्री दीर्घदर्शी साम्प्रतं राज्ञः श्रियं स्वयं भुङ्क्ते" इति जनवादे समुत्थिते, स मन्त्री स्वगेहिनीं मेधाविनीं प्राब्रवीत्,—"प्रिये! राजनि सुखासक्ते, तद्भारं वहतोऽपि,—"राज्यं भक्षितमनेन" इति महद्यशो मे समुत्पन्नं जनेषु; लोकवादो हि महतामपि दोष-

---

स्थानमित्यर्थः, यद्वा,—आस्पदं—कृत्यं, कार्य्यमित्यर्थः ("प्रतिष्ठा कृत्यमास्पदम्" इत्यमरः) यत्र तस्मिन् प्रमदाऽऽस्पदे—स्त्रीजनाऽऽश्रये (विश०। बहुव्री०)। "न हितैषिणां वचनम्" इत्यत्र शुश्राव इति पूर्वतो योजनीयम्। रज्यति—प्रीणाति, प्रीतिमनुभवतीत्यर्थः; [रन्ज+कर्म्मकर्त्तरि लट्-तिप् "कुषिरञ्जोः प्राचां श्यन् परस्मैपदञ्च" (३।१।९० पा०) इति कर्म्मकर्त्तरि श्यन् परस्मैपदञ्च "अनिदितां हल उपधायाः क्ङिति" (६।४।२४ पा०) इति नलोपः]। जालम—आनायः, मत्स्यबन्धनार्थः तन्तुमयः प्रसिद्धः, जालमिव इति जालं—सूक्ष्मलौहतन्तुनिर्मितः बहुसूक्ष्मच्छिद्रः गवाक्षावरोधकः द्रव्यविशेष इत्यर्थः, जालनिबद्धानि वातायनानि—गवाक्षाः तेषु जालवातायनेषु—जालावृतगवाक्षमार्गेषु इत्यर्थः (शाकपा०), जालावृतगवाक्षमार्गेण गृहाभ्यन्तरस्थानां सुन्दरीशतानां दर्शनेनैव निजात्मानं विनोदयतीति भावः। बहूनि छिद्राणि—दोषाः, दोषाविष्कारणानां इत्यर्थः ("छिद्रं विवरदूषणम्। गर्त्ते दोषे" इति हेमः), यत्र तादृशेषु बहुच्छिद्रेषु—बहुदोषाकरेषु (विश०। बहुव्री०), अल्पेनैव स्खलनेन राज्यभ्रंशादिविपत्तिसम्भवात् राजकार्य्यस्य बहुदोषास्पदत्वमवगन्तव्यम्।

(च) अतन्द्रितः,—सावहितः, सावधानः सन् इत्यर्थः (विश०)।

(छ) पौरेषु—पुरवासिवर्गेषु, पुरवासिजनमध्ये इत्यर्थः (चौपश्लेषिकी ७मी०)। व्यसने—कामजदोषे, प्रमदानृत्यगीतवादित्रादिषु आसक्तिरूपे इत्यर्थः ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः। तत्र "मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाऽट्या च कामजो दशको गणः"॥ इति)। श्रियं—

मावहति, रामोऽपि जनापवादेन जानकीं त्याजितो न किम्? तन्मया किं कर्त्तव्यमधुना?"। इति मन्त्रिणाऽभिहिते भार्य्या मेधाविनी धीरा (ञ) अन्वर्थनाम्नी तं पतिमभाषत,—"नाथ! तीर्थयात्राऽपदेशेन युक्त्या महीपतिमापृच्छस्व,—'कियन्तं कालं विदेशं गन्तुं मे इच्छेदानीं युक्तं, तदनुमन्यताम्' इति। एवं हि (झ) निःस्पृहस्य ते स जनवादो निवर्त्तिष्यते; त्वयि चास्थिते राजा स्वयं राजधुरामुद्वक्ष्यति; ततश्च शनैरस्य व्यसनित्वञ्च शान्तिमेष्यति; आगतस्य च पुनस्ते सा एव मन्त्रिता अनिन्द्या भविता"।

---

सम्पदम्। जनवादे—लोकापवादे। लोकवादः,—लोकनिन्दा (कर्त्तृ), भवताम्—उच्यमाना. श्रेष्ठजनानामित्यर्थः। जनापवादेन—लोकनिन्दया [कर्त्तरि ३या०। अत्र "रामः" इति प्रयोज्यकर्म्मणि १मा० "गौणे कर्म्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्। बुद्धिभक्ष्यार्थयोः शब्दकर्म्मकाणां निजेच्छया। प्रयोज्यकर्म्मण्यन्येषां ण्यन्तानां लादयो मताः"॥ (का०) इत्यनुशासनात्]।

(ञ) अन्वर्थम्—अनुगतार्थं, मेधाविनी इति शब्दस्य अर्थानुरूपमित्यर्थः, नाम—संज्ञा यस्याः सा अन्वर्थनाम्नी—सार्थकनाम्नी, महाबुद्धिमतीत्यर्थः (विश०। बहुव्री०)। तीर्थयात्रा एव—तीर्थगमनमेव, अपदेशः—छलं तेन तीर्थयात्राऽपदेशेन—तीर्थगमनव्याजेन (करणे ३या०), युक्त्या—न्यायेन, यथोचितविनयेनेति यावत् ["सहयुक्तेऽप्रधाने" (२।३।१९ पा०) इत्यत्र—"विनाऽपि तद्योगं तृतीया" इति नियमात् अत्र सहशब्दाप्रयोगेऽपि तदर्थस्य गम्यमानतया ३या०]। आपृच्छस्व—जिज्ञासस्व [आ+प्रच्छ+लोट्-स्व "आङि नुप्रच्छ्योः" (वा०) इत्यात्मनेपदम्। "ग्रहिज्यावयि—" (६।१।१६ पा०) इति सम्प्रसारणम्], कियन्तं कालं ["कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति २या०]।

(झ) निःस्पृहस्य—निर्लोभस्य, कवलितराज्य लोष्टवत् तुच्छीकृत्य धर्म्मार्थी तीर्थगमनेन निराकाङ्क्षतया प्रतीयमानस्येति भावः। राज्ञः धूः,—भारः ("धूर्यान-मुखभारयोः" इति हेमः) तां राजधुरां—राजकार्य्यभारं, राज्यमित्यर्थः ["राजन्+धुर्+"ऋक्पूरब्धूःपथामानक्षे" (५।४।७४ पा०) इति समासान्तः अः, ततः स्त्रियां टाप्], उद्वक्ष्यति—पालनाय ग्रहीष्यतीत्यर्थः (उत्+वह+लृट्-स्यति)।

इति भार्य्यया (ञ) अनुशिष्टो महामन्त्री "तथा" इति कथाप्रसङ्गेन तं नृपं यशःकेतुं व्यज्ञापयत्,—"राजन्! अनुजानीहि मां, कांश्चिदपि दिवसानहं तीर्थयात्रार्थमितो व्रजामि, धर्मो हि मे परमो मतः"। तदाकर्ण्य स राजाऽब्रवीत्,—"मन्त्रिन्! (ट) मा मैवं, तीर्थैर्विना अपरो दानादिः किं न धर्म्मः? स्वगृहेष्वपि तेन स्वर्गसाधनं किं न स्यात्?"। अथ मन्त्री तमवोचत्,—"देव! दानादौ (ठ) अर्थशुद्धप्रादिकं मृग्यते, तीर्थानि तु नित्यशुद्धानि, यावच्च यौवनं, तावदेव धीमता गम्यानि, नो चेत् अविश्वास्ये अस्मिन् शरीरे कुतस्तैः

व्यसनमस्य अस्ति इति व्यसनी (व्यसन+अस्त्यर्थे इनिः), तस्य भावः तत्त्वं व्यसनित्वं—व्यसनयुक्तत्वं, कामजप्रमदासक्त्यादिरूपदोषवत्त्वमित्यर्थः [व्यसनिन्+"तस्य भावः त्वतलौ" (५।१।११९ पा०) इति त्व-प्रत्ययः]। अनिच्छा—अवाञ्छा, अपवाद मुक्ता इत्यर्थः, निःस्पृहत्वप्रदर्शनादिति भावः।

(ञ) अनुशिष्टः,—उपदिष्ट इत्यर्थः [विश०। अनु+शास+क्त "शास इदङ्हलोः" (६।४।३४ पा०) इति उपधाया इत्त्वम्, "शासिवसिघसीनाञ्च" (८।३।६० पा०) इति षत्वम्]। अनुजानीहि—अनुमन्यस्व, अनुज्ञां देहीत्यर्थः (अनु+ज्ञा+लोट् हि)। इतः,—अस्मात् स्थानात् [इदम्+पञ्चम्यास्तसिल् "इदम इश्" (५।३।३ पा०) इति इशादेश]। मे—ममेत्यर्थः [मतः इति वर्त्तमानविहितक्त-प्रत्ययोगात "क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति कर्त्तरि षष्ठी०], परमः,—परः, श्रेष्ठ इत्यर्थः, मतः,—इष्टः, वाञ्छित इत्यर्थः (मन+"मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८ पा०) इति वर्त्तमाने क्तः]।

(ट) मा मैवं, कुरु इति शेषः।

(ठ) अर्थानां—धनानां, शुद्धिः,—धर्म्येण उपायेन अर्जनरूपनिर्द्दोषत्वं, तदादिकम् अर्थशुद्धप्रादिकं—धर्म्यसङ्गतोपायेन सङ्गृहीतं धनं, न तु प्रतारणाप हरणादिरूपेण अन्याय्येन उपायेनेति भावः, विशुद्धरूपेण उपार्ज्जितः अर्थः दानकर्म्मणि प्रशस्तः, न तु चौर्य्यादिना, स च दातृयाचकयोः निरयसम्पादकत्वादिति निष्कर्षः, मृग्यते—अन्विष्यते, दातृभिः प्रार्थिभिर्वा इति शेषः (मृग+स्वार्थे णिच्+कर्म्मणि लट्-ते)। नो चेत्—यौवने एव न गम्येरन् यदीत्यर्थः। तैः,—तीर्थैः।

सह सङ्गमः?"। इति तस्मिन् मन्त्रिणि (ड) वदति, राज्ञि च तत् निषेधति, प्रविश्य प्रतीहारी तं राजानं व्यजिज्ञपत्,—"देव! भगवानंशुमान् व्योमसरोमध्यमवगाहते, तदुत्तिष्ठ, स्नानवेला तेऽतिवर्त्तते"। एतदाकर्ण्य राजा सहसा स्नातुमुदतिष्ठत्। (ढ) यात्रोन्मुखः स मन्त्री च तं प्रणम्य गृहमगात्। तत्र तां भार्य्याम् अनुगन्तुमानसां निवार्य्य, स्वभृत्यैरपि (ण) अतर्कितः स्वयुक्त्या यात्रामकरोत्।

क्रमेण च एकाकी तान् तान् देशान् तीर्थानि च भ्रमन् (त) ओड्रविषयं प्रापत्। तत्र अब्धेरदूरे एकं

सङ्गमः,—संयोगः, शरीरं क्षणस्थायि, कदा विनश्यति तस्य निश्चयो नास्ति, सहसा उपरते तीर्थदर्शनं नैव भवेत अतः यौवन एव तत कर्त्तव्यमिति ग्रन्थार्थः।

(ड) वदति—कथयति (भावे ७मी०। वद+शतृ)। निषेधति—निवारयति (भावे ७मी०। नि+षिध+शतृ)। अंशुमान्—सहस्रकिरणः, सूर्य्यः इत्यर्थः (अंशु+बाहुल्ये मतुप्), व्योम—आकाश, सरः,—तडाग इव, दुर्ज्ञेयत्वादिति वर्षाजलाश्रयत्वाद्वेति भावः, तन्मध्य व्योमसरोमध्यं—गगनसरोवरमध्यभागं, मध्यगगनमित्यर्थः, अवगाहते—प्रविशति (अव+गाह+लट्-ते)। अतिवर्त्तते—अतिक्रामति (अति+वृत+लट्-ते), भगवान् सूर्य्योऽपि स्वकीयप्रचण्डकिरणसन्तप्तः शैत्याभिलाषी स्नानाय सरोमध्यं प्रविशति, भवान् किं न सन्तप्तः? येन एतावन्तं कालमपि अस्नात्वा तिष्ठति? मध्याह्नः समुपस्थितः, अतः स्नानाय प्रयातु इति भावः।

(ढ) यात्रायै—तीर्थगमनाय, उन्मुखः,—उद्युक्तः, उद्यमवानित्यर्थः, यात्रोन्मुखः,—तीर्थप्रयाणोद्यतः (विश०। ४र्थी तत्पु०)।

(ण) अतर्कितः,—अनुत्प्रेक्षितः, अविदितः इत्यर्थः, गुप्तभावेनेति भावः (विश०), स्वयुक्त्या—निजन्यायेन, गमनमेव न्याय्यम्, अन्यथा जनवादो न निवर्त्तिष्यते, नापि राजा व्यसनात् विरंस्यति इति विवेचनयेत्यर्थः (करणे ३या०)।

(त) ओड्राः,—नीलाद्रिदेशः, जनपदभेद इत्यर्थः, उत्कलदेश इति यावत् ("ओड्राः पुं भूम्नि नीवृति। ओड्रस्तु तद्भेदे स्यात्"। "ओड्रः स्यात्ती जवापुष्पे" इति पाठान्तरम्। इति मेदिनी), ओड्राख्या राजा, ओड्रे भवा वा ओड्राः,—

(थ) पत्तनं प्राप्य, तत्र चैकं शैवं मन्दिरं प्रविश्य तत्प्राङ्गणे उपाविशत्। तत्र तम अर्ककरसन्तप्तं (द) दूराध्वभ्रमणधूसरं निधिदत्तो नाम देवार्चनाऽऽगतः कश्चित् वणिक् ददर्श। स तं तथाविधं दृष्ट्वा सयज्ञसूत्रं सुलक्षणं द्विजश्रेष्ठं सम्भाव्य आतिथ्यार्थं स्वं गृहमनयत्, अपूजयच्च स्नानभोजनाद्यैः. अप्राक्षीच्च विश्रान्तं,—"कस्त्वम्? कुत आयातः? क्व यासि?" इति। सोऽब्रवीत्,—"अहं दीर्घदर्शी नाम विप्रः, अङ्गदेशादिह आयातस्तीर्थयात्रार्थी" इति। ततः स महावणिक् निधिदत्तस्तमब्रवीत्,—"अहं (ध) वणिज्यया सुवर्णद्वीपं गन्तुमुद्यतः, त्वं तावदस्मद्गृहे तिष्ठ, यावदहम् आगमिष्यामि; तीर्थयात्रापरिश्रान्तोऽसि, अत्र कञ्चित् कालं विश्रम्य ततो यास्यसि" इति। तदाकर्ण्य स दीर्घदर्शी प्रत्यवादीत्,—"ममेह (न) स्थित्या अलं, त्वयैव

---

औड्रराजः, औड्रदेशवासिनो वा [ औड्र+"जनपदशब्दात् क्षत्रियादञ्" (४।१।१६८ पा०) इत्यञ् "तद्राजस्य बहुषु तेनैवास्त्रियाम्" (२।४।६२ पा०) इति राजप्रत्ययान्तस्य लुक्, "तत्र भवः" (४।३।५३ पा०) इत्यण् ], तस्य तेषां वा विषय—देशं ("विषयो गोचरे देश तथा जनपदेऽपि च" इति मेदिनी) औड्रविषयम्—उत्कलदेशम्।

(थ) पत्तनं—नगरं ("पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्" इत्यमरः)।

(द) दूराध्वनि—विप्रकृष्टपथि, भ्रमणात—विचरणात्, धूसरम्—ईषत्पाण्डुवर्णं, मार्गधूलिसम्बन्धादिति भावः ("ईषत्पाण्डुस्तु धूसरः" इत्यमरः), दूराध्वभ्रमणधूसरं—दूरपथभ्रमणजनितधूलिसमाच्छन्नमित्यर्थः (विश०। पञ्चमी तत्पु०)।

(ध) वणिज्यया—वाणिज्येन हेतुना इत्यर्थः [ हेतौ ३या०। वणिजां भावः कर्म वा इत्यर्थे वणिज्+"दूतवणिग्भ्यां च" (वा०) इति यः, ततः स्त्रियां वणिज्या; कौमुदीकारस्तु—"वणिज्यमिति काशिका। माधवस्तु—वणिज्याशब्दः स्वभावात् स्त्रीलिङ्गः। भाव एव चात्र प्रत्ययः, न तु कर्मणि इत्याह। भाष्ये तु—'दूतवणिग्भ्यां च' इति नास्त्येव" इत्याह। "वाणिज्यं तु वणिज्या स्यात्" इत्यमरः ]।

(न) स्थित्या—अवस्थानेन (करणे ३या०), अलं—निष्प्रयोजनं, किमपि प्रयोजनं नास्तीत्यर्थः (वारणार्थकमव्ययम्। "अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इत्यमरः)।

सह तत्राहमपि गन्तुमिच्छामि"। ततस्तेन साधुना,—(प) "एवमस्तु" इति कथिते स मन्त्री चिरादपास्तशयनो निशां तामनैषीत्।

अथान्येद्युस्तेन वणिजा सार्द्धं वारिधिं गत्वा (फ) तद्भाण्डपूर्णं प्रवहणं समारुरोह। तेन प्रवहणेन गच्छन् (ब) अद्भुतभीषणम् अम्भोधिं विलोकयन् क्रमेण तत् स्वर्णद्वीपमुपाययौ। तत्र च द्वीपे तेन क्रयविक्रयौ कुर्वता वणिजा निधिदत्तेन सह कञ्चित् कालमुवास। ततश्च तेन सह प्रत्यागच्छन् प्रवहणेन, तस्मात् सागरात् सहसा समुत्थितं (भ) प्रवालैः शाखासुभगैः जाम्बूनदोज्ज्वलैः काण्डैः मणिमयैः फलैः कान्तैश्च कुसुमैः सुशोभितं

(प) एवमस्तु—एवं भवतु, मयैव सह गम्यतामित्यर्थः। चिरात्—दीर्घकालात्, निशावसानात् बहुपूर्वमेवेत्यर्थः, अपास्तं—परित्यक्तं, शयनं—निद्रा शय्या वा ("शयनं सुरते निद्राशय्ययोश्च नपुंसकम्" इति मेदिनी) येन सः अपास्तशयनः,—अपगतनिद्रः, त्यक्तशयनीयो वा (विश०। बहुव्री०), निशाऽवसानात बहुपूर्वमेव प्रबुद्धः परित्यक्तशय्यो वा इत्यर्थः। अनैषीत्—अयापयदित्यर्थः (नी+लुङ्-द)।

(फ) तस्य—वणिजः, भाण्डानि—मूलधनानि, पण्यद्रव्याणि इत्यर्थः, यद्वा,—भाण्डानि—पात्राणि, पण्याधारा इत्यर्थः ("भाण्डं पात्रे वणिङ्मूलधने भूषाऽश्वभूषयोः" इति मेदिनी), तैः पूर्णं तद्भाण्डपूर्णं—वणिङ्मूलधनपूरितं, विक्रेयद्रव्याधारपूरितं वा (विश०। ३या तत्पु०), प्रवहणम्—अर्णवयानमित्यर्थः।

(ब) अद्भुतेन—आश्चर्य्येण सह, भीषणं—भयानकम् अद्भुतभीषणं—विस्मयदर्शनं घोरदर्शनञ्चेत्यर्थः (शाकपा०), यद्वा,—अद्भुतश्चासौ भीषणश्चेति अद्भुतभीषणं—भीषणत्वेऽपि अद्भुतत्वमीदृशं यत् दर्शकानां त्रासोत्पादकत्वेऽपि नयनरञ्जनम् इत्यर्थः, भीमकान्तमिति भावः।

(भ) प्रवालैः,—विद्रुमैः, प्रवालमयैरित्यर्थः, शाखासुभगैः,—रमणीयशाखाभिरित्यर्थः, प्रवालनिर्मिताभिः रमणीयशाखाभिरिति यावत्, यद्वा,—शाखा—शाखाभूतैः, सुभगैः,—रमणीयैः शाखासुभगैः,—सुदर्शनशाखारूपेण परिणतैरित्यर्थः, प्रवालैरिति योजना, जाम्बूनदेन—सुवर्णेन ("स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्। तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम्॥ चामीकरं जातरूपं महारजतकाञ्चने। रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमरः), उज्ज्वलैः,—

कल्पवृक्षमद्राक्षीत्; तस्य च स्कन्धे सद्रत्नपर्य्यङ्कोपरिस्थिताम् अत्यद्भुताकारां कमनीयां कामपि कन्यकामैक्षत। "अहो! किमेतत्!!" इति स मन्त्री यावत् (म) ध्यायति स्म, तावत् सा कन्या वीणापाणिः गातुमुपचक्रमे,—"येन यत् कर्मवीजमुप्तं, स निश्चितं तत्फलं भुङ्क्ते, पूर्वकृतं हि कर्म विधिनाऽपि अन्यथा कर्त्तुं न शक्यते"। इति सङ्गीतार्थं (य) प्रकटय्य क्षणादेव सा दिव्यकन्या कल्पद्रुमपर्य्यङ्कसहिता तत्रैव ममज्ज। "किमप्येतद्-

---

भासुरैः जाम्बूनदोज्ज्वलैः,—काञ्चनप्रदीप्तैः, स्वर्णमयैरिति यावत्, काण्डैः,—स्कन्धैः ("काण्डः स्कन्धेऽपि शाखिनाम्" इति शाश्वतः), वृक्षस्य मूलात् शाखाऽवधिभागैरित्यर्थः ("अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखाऽवधिस्तरोः" इत्यमरदर्शनात् काण्डप्रकाण्डयोरेकार्थकत्वम्)। कल्पस्य—सङ्कल्पितार्थस्य, वृक्षं कल्पवृक्षम्—अभीष्टवस्तुप्रद तरुविशेषम्। स्कन्धे—प्रकाण्डदेशे, सन्ति—उत्कृष्टानि, रत्नानि—मणयः यत्र तादृशः पर्य्यङ्कः,—खट्वा (कर्मधा०), तस्य उपरिस्थिता सद्रत्नपर्य्यङ्कोपरिस्थिता—बहुमूल्यमणिखचितखट्वानिषण्णा (विशे०)।

(म) ध्यायति स्म—दध्यौ, चिन्तयामासेत्यर्थः [ध्यै+लट्-तिप् "लट् स्मे" (३।२।११८ पा०) इत्यतीते लट्]। उपचक्रमे—आरेभे [उप+क्रम+लिट्-ए "प्रोपाभ्यां समर्थाभ्याम्" (१।३।४२ पा०) इत्यात्मनेपदम्]। कर्मणः,—शुभोदर्कक्रियाया अशुभोदर्कक्रियाया वा, वीजम्—अङ्कुरमिव वीजं कर्मवीजं—परिणामे शुभाशुभहेतुभूतं कर्म इत्यर्थः (६ष्ठी तत्पु०), यद्वा,—कर्मरूपं—शुभाशुभरूपमित्यर्थः, वीजमिव वीजं कर्मवीजं (रूपककर्मधा०), उप्तम्—आचरितं, येन यादृक् कर्म आचरितमित्यर्थः, उप्तं वीजं कालेन अङ्कुरितं भूत्वा यथा फलदं भवति, तथा आचरितं शुभाशुभकर्मरूप वीजम् इहैव जन्मनि जन्मान्तरेऽपि वा अवश्यमेव फलप्रदं भवतीति निष्कर्षः [वप+क्तः "वचिस्वपियजादीनां किति" (६।१।१५ पा०) इति सम्प्रसारणम्]। पूर्वकृतं—जन्मान्तरानुष्ठितमित्यर्थः। विधिना—विधात्रा।

(य) प्रकटय्य—प्रख्याप्य [प्र+कट+णिच्+ल्यप् "ल्यपि लघुपूर्वात्" (६।४।५६ पा०) इति णेरयादेशः]। ममज्ज—प्रविवेशेत्यर्थः (मस्ज+लिट्-णल्)।

पूर्वमत्र मयेह दृष्टं, क्व (र) अब्धिः ? क्व च दृष्टनष्टोऽयं दिव्याङ्गनासहितस्तरुः ? यदि च अब्धेरीदृश एव शश्वदाकारः, तदा लक्ष्मीन्दुपारिजाताद्याः अस्मात् न किमुद्गताः ?" इति सञ्चिन्तयन्तं दीर्घदर्शिनं विलोक्य विस्मयाऽऽविष्टं कर्णधारादयोऽब्रुवन्,—"भद्र ! एवमेषा वरकन्यका सदैव इह दृश्यते, निमज्जति च क्षणेन, तव तु अस्या नवं दर्शनम्" इति तैरुक्तः स मन्त्री सविस्मयस्तेन निधिदत्तेन समं पोतात् सागरतीरमाससाद। तत्र (ल) उत्तारितभाण्डेन तेन वणिजा हृष्टभृत्येन सह स मन्त्री तद्गृहं गत्वा बहून् दिवसान् तत्र सुखेन

---

(र) अब्धिः,—समुद्रः। आदौ दृष्टः,—ईक्षितः, पश्चात् नष्टः,—अदर्शनं गतः दृष्टनष्टः,—प्रत्यक्षानन्तरमेवान्तर्द्धानं गतः (विश०। स्नातानुलिप्तवत् कर्म्मधा०)। क्व अब्धिः ? क्व चायं तरुः ? क्वद्वयमुभयोः महदन्तरसूचकम्, अगाधजलराशिमध्ये ईदृश्याः कामिन्याः तथा तरोश्च अवस्थानस्य अतीवासम्भाव्यत्वादिति भावः। च—पक्षान्तरे, अथवा इत्यर्थः, अब्धेः,—समुद्रात। शश्वत—सदा (अव्य०। "पुनःसदार्थयोः शश्वत" इति शाश्वतः), आकारः, चेद्भवेदिति शेषः। किं—कथम ? उद्गताः,—उत्थिताः, न इत्यत्र भवेयुरिति शेषः ; अत्र काकुः। समुद्रात नित्यमेव यदि ईदृशी रमणीया सुन्दरी ईदृशः मनोज्ञः तरुश्चोत्तिष्ठेत, तदा लक्ष्मीचन्द्रपारिजातवृक्षादयः देवासुरकर्त्तृकसमुद्रमन्थनावसरे कथं नोद्गच्छेयुः ? तेषामुद्गमनमेव स्वाभाविकम्, अब्धेः रत्नाकरत्वात् इति भावः। अमृतार्थं देवासुरैः यदा समुद्रः ममन्थे, तदा लक्ष्मीः, चन्द्रः, पारिजातवृक्षः, उच्चैःश्रवाः अश्वः, ऐरावतो हस्ती तस्मात समुद्भवन् इति पुराणवार्त्ता। कर्णधारादयः,—नाविकादयः ("कर्णधारस्तु नाविकः" इत्यमरः। अत्रादिपदेन पोतचालकादीनां ग्रहणम्)। वरा—श्रेष्ठा ("देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये" इत्यमरः), सा चासौ कन्यका—कुमारी चेति वरकन्यका—उत्तमाङ्गना। ("पुंवत् कर्म्मधारयजातीयदेशीयेषु" (६।३।४२ पा०) इति पुंवद्भावः ]। पोतात्—अर्णवयानात। आससाद—प्राप (आ+सद+लिट्-णल्)।

(ल) उत्तारितानि—अवरोपितानि, भाण्डानि—वणिङ्मूलधनानि, पण्यद्रव्याणि वा येन तेन उत्तारितभाण्डेन—अवतारितमूलधनेन, अवतारितपण्यद्रव्येण च (विश०। बहुव्री०)। हृष्टाः,—प्रमुदिताः, स्वदेशागमनादिति भावः,

स्थित्वा तं निषिद्धसमुवाच,—"सार्थवाह! भवद्गृहे अहं चिरं सुखेन विश्रान्तः, इदानीं स्वदेशं गन्तुमिच्छामि, भद्रमस्तु ते" इत्युक्त्वा तमनिच्छन्तमपि वणिक्पतिमामन्त्र्य स दीर्घदर्शी सत्त्वमात्रसहायस्ततः प्रतस्थे।

क्रमेण नानादेशानतिक्रमन् निजम् (व) अङ्गविषयं प्रायात्। तत्र यशःकेतुना राज्ञा तदन्वेषणाय नियुक्ताः (श) चारा वह्नि-नगरमागतं तं ददृशुः। ततस्तैर्विज्ञप्तो राजा तद्विश्लेषसुदुःखितः स्वयं नगरात् निर्गत्य तमभ्यगात्। ततश्चोपेत्य (ष) परिष्वज्य अभिनन्द्य च अध्वश्रमक्षामधूसरं तम् अभ्यन्तरमनयत् अब्रवीच्च तं विश्रान्तं,—"मन्त्रिन्! अस्मान् त्यक्त्वा त्वया किमर्थं याव-

---

भृत्याः,—सेवकाः यस्य तेन हृष्टभृत्येन—आनन्दितपरिचारकेण। सार्थवाह!—भो वणिक्! ("वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक्" इत्यमरः)। भद्रं—कल्याणं ("श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः)। आमन्त्र्य—अभिनन्द्य, प्रशस्येत्यर्थः (आ+मन्त्र+णिच्+ल्यप्)। सत्त्वं—गुणविशेषः, बलं वा ("सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इत्यमरः), तन्मात्रः,—तदेव, सहायः,—सहचरः यस्य तादृशः सत्त्वमात्रसहायः,—सत्त्वगुणमात्रावलम्बनः, बलमात्रावलम्बनो वा, एकाकी एवेति भावः। प्रतस्थे—निर्जगाम, प्रस्थितवानित्यर्थः [प्र+स्था+लिट्-ए "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम्]।

(व) अङ्गस्य—देशविशेषस्य राजानः अङ्गाः ["द्व्यञ्मगधकलिङ्गसूरमसादण्" (४।१।१७० पा०) इत्यण् "तद्राजस्य बहुषु तेनैवास्त्रियाम्" (२।४।६२ पा०) इति राजप्रत्ययान्तस्य लुक्], तेषां विषयं—जनपदम् अङ्गविषयम्—अङ्गदेशं, प्रायात्—समागच्छत् (प्र+आ+या+लङ्-द्)।

(श) चाराः,—प्रणिधयः, अन्वेषणार्थं नियुक्ताः पुरुषा इत्यर्थः।

(ष) परिष्वज्य—आलिङ्ग्य [परि+ष्वन्ज+ल्यप् "अनिदिता हल उपधायाः क्ङिति" (६।४।२४ पा०) इति उपधानकारलोपः], अभिनन्द्य—समादरादिना सन्तोष्य, गुणख्यापनादिना प्रशस्येति वा (अभि+नन्द+णिच्+ल्यप्), अध्वनि—पथि, यः श्रमः,—पथपर्य्यटनक्लमः, तेन क्षामः,—कृशः, स चासौ धूसरः,—ईषत्पाण्डुश्चेति तादृशम् अध्वश्रमक्षामधूसरं—पथश्रान्तं धूलिमलिनञ्चेत्यर्थः (विश्व०)

च्छरीरं निःस्नेहपरुषामिमां दशां मानसं नीतम्? अथवा भगवतो भवितव्यस्य गतिं विचित्रां को विज्ञातुमर्हति? येन अकस्मात् ते तीर्थादिभ्रमणे मतिरेषाऽभवत्; तत् ब्रूहीदानीं कि त्वया देशा भ्रान्ताः? किञ्च नवं वस्तु दृष्टम्?" इति। ततः स क्रमात् वर्णयन् सुवर्णद्वीपान्तम् (स) अध्वानम्, अब्धौ समुत्थितां गाढ़त्नीं त्रिजगत्सारभूतां कल्पतरुस्थितां तां दिव्यकन्यकां तस्मै यथावदकथयत्।

राजा तु तत् श्रुत्वैव तथा (ह) स्मरवशोऽभवत्, यथा तया विना राज्यजीविते निष्फले अमन्यत; अवदच्च तं मन्त्रिणम् एकान्ते नीत्वा,—"मन्त्रिन्! मयाऽवश्यमेव सा द्रष्टव्या, नो चेत् मे जीवितं नास्तीत्यवधारय; भवितव्यतां प्रणम्य त्वदुक्तेन पथा गच्छामि, अहं ते न निवारणीयः, नानुगम्यश्च; गुप्त-

---

कर्मधा०)। यावच्छरीरं—शरीरं, यद्वा,—देहावधि ("यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः), निःस्नेहात्—अविरतपर्य्यटनेन देहस्य स्नेहपदार्थ-क्षयात्, परुषां—कर्कशां, रुक्षामिति यावत्; मानसपक्षे,—निःस्नेहात्—अस्मान् प्रति प्रेमभावपरित्यागात्, परुषां—रुक्षां, कठोररूपामित्यर्थः (विशे०। ५मी तत्पु०); यद्वा,—निःस्नेहा चासौ परुषा चेति तां (कर्म्मधा०) निःस्नेहपरुषां—रुक्षकर्कशां, विरक्तकठोरां च। दशाम्—अवस्थां, यावच्छरीरं मानसमित्यन्वयः, सर्वशरीरं मनश्चेत्यर्थः, यद्वा,—शरीरावधि समीपपर्य्यन्तमित्यर्थः (अत्र नीतामिति नयतेर्द्विकर्म्मकत्वात् यावच्छरीरं मानसमिति उक्ते मुख्ये कर्म्मणि १मा०, दशामिति अप्रधाने २या०)। भ्रान्ताः,—पर्य्यटिताः [भ्रम+कर्म्मणि क्तः "अनुनासिकस्य क्विझलोः क्ङिति" (६।४।१५ पा०) इति दीर्घः]।

(स) अध्वानं—पन्थानम्।

(ह) स्मरस्य—कामस्य, वशः,—अधीनः स्मरवशः,—कामायत्तः। तया—कन्यया, नागरीत्यया इत्यर्थः। राज्यञ्च जीवितञ्च—जीवनञ्च ते राज्यजीविते—राजत्वं जीवनञ्चेत्यर्थः (द्वन्द्व०)। एकान्ते—एकस्मिन् प्रान्ते, निर्जने इत्यर्थः। नो—न, चेत—यदि, इत्यामीति शेषः। अवधारय—निश्चिनु, भवितव्यताम्—अवश्यम्भाविताम्। ते—तया (कर्त्तरि ६ष्ठी०)। न अनुगम्यः,—न अनुसरणीयः;

मेकाकी गच्छामि, राज्यन्तु मे त्वया रक्ष्यम्, इदञ्च मद्वचो नान्यथा कार्य्यं, मया असुभिः शापितोऽसि" इत्युक्त्वा तत्प्रतिवादं निरस्य तं मन्त्रिणं विससर्ज्ज। तदा स दीर्घदर्शी (क) अनल्पोत्सवेऽपि विमना इव आसीत्; स्वामिनि असाध्यव्यसनासक्ते सन्मन्त्रिणां कुतः सुखम्?।

अथान्येद्युः स राजा तस्मिन् मन्त्रिणां वरे न्यस्तराज्यभारः निशि तापसरूपधरः यशःकेतुः स्वात् नगरात् प्रतस्थे। गच्छंश्च स पथि कुशं नाम मुनिमपश्यत्। सोऽपि तं प्रणतं (ख) तापसकल्पं समादिशत्,—"वत्स! लक्ष्मीदत्तेन वणिजा साकं पोतेन वारिधौ गत्वा अभीष्टां कन्यां प्राप्स्यसि, निराकुलो व्रज"।

---

[अनु+गम+"प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" (३।३।१६३ पा०) इति यत्]। असुभिः,—प्राणैः (करणे ३या०। "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः), शापितः,—शपथं कारितः, यदि मद्वचनं न श्रोष्यसि तदा मे प्राणवधपातकी भविष्यसि इत्यादिरूपेण, मां मृतमेव द्रक्ष्यसि इत्यादिरूपेण वा दत्तदिव्यः इति भावः (शप+णिच्+क्तः)। तस्य—मन्त्रिणः, प्रतिवादं—प्रतिकूलवचनं, निजवाक्यस्य प्रत्युत्तरेण विपरीतवचनम् इत्यर्थः, निरस्य—निवार्य्य (निर्+अस+ल्यप्)। विससर्ज्ज—तत्याज, गृहं प्रेषयामास इत्यर्थः (वि+सृज+लिट्-णल्)।

(क) अनल्पः,—महान्, उत्सवः,—आनन्दजनकव्यापारः तस्मिन् अनल्पोत्सवे—महानन्दकरविषयेऽपि (कर्म्मधा०। औपश्लेषिके ७मी०), दीर्घकालानन्तरं स्वदेशप्रत्यागमनरूपे इति भावः। स्वामिनि—प्रभौ ("स्वामी प्रभुविशाखयोः" इति मेदिनी), असाध्यं—साधयितुमशक्यं, प्रतिक्रियाक्षमतावहिर्भूतमित्यर्थः, यत् व्यसनं—विपत्, कामजदोषो वा ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः), तत्र आसक्ते—अनुरक्ते असाध्यव्यसनाऽऽसक्ते—अप्रतिविधेयविपत्तिकरव्यापारे दृढप्रवृत्ते इत्यर्थः, अथवा,—असंशोध्यदोषानुष्ठानप्रवणे (७मी तत्पु०। भावे ७मी०), सागरान्तःस्थाया दैववालासदृश्यास्तस्या लाभप्रयत्नस्य निष्फलत्वसम्भावनया विपत्तिजनकतया चेति भावः।

(ख) तापसात् ईषदूनं तापसकल्पं—मुनिसदृशं, तापसरूपधरत्वात् इति

इति तद्वचनं श्रुत्वा हृष्टः प्रणम्य च तं राजा गच्छन् देशान् नदीः (ग) अद्रींश्चातिक्रम्य तमम्बुधिमाससाद ; तस्य च तीरे मुनिप्रोक्तेन तेन लब्धोदत्तेन स्वर्णद्वीपं यियासुना वणिजा सहसा अस्य सङ्गतिरजायत ; तेन च चक्राङ्कपादमुद्रादिदर्शनात् प्रह्वेन सह स नृपः प्रवहणमारुह्य अम्बुधौ प्रतस्थे। सम्प्राप्ते मध्यमब्धेस्तस्मिन् प्रवहणे, सहसा कल्पविटपिस्कन्धाधिरूढ़ा सा कन्यका (घ) उदगात्। यावत् राजा (ङ) चकोरश्चन्द्रिकामिव तां पश्यति, तावत् सा तथैव वल्लकीवाद्यसङ्गतं गायति स्म,— "यत् कर्मबीज येन प्रागुप्त, तत्फलं तेन नियतं भोक्तव्य, पूर्व-कृतं हि विधिरपि नान्यथा कर्त्तुं प्रभवति ; तस्मात् यत्र यथा-

भावः [ तादृश + "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" (५।३।६७ पा०) इति कल्पप् ]। निराकुलः,—अव्यग्रः, शान्तः इति यावत्।

(ग) अद्रीन्—पर्वतान्, अतिक्रम्य—उल्लङ्घ्य ( अति + क्रम + ल्यप् )। गन्तुमिच्छुना यियासुना—जिगमिषुणा, गन्तुमिच्छुना इत्यर्थः. [ या + सन् + 'सनाशंसभिक्ष उः' (३।२।१६८ पा० ) इति उः ]। चक्रं—चक्राकाररेखाविशेषः, अङ्कः—चिह्नं ययोः तादृशौ पादौ चरणौ ( कर्मधा० ), तद्रूपा मुद्रा—महाराजोऽयमिति प्रत्ययोत्पादकचिह्नविशेषः इत्यर्थः, तदादिदर्शनात् चक्राङ्कपादमुद्रादिदर्शनात्—चक्रलाञ्छितचरणावलोकनादित्यर्थः, तेन च महाराजोऽयमिति प्रत्ययादिति भावः, प्रह्वेन—विनीतेन।

(घ) उदगात्—उदतिष्ठत् ( उत् + इ + लुङ् द )।

(ङ) चकोरः,—चन्द्रस्य सुधापायी पक्षिविशेषः, चन्द्रिका—ज्योत्स्ना ( "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः ), सुधालालसश्चकोरो यथा भोज्यान्तरं विहाय चन्द्रोदयमेव अत्यादरेण प्रतीक्षते, पश्चात् च प्रकाशिता चन्द्रिकां, तथा राजाऽपि दृश्यान्तरं विहाय तस्या एव उद्गमनमत्याग्रहेण प्रत्यैक्षिष्ट, उद्गताञ्च तां प्राद्राक्षीत् इत्याशयः। तथैव—पूर्ववदेव, वल्लकीवाद्येन—वीणावाद्येन सह ( "वीणा तु वल्लकी। विपञ्ची" इत्यमरः ), सङ्गतं—हृदयङ्गमं, मनोरमामित्यर्थः, युक्तां मिलितामिति यावत् ( "सङ्गतं हृदयङ्गमम्" इत्यमरः ), वल्लकीवाद्यसङ्गतं—वीणावाद्येन सह तालस्वरसमन्वितं यथा तथेत्यर्थः ( क्रिया विशे० । ३या तत्पु० )।

वत् यस्य यत् दैवयोगेन भवितव्यं, तत्र तेन भवितव्येनासौ जन्तुर्विवशो नीयते" इति सूचितभाव्यर्थां गीतिकां गायन्तीं तां पश्यन् राजा तत्क्षणं स्मरशराहतः निस्पन्द एवातिष्ठत्। "हे (च) रत्नाकर! तुभ्यं नमोऽस्तु, येन त्वया इमां प्रच्छाद्य श्रिया हरिर्विप्रलब्धः, तत् त्वां शरणं प्रपन्नोऽस्मि, त्वं मे इष्टसिद्धिं विधत्स्व"। यावदित्थं स राजा समुद्रं स्तौति स्म, तावत् सा कन्यका (छ) सपादपा तत्र न्यमज्जत्। तदवलोक्यैव स राजा (ज) तामनु आत्मानं सिन्धौ प्राक्षिपत्। तद्वीक्ष्य स सज्जनः लक्ष्मीदत्तः तं विनष्टं मत्वा दुःखात् देहं त्यक्तुं समुद्यतोऽभवत्। "मा तावत् (झ) साहसं कार्षीः, मग्नस्यास्य अम्बुधौ भयं नास्ति, एष राजा यशःकेतुर्नाम तापसरूपभृत्, अस्या एव कन्याया अर्थे समायातः, इयं हि अस्य पूर्वभार्या, एतां

---

सूचितः,—प्रकटितः, भावी—भविष्यन्, अर्थः,—अभिधेयः, प्राक्तनकर्मफलस्य अवश्यम्भावित्वरूपः इत्यर्थः, यया तां सूचितभाव्यर्थां—कर्मफलस्य अनतिक्रमणीयता-प्रतिपादिकामित्यर्थः।

(च) रत्नाऽऽकर!—सागर! तुभ्य (नमः-शब्दयोगात् ४र्थी०)। प्रच्छाद्य—सङ्गोपाय्य (प्र+छद+णिच्+ल्यप्), श्रिया—लक्ष्म्या (करणे ३या०)। विप्रलब्धः,—प्रतारितः (वि+प्र+लभ+क्तः), लक्ष्म्या अपि अधिकसुन्दरीयमिति भावः। शरणं—रक्षितारम्, आश्रयमित्यर्थः ("शरणं गृहरक्षित्रोः" इत्यमरः), प्रपन्नः,—प्राप्तः [प्र+पद+क्तः "रदाभ्यां निष्ठा-तो नः पूर्वस्य च दः" (८।२।४२ पा०) इति निष्ठा-तस्य धातोर्दकारस्य च नः]। विधत्स्व—सम्पादय (वि+धा+लोट्-स्व)।

(छ) पादपेन—वृक्षेण, कल्पवृक्षेणेत्यर्थः, सहिता सपादपा—सतरुका (विश०। बहुव्री०)। न्यमज्जत्—प्राविशत् (नि+मस्ज+लङ्-द)।

(ज) तामनु—तत्पश्चात् (अनुयोगात् तामिति २या०)।

(झ) साहसम्—अविमृश्यकारितां, पूर्वापरमविविच्यैव प्राणविसर्जनरूपमात्म-हननमित्यर्थः, मा कार्षीः,—न कुरु [कृ+लुङ्-सि "माङि लुङ्" (३।३।१७५

प्राप्य पुनरसौ भङ्गराज्यं गमिष्यति" इति गगनादुद्गतया वाचा समाश्वासितोऽसौ सार्थवाहः यथाकाममिष्टं देशं स्वार्थसिद्धये जगाम।

राजा यशःकेतुश्च अम्बुधौ मग्नः अकस्मात् दिव्यमेकं नगरमद्राक्षीत्। सविस्मयश्च तत् नगरं (अ) भास्वन्मणिमयस्तम्भैः काञ्चनोज्ज्वलभित्तिभिः मुक्ताजालगवाक्षकैः प्रासादैः विराजमानं, नानारत्नशिलाबद्धसोपानवापिकैः कामदैः कल्पवृक्षाख्यैः उद्यानैरुपशोभितं दृष्ट्वा समृद्धेऽपि तत्र पुरे निर्जने गृहं गृहं प्रविश्य यदा तां प्रियां क्वापि न दृष्टवान्, तदा विचिन्वन्

---

पा०) इति लुङ् "न माङ्योगे" (६।४।७४ पा०) इत्यडागमप्रतिषेधः]। अर्थे—निमित्तमित्यर्थः। यथाकामं—यथाऽभिलषितम् (अव्ययी०)।

(अ) भास्वन्तः,—उज्ज्वलाः, ये मणयः,—रत्नानि, तन्मयाः,—तदात्मकाः, स्तम्भाः,—स्थूणाः यत्र तैः भास्वन्मणिमयस्तम्भैः,—भासुररत्नस्तम्भशोभितैरित्यर्थः (विश०। बहुव्री०), काञ्चनैः,—स्वर्णैः, उज्ज्वलाः,—प्रदीप्ताः, भित्तयः,—कुड्यानि येषां तैः काञ्चनोज्ज्वलभित्तिभिः,—स्वर्णमयभास्वत्कुड्यसंयुक्तैः (विश०। बहुव्री०), मुक्ताजालेन—मौक्तिकसमूहेन, गवाक्षाः,—वातायनानि येषां तैः मुक्ताजालगवाक्षकैः,—मौक्तिकविनिर्म्मितवातायनसमन्वितैः, यद्वा,—मुक्ताजालानि—जालाकारविन्यस्तमुक्तासमूहाः, गवाक्षे येषां तैः मुक्ताजालगवाक्षकैः,—जालाकारेण ग्रथितमुक्ताच्छादितवातायनरन्ध्रैः (विश०। बहुव्री०। स्वार्थे कः), प्रासादैः,—हर्म्यैः, देवानां राज्ञाञ्च आवासभवनैरित्यर्थः ("प्रासादो देवभूभुजाम्" इत्यमरः)। नाना,—विविधाः, रत्नशिलाः,—पद्मरागगारुत्मादिमणिप्रस्तराः, ताभिः आबद्धानि—घटितानि, सोपानानि—आरोहणानि, आरोहणावरोहणसाधनानीत्यर्थः, यासां तादृश्यः वापिकाः,—दीर्घिकाः यत्र तैः नानारत्नशिलाऽऽबद्धसोपानवापिकैः,—विविधवर्णमणिशिलानिबद्धसोपानश्रेणीयुक्तजलाशयैः (विश०। बहुव्री०), कामानि—काम्यान्, अभिलषितवस्तूनीत्यर्थः ("कामः स्मरेच्छयोः पुमान्। रेतस्यपि निकामे च काम्येऽपि स्यान्नपुंसकम्"॥ इति मेदिनी), ददतीति तैः कामदैः,—वाञ्छितप्रदैः [विश०। उपप०। काम+दा+"आतोऽनुपसर्गे कः" (३।२।३ पा०) इति कः "आतो लोप—" (६।४।६४ पा०) इति आकारलोपः]। समृद्धे—महासम्पद्युक्ते

उत्तुङ्गमेकं मणिमन्दिरमारुह्य तद्द्वारमुद्धाट्य तत्र प्रविवेश। प्रविश्य च तत्र संन्द्रुतपर्य्यङ्कस्थितां वस्त्राऽऽच्छादितसर्वाङ्गां शयानाम् (ट) एककामेक्षिष्ट,—"किं स्यात् सैवेयम् ?" इति सोत्कण्ठं यावत् तन्मुखमुद्धाटयति, तावत् तामेव ईप्सितां कन्यकामद्राक्षीत्। तद्दर्शनेन चास्य तदा (ठ) काऽपि अवस्था ग्रीष्मर्त्तुमरुपान्थस्य सरिद्दर्शनेनेवाभवत्। साऽपि उन्मीलित-लोचना तं (ड) कल्याणाकृतिलक्षणं काम्यं प्राप्तं वीक्ष्य सम्भ्रमात् शयनमजहात्। ततश्च कृताऽऽतिथ्या चानतमुखी (ढ) फुल्लेक्षणोत्पलन्यासैः पादयोः पूजयन्ती शनैरभ्यधात्,—

(विण०)। विचिन्वन्—अन्विष्यन् (वि+चि+शतृ), उत्तुङ्गम्—अत्युन्नतम्। उद्धाट्य—अनावृत्य। (उत्+घट+णिच्+ल्यप्)।

(ट) एक एव एककः, तामेककां—द्वितीयसहायरहिताम्, एकाकिनी-मित्यर्थः [एक+"एकादाकिनिच्चासहाये" (५।३।५२ पा०) इति असहाये कन्, ततः स्त्रियां टाप्]। ईप्सितां—वाञ्छिताम् [आप+सन्+"आप्ज्ञप्यृधामीत" (७।४।५५ पा०) इति ईत् "अत्र लोपोऽभ्यासस्य" (७।४।५८ पा०) इति अभ्यासलोपे ईप्स इति धातोः क्तः]।

(ठ) काऽपि—अनिर्वचनीया, प्रकाशयितुमशक्येत्यर्थः। ग्रीष्मर्त्तौ—निदाघ-काले, मरोः,—मरुभूमिस्थस्य इत्यर्थः, पान्थस्य—पथिकस्य ग्रीष्मर्त्तुमरुपान्थस्य—ग्रीष्मसमये मरुदेशपर्य्यटकस्य पथिकस्य, सरिद्दर्शनेन—नदीविलोकनेन, मरुभूमि-विचारिणः दुःसहपिपासया कण्ठागतप्राणस्य मुमूर्षोः पर्य्यटकस्य इतस्ततो जला-न्वेषणेन श्रान्तस्य सहसा नदीदर्शनेन यथा अनिर्वचनीयानन्दोदयो भवति, राज्ञोऽपि तथा आनन्दः समभूदित्यर्थः।

(ड) कल्याणे—शुभे, प्रशस्ते इत्यर्थः, आकृतिलक्षणे—रूपचिह्ने यस्य तं कल्याणाकृतिलक्षणं—सुरूपं सुलक्षणञ्चेत्यर्थः, काम्यं—कामयितव्यम्, अभि-लषणीयं वस्तु इत्यर्थः। सम्भ्रमात्—संवेगात्, त्वरावशादित्यर्थः, समादरात् वा ("सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी)।

(ढ) ईक्षणे—नयने, उत्पले—इन्दीवरे इवेति ईक्षणोत्पले (उपमिति स०), फुल्ले—विकसिते, ईक्षणोत्पले—नेत्रेन्दीवरे, तयोः न्यासैः,—निक्षेपैः फुल्लेक्षणोत्पल-

"महाभाग! को भवान्? कथमिदमगम्यं रसातलं प्रविष्टोऽसि? राजलक्षणाङ्कितनोस्ते तापसव्रतं किमिदम्? महाभाग! यदि ते मयि प्रसादस्तदा एतदाख्याहि"।

एवं तस्या वचः श्रुत्वा स राजा तां प्रत्युवाच,—"सुन्दरि! अहमङ्गराजः यशःकेतुर्नाम, (ख) आप्ताज्जनादिहाम्बुधौ दृश्यां त्वामश्रौषं, ततस्त्वदर्थम् इमं वेशं कृत्वा राज्यं विमुच्य आगत्य च अनुमार्गेण इह प्रविष्टोऽस्मि, तन्मे काऽसि त्वं कथय"। इति तेनोक्ता सा सलज्जा सानुरागा च तमभ्यधात्,—"महाभाग! मृगाङ्कसेन इति (ग) श्रीमानस्ति विद्याधराधिपः, मां मृगाङ्कवतीं नाम तस्याऽऽत्मजां विद्धि। स पिता मामस्मिन् नगरे एकाकिनीं विमुच्य केन हेतुना सपौरजनः क्वापि गतः, इत्यहं न जाने; तेनाहं (घ) शून्यवसतेरस्मात् वारिधौ उन्मज्ज्य कल्पद्रुमाऽऽरूढा भवितव्यतां गायामि"। एवमुक्तवती सा

न्यासे,—प्रफुल्लनयनकुवलयपातैः (६ष्ठी तत्पु०। करणे ३या०)। प्रसाद,—अनुग्रह.। आख्याहि—कथय (आ+ख्या+लोट्-हि)।

(ख) आप्तात्—प्रत्ययितात्, विश्वस्तादित्यर्थः ("आप्तः प्रत्ययितस्त्रिषु" इत्यमरः)। दृश्या—दर्शनार्हाम्, अतीव सुन्दरीमिति भाव.। अश्रौषम्—आचकर्णम् (श्रु+लुङ्-अम्)। अनुमार्गेण—पथ लक्ष्यीकृत्य, तव प्रवेशपथमनुसृत्येत्यर्थः। मे-मह्यम् [ "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" (वा०) इति सम्प्र० ४र्थी० ]।

(ग) प्रशस्ता श्रीः,—लक्ष्मीरस्य अस्तीति श्रीमान्—प्रभूतसम्पद्युक्तः (श्री+प्रशंसाया भूम्नि वा मतुप्)। विद्धि—जानीहि [ विद+लोट् हि "हुझल्भ्यो हेर्धिः" (६।४।१०१ पा०) इति हेर्धिः ]।

(घ) शून्या—हीना, जनविरला इति यावत्, वसतिः,—वेश्म, आवासगृहमित्यर्थः ("वसतिर्वेश्मयामिन्योः" इति शाश्वतः), यत्र तस्मात्; यद्वा,—शून्या वसतिः,—वासः ("वसतिः स्यात् स्त्रियां वासे यामिन्याञ्च निकेतने" इति मेदिनी) यत्र तस्मात् शून्यवसतेः,—निर्जनादित्यर्थः (विश०। बहुव्री०)। उन्मज्ज्य—उद्धृत्य (उत्+मस्ज्+ल्यप्)।

तस्य (द) मुनेर्वचः स्मरता तेन राज्ञा पेशलैः सुवचोभिः तथा अरज्यत, यथा अनुरागविवशा तत्क्षणं तस्य वीरस्य भार्य्यात्वम् अङ्गीकृत्य समयमेकमभ्यधात्,—"आर्य्यपुत्र! प्रतिमासं शुक्लकृष्णचतुर्दश्याम् अष्टम्याञ्च अनायत्ता चतुरो दिवसान् यत्र क्वापि गच्छन्ती अहं त्वया न निवार्य्या, नापि द्रष्टव्या; अत्र हि कारणं विद्यते" इति। ततः "तथा" इति (ध) प्रतिपद्य स राजा गान्धर्वेण विधिना तां परिणीय तत्र तया सह दिव्य भोगसुखं बुभुजे।

एकदा सा मृगाङ्कवती दिव्यसम्भोगसुखावस्थितं तं भूपं प्राह स्म,—"नाथ! त्वमिहैव प्रतीक्षस्व, कार्य्यार्थं क्वापि अहं यामि, अद्य सा कृष्णचतुर्दशी मम सम्प्राप्ता। आर्य्यपुत्र! गृहस्यास्य अमुं (न) स्फाटिक गृहं मास्म गमः, मा अत्र वाप्यां निपतितो भव, तर्हि भूलोकं त्वं तत्क्षणं गमिष्यसि"

(द) मुनेः,—कृशस्य। पेशलैः,—मनोहरैः। अरज्यत—समतुष्यत [ रञ्ज+कर्म्मणि लङ्-त "आनादिता हल उपधायाः क्ङिति" (६।४।२४ पा०) इति रञ्जेर्नलोपः]। अनुरागेण—अतिप्रेम्णा, विवशा—विह्वला, आत्मसंवरणाक्षमेति यावत्, अनुरागविवशा—प्रणयाधीना (विण०। ३या तत्पु०)। समयं—नियमं ("समयः शपथे भाषासम्पदोः कालसंविदोः। सिद्धान्ताचारसङ्केतनियमावसरेषु च॥ क्रियाकारनिर्देशे च" इति हेमः)। अभ्यधात्—अचीकथत (अभि+धा+लुङ्-द)। प्रतिमासं—मासि मासि (वीप्सायामव्ययी०)। अनायत्ता—अनधीना, विवशा इत्यर्थः।

(ध) प्रतिपद्य—स्वीकृत्य (प्रति+पद+ल्यप्)। गन्धर्वाणामयमिति गान्धर्वः, तेन गान्धर्वेण—गन्धर्वैरात्यनुष्ठितेन, विधिना—नियमेन, "इच्छयाऽन्योऽन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयः मैथुन्यः कामसम्भवः" इत्युक्तरूपपरस्पर-मनोनयनपूर्वकमाल्यपरिवर्त्तनरूपविधानेनेत्यर्थः। बुभुजे—अनुबभूव [ भुज+लिट्-ए "भुजोऽनवने" (१।३।६६ पा०) इत्यात्मनेपदम् ]।

(न) स्फाटिकं—स्फटिकनिर्म्मितम्। मास्म गमः,—न गच्छ [ गम+लुङ्-सि

इत्युक्त्वा तमामन्त्र्य तस्मात् पुरात् सा बहिरगात्। राजाऽपि गृहीतखड्गस्तां (प) जिज्ञासुरन्वगमत्, यद्राक्षीच्च तमःश्याम-व्यात्तवक्त्रबिलं साकारमिव पातालमागच्छन्तं कमपि राक्षसम्। स च राक्षसः निपत्यैव घोरं रवं कुर्वन् तां मृगाङ्कवतीं वक्त्रे निक्षिप्य (फ) निगीर्णवान्। तदवलोक्यैव स राजा अतिकोपेन सहसा ज्वलन् (ब) निर्मोकमुक्तभुजग-श्यामलेन महाऽसिना क्रोधाऽऽक्रष्टेन धावित्वा रक्षसस्तस्य सन्दष्टोष्ठपुटं शिरश्चिच्छेद।

ततो (भ) मोहनिशाऽन्धे विनष्टगतिके कान्तावियोगार्त्ते

---

"भूते लङ् च" (३।३।१७६ पा०) इति लुङ् "न माङ्योगे" (६।४।७४ पा०) इत्यडागमप्रतिषेधः]। वाप्यां—दीर्घिकायाम्।

(प) ज्ञातुमिच्छुः जिज्ञासुः,—कुत्रेयं गमिष्यति इति विविदिषुः [ ज्ञा + सन् + "सनाशंसभिक्ष उः" (३।२।१६८ पा०) इति उः]। तमः,—अन्धकारम् इव, श्यामं—कृष्णवर्णं, व्यात्तं—विवृतञ्च, वक्त्रं—मुखं, बिलं—गह्वरमिव यस्य तं तमः-श्यामव्यात्तवक्त्रबिलम्—असंवृतघोरकृष्णवर्णमुखगह्वरं (विश०। बहुव्री०), साकारं—मूर्त्तिमन्तम् (विश०)।

(फ) निगीर्णवान्—भक्षितवान् [नि + गॄ + क्तवतु "ऋत इद्धातोः" (७।१।१०० पा०) इति इत् "हलि च" (८।२।७७ पा०) इति दीर्घः, "रदाभ्यां निष्ठातो नः—" (८।२।४२ पा०) इति नः]।

(ब) निर्मोकात्—कञ्चुकात्, मुक्तः,—त्यक्तः, भुजगः,—सर्प इव, श्यामलेन—श्यामवर्णेन निर्मोकमुक्तभुजगश्यामलेन—कञ्चुकनिःसृताहिवत् कृष्णोज्ज्वलेनेत्यर्थः (विश०)। सन्दष्टौ—दन्तनिपीड़ितौ, ओष्ठपुटौ यत्र तादृशं सन्दष्टोष्ठपुटं—दंशितोष्ठाधरम् (विश०। बहुव्री०)।

(भ) मोहः,—मूर्च्छा एव, निशा—रात्रिः, ज्ञानाभावसाधर्म्यादिति भावः, तया अन्धे—दृष्टिशक्तिहीने मोहनिशाऽन्धे—प्रियाविरहजशोकात् मूर्च्छितप्रायतया निमीलितलोचने इत्यर्थः (विश०। ३या तत्पु०), विनष्टा—विध्वस्ता, गतिः,—गमनशक्तिरित्यर्थः, यस्य तादृशे विनष्टगतिके—गतिशक्तिविरहिते, मोहोपस्थित्या इति भावः [विश०। बहुव्री०। "शेषाद्विभाषा" (५।४।१५४ पा०) इति कः]।

कृपे अकस्मात् मेघमलिनस्य तस्य रक्षसः अङ्गं भित्त्वा उद्योतित-दिक्चक्रा विमला चन्द्रमूर्त्तिरिव सा मृगाङ्कवती जीवन्ती अक्षताङ्गी विनिर्ययौ। तां तथा सङ्कटोत्तीर्णां कान्तां दृष्ट्वा राजा,—"एहि एहि" इति वदन् प्रधाव्यैव आलिलिङ्ग। "प्रिये! किमेतत्? स्वप्नोऽयमुत माया?"। इति तेन पृष्टा सा संस्मृत्य विद्याधरी प्रत्यभाषत,—"आर्य्यपुत्र! शृणु, नायं स्वप्नः, नापि माया; अयं हि विद्याधरेन्द्रात् स्वपितुर्मम शापोऽभूत्। स मे पिता बहुपुत्रोऽपि इह वसन् वात्सल्यात् मया विना आहारं नाकरोत्। अहञ्च सर्वदा इह निर्जने (अ) शर्वपूजाऽऽसक्ता चतुर्दश्यामष्टम्योश्च द्वयोरेव पक्षयोरागच्छम्।

एकदा चतुर्दश्यामिहाऽऽगत्य चिरं गौरीं समर्चयन्त्या (य) मे दैवात् समस्तं दिनमवसितम्। तस्मिन् दिने स मम पिता (र) मत्प्रतीक्षः क्षुधितोऽपि मां प्रति कुपितः किञ्चि-दपि नाभुङ्क्त, नापि अपिबत्। ततो रात्रयाम् (ल) उपेतायां सापराधां मामधोमुखीं भवितव्यताबलात् असेहः शपति स्म,—"यस्मात् त्वं मामवज्ञाय क्षुधार्त्तं सर्वं दिनं विस्मृतवत्यसि, तस्मात् मासि मासि अष्टम्योश्चतुर्दश्योश्च हराच्चनरमात् पुरात्

कृपे (भावे ७मी०)। उद्योतितम्—उद्भासित, दिक्चक्र—दिङ्मण्डल यया सा उद्योतितदिक्चक्रा—प्रकाशितदिक्समूहा (विश०। बहुव्री०)।

(अ) शर्वस्य—महादेवस्य, पूजायाम्—अर्च्चनायाम्, आसक्ता—अनुरक्ता शर्वपूजाऽऽसक्ता—शिवाऽऽराधनतत्परा (विश०। ७मी तत्पु०)। द्वयोरेव—शुक्ल-कृष्णयोर्द्वयोरेवेत्यर्थः।

(य) मे—मम (शेषे ६ष्ठी०)। अवसितं—समाप्तम्, अवसानं जातमित्यर्थः [अव+सो+क्तः "द्यतिस्यति—" (७।४।४० पा०) इति इत्वम्]।

(र) मह्यं प्रतीक्षा—अपेक्षा यस्य सः मत्प्रतीक्षः,—ममागमनपथनिरीक्षण-कारीत्यर्थ. (विश०। बहुव्री०)।

(ल) उपेतायाम्—उपस्थितायां, मयीति शेषः, मयि समागतायां सत्या-

वर्षियांन्ती त्वां कृतान्तसन्त्रासो नाम राक्षसो निगरिष्यति, ततश्चास्य हृदयं भित्त्वा भित्त्वा निरेष्यसि, शापं तञ्च निगरणव्यथां न स्मरिष्यसि, एकाकिनी च अत्र स्थास्यसि” इति शापं ददत् स मयाऽनुनीतः ध्यात्वा शापान्तमकरोत्,—“यदाऽङ्गपतिः यशःकेतुस्तव भर्त्ता भूत्वा राक्षसेन निगीर्णां त्वां दृष्ट्वा तं राक्षसं निहनिष्यति, तदा त्वं तस्य हृदयान्निर्गता शापात् मोक्ष्यसे, संस्मरिष्यसि च शापादिसर्वा निजा विद्याः”। इति शापान्तमुक्त्वा इह मामेकाकिनीं मुक्त्वा (व) सपरिच्छदो निषधाद्रिं गतः; अहं तदादेशेन शापमोहादिहावसम्। स शापश्चास्य मे क्षीणः, जाता च सर्वत्र स्मृतिः; तदद्य (श) तात-पार्श्वगमनाय निषधाद्रिं व्रजामि, शापान्ते स्वगतिं प्राप्स्यामि

मित्यर्थः (भावे ७मी०)। चतुर्दश्यो:,—शुक्लकृष्णोभयपक्षीययोरित्यर्थः, एवं चतुर्दश्योरपि, हरस्य—शिवस्य, अर्चने—आराधने, यो रसः,—रागः, अनुराग इत्यर्थः (“शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः” इत्यमरः), तस्मात् हरार्चन-रसात्—शिवपूजाऽनुरागात् (७मी तत्पु०। हेतौ ५मी०)। कृतान्तस्य—यमस्यापीत्यर्थः, सन्त्रासः,—विपुलं भयं यस्मात् स कृतान्तसन्त्रासः,—यमस्यापि यमः इति भावः (विग्र०। बहुव्री०)। निगरिष्यति—भक्षयिष्यति (नि+गॄ+लृट्-स्यति)। भित्त्वा—विदीर्य (भिद+क्त्वा), निरेष्यसि—निर्गमिष्यसि (निर्+इ+लृट्-स्यसि)। निगरणव्यथां—राक्षसकवलजं दुःखम्। ध्यात्वा—चिन्तयित्वा, ध्यानस्थो भूत्वेत्यर्थः (ध्यै+क्त्वा)। मोक्ष्यसे—उद्धारिष्यसे इत्यर्थः (मुच+कर्म्मकर्त्तरि लृट्-स्यते)।

(व) सपरिच्छदः,—सपरिवारः (“परिच्छदः परिवारः” इत्यमरटीकायां क्षीरस्वामिभानुजीदीक्षितौ), निषधाद्रिं—निषधाख्यं पर्वतं, हरिवर्षस्य सीमान्त-स्थितमिति यावत्।

(श) तातस्य—पितुः (“तातोऽनुकम्प्ये पितरि” इति हेमचन्द्रः), पार्श्व-गमनाय—समीपगमनाय तातपार्श्वगमनाय—पितृसन्निधिगमनाय। शापान्ते—पित्रा यः अभिशापः दत्तः तस्य अवसाने, स्वगतिं—स्वां—स्वकीयां, विद्याधरोचिता-मित्यर्थः, गतिं—दशां, ज्ञानं वा (“गतिः स्त्रीमार्गदशयोः ज्ञाने यात्राऽभ्युपाययोः”

इत्येष मे नियमः। त्वमिह (घ) आस्व, व्रज वा स्वराष्ट्रम्, यथा ते स्वातन्त्र्यम्"।

एवं तयोक्तो नृपतिर्दुःखितस्ताम् (ङ) अभ्यर्थयामास,—"सुन्दरि! सप्ताहानि त्वया न गन्तव्यं, सुमुखि! प्रसीद, इह उद्याने त्वया सह क्रीड़न् औत्सुक्यं विनोदयामि। ततस्त्वं पितुः स्थानं गमिष्यसि, अहञ्च स्वस्थानं यास्यामि"।

ततः सः "तथा" इति (च) प्रतिपन्नया तया कान्तया तस्मिन्नुद्याने सजलोत्पलनेत्रासु "मा स्म याहि अस्मान् विहाय" इति हंससारसनिचयैः रुवन्तीष्विव उच्छ्रितवीचि-हस्तासु वापीषु षड़हं रेमे। ततः सप्तमेऽहनि स राजा

इति मेदिनी), वैद्याधरीं दशां, विद्याधरीोचितामवस्थामित्यर्थः। नियमः,—निश्चयः, निवा निर्दिष्ट इत्यर्थः।

(घ) आस्व—तिष्ठ (आस+लोट्-स्व)।

(ङ) अभ्यर्थयामास—ययाचे। औत्सुक्यम्—उत्कण्ठाम्।

(च) प्रतिपन्नया—स्वीकृतया। सजलोत्पलं—जलबिन्दुसंसृष्टमिन्दीवरं, नेत्रं—चक्षुरिव यासां तासु, अन्यत्र,—सजलं—साश्रु, उत्पलमिव नेत्रं यासां तासु सजलोत्पलनेत्रासु—साश्रुकुवलयनयनासु (विष०। बहुव्री०)। हंससारसनिचयैः,—जलस्थहंससारससमूहैः, तेषां कलध्वनिकरणैरित्यर्थः (करणे ३या०), रुवन्तीषु—ध्वनन्तीषु, व्याहरन्तीषु इति यावत, अन्यत्र,—क्रन्दन्तीषु इति ध्वनिः (रु+शतृ+"उगितश्च" (४।१।६ पा०) इति ङीप्), उच्छ्रिताः,—उद्वेलिताः, आन्दोलिता इति भावः, वीचयः,—तरङ्गाः, हस्ताः,—करा इव यासां तासु, अन्यत्र,—उच्छ्रिताः,—उत्तोलिताः, मा याहि मा याहि इति कृत्वा ऊर्द्धमुत्थाप्य आन्दोलिता इत्यर्थः, वीचय इव हस्ता याभिः तासु उच्छ्रितवीचिहस्तासु—उद्धतोर्म्मिकरासु, वापीषु—दीर्घिकासु, कासुचित् नायिकासु इति ध्वनिः; चिरपरिचिताः वाप्यः तस्या भाविवियोगदुःखं सोढ़मशक्नुवाना: स्वासु प्रस्फुटितोत्पलरूपसजलनेत्रैः क्रन्दन्त्यः तरङ्गरूपहस्तान् उद्यम्य हंससारसानां ध्वनिरूपवाक्यैः मा याहि इति व्याहरन्त्यः तद्गमनं निवारयन्ति इति भावः। रेमे—चक्रीड़ [रम+लिट्-ए "अत एकहल्मध्येऽनादेशादेर्लिटि" (६।४।१२० पा०) इति अभ्यासलोपः अकारस्य एकारश्च]।

(क) युक्त्या यत्र भूलोकप्रापिणी द्वारवापिकाऽस्ति, तत्र गृहे तां कान्तामनयत्; तत्र चाऽऽगत्य तां कण्ठे गृहीत्वा तस्यां वाप्यां निपत्य सहसा तया स्वपुरोद्याने वापीमध्यादुत्तस्थौ।

तत्र कान्तासमेतं प्राप्तं तं भूपं दृष्ट्वा उद्यानपालकाः प्रहृष्टा गत्वा मन्त्रिणं दीर्घदर्शिनं जगदुः। सोऽपि आगत्य पादयोः पतित्वा तम् (ख) आनीतेप्सिताङ्गनं सपौरोऽभ्यन्तरं प्रावेशयत्। "अहो! कथं सैषा दिव्याङ्गना अनेन राज्ञा प्राप्ता? या (ग) व्योम्नि विद्युदिव चपलदृश्या मया दृष्टा; धात्रा ललाटाक्षरपङ्क्तिषु यस्य यल्लिखितं, तत्तस्य असम्भाव्यमपि अवश्यम् उपतिष्ठते"। इति तस्मिन् (घ) मन्त्रिमुख्ये अन्यस्मिंश्च जने ध्यायति, सा मृगाङ्कवती तं भूपतिं स्वदेशाऽऽगतं दृष्ट्वा पूर्णसमाप्ता वैद्याधरीं गतिं गन्तुमियेष, परं तदा

---

(क) युक्त्या—उपायेन, केनचित् व्याजेनेत्यर्थः। भूलोकप्रापिणी—मर्त्यगामिनी (विश०), द्वारभूता वापिका द्वारवापिका—भूलोकगमनाय द्वारस्वरूपा दीर्घिकेत्यर्थः (शाकपार्थि०)। तया—मृगाङ्कवत्या सह।

(ख) आनीता—सम्प्राप्ता, ईप्सिता—अभिलषिता, अङ्गना—कामिनी येन तम् आनीतेप्सिताङ्गनं—सम्प्राप्ताकाङ्क्षितनायिकं (विश०। बहुव्री०), सपौरः,—पुरवासिवर्गसहितः (मन्त्री इत्यस्य विश०)।

(ग) व्योम्नि—वारिधि, समुद्रजले इत्यर्थः, अन्यत्र,—व्योम्नि—आकाशे ("व्योम वारिधि चाऽऽकाशे भास्करस्यार्चनाश्रये" इति मेदिनी)। चपलं—चपलतं, दृश्या—दर्शनीया चपलदृश्या—मुहूर्त्तमात्रमवलोकनार्हा, एकत्र,—शीघ्रमेव वारिधौ निमग्नत्वात्, अन्यत्र,—अचिरप्रभत्वात् इति भावः (विश०। सुप्सुपेति स०)। धात्रा—विधात्रा। उपतिष्ठते—समुपगच्छतीत्यर्थः [उप+स्था+लट्-ते "अकर्मकाच्च" (१।३।२६ पा०) इत्यात्मनेपदम्]।

(घ) मन्त्रिषु—अमात्येषु, मुख्यः,—प्रधानः तस्मिन् मन्त्रिमुख्ये—सचिवश्रेष्ठे (७मी तत्पु०। भावे ७मी०)। ध्यायति—चिन्तयति (ध्यै+शतृ)। विद्याधराणामियं वैद्याधरी तां वैद्याधरीं—विद्याधरसम्बन्धिनी गतिं—दशाम्, अवस्था-

उत्पतनी विद्या स्मृतौ नाविरासीत्। ततः सा (ङ) मुषितेव परं विषादमगमत्।

"कथमेवं विषण्णाऽसि? प्रिये! वद" इति राज्ञाऽभिहिता सा विद्याधरी तमब्रवीत्,—"अहं शापमुक्ताऽपि यत् (च) इयच्चिरं त्वत्स्नेहपाशसंयमिता स्थिता, तेन मम विद्या दिव्या गतिश्च नष्टा"। तदाकर्ण्य राजा,—"ममेयं विद्याधरी (छ) सिद्धा" इति प्रहृष्टः महान्तमुत्सवं चकार। तदवलोक्य स दीर्घदर्शी मन्त्री निशि गृहं गत्वा शयनार्थं प्राप्य च सहसा

---

मित्यर्थः, विद्याधरलोकगमनोपयोगिनीं शक्तिमिति यावत्, यद्वा,—गति—मार्गं, विद्याधरलोकगमनाय निर्दिष्टं पन्थानमित्यर्थः, यद्वा,—गति—ज्ञानं, विद्याधरोचितामाकाशगमनान्तर्धानादिविद्यामित्यर्थः ("गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राऽभ्युपाययोः" इति मेदिनी)। इयेष—अभिललाष [इष+लिट् णल् "अभ्यासस्याऽसवर्णे" (६।४।७८ पा०) इति अभ्यासस्य इय]। उत्पतनी—ऊर्द्धगामिनी, व्योममार्गे विचरणशक्तिसाधिका इत्यर्थः। आविरासीत्—प्रादुरभवत्, आविर्भूतवती-त्यर्थः (आविस्+अस+लङ् द)।

(ङ) मुषिता—हृता, चौरैरपहृतसर्वस्वा इत्यर्थः, उत्पतनीविद्याया विस्मरणा-दिति भावः, यद्वा,—मुषिता—खण्डिता, शस्त्राऽऽहता इति भावः (विण०। मुष+क्त, स्त्रियां टाप्। "मुषित हृतखण्डितयोः" इति मेदिनी)।

(च) इद परिमाणमस्य इयत्—एतावत् [इदम्+"किमिदम्भ्यां वो घः" (५।२।४० पा०) इति वतुप्, वस्य च घ "इदकिमोरीश्की" (६।३।९० पा०) इति इदम ईशादेशः, "यस्येति च" (६।४।१४८ पा०) इति ईशो लोपः], चिरं—दीर्घकालं, त्वयि स्नेहः,—प्रीतिः, पाशः,—रज्जुरिव, तेन संयमिता—आबद्धा त्वत्स्नेहपाशसंयमिता—तव प्रणयरज्जुबद्धा (विण०। ३या तत्पु०)। दिव्या गतिः,—आकाशगतिः।

(छ) सिद्धा—निष्पन्ना, ममैव स्त्रीत्वेन प्रतिपन्ना, इतः परं न विद्याधर-पुरीं गमिष्यतीति भावः, यद्वा,—सिद्धा—नित्या, सदैव मत्सकाशे स्थास्यति नान्यत्र यास्यतीति भावः ("सिद्धो व्यासादिके देवयोनौ निष्पन्नमुक्तयोः। नित्ये प्रसिद्धे" इति हैमः)।

(ज) हृत्स्फोटेन व्यपद्यत । ततो राजा स्वयं धृतराज्यभारः तया मृगाङ्कवत्या सह चिरं स्वर्गसुखमनुभवन् तस्थौ" ।

इति कथामाख्याय स वेतालः पर्य्यपृच्छत्,—"राजन्! स्वामिनस्तथा (झ) अभ्युदये सम्पन्ने तस्य महामन्त्रिणः हृदयं यत् स्फुटितं, तस्य को हेतुः? किं दिव्याङ्गना मया नाऽऽप्ता इति शुचा? वा राज्यार्थिनः पुनः राजाऽऽगमनजेन दुःखेन? यदि जानन्नपि एतत् मह्यं न वक्ष्यसि, तदा ते धर्मो (ञ) विनङ्क्ष्यति, यास्यति च ते शिरः शतधा खण्डतम्"। इत्याकर्ण्य राजा तं वेतालम् अवादीत्,—"योगीश्वर! नैतत् द्वयमपि (ट) शुभचरिते मन्त्रिवरे सम्भवति, किन्तु 'येन भूभुजा स्त्रीमात्रानुरागात् राज्यमुपेक्षितम्, अधुना तु दिव्यस्त्रीरक्तस्य तस्य अत्र का वार्त्ता? तस्मै कष्टे कृतेऽपि प्रत्युत दोष एव समधिको जातः' इति विभावयतस्तस्य मन्त्रिणो हृदयं स्फुटित-

---

(ज) हृदः,—हृदयस्य, स्फोटः,—स्फुटनं, विदरणमित्यर्थः, तेन हृत्स्फोटेन—वक्षोविदरणेन ।

(झ) अभ्युदये—वृद्धौ, दिव्याङ्गनारूपसम्पल्लाभे इत्यर्थः । शुचा—शोकेन । राज्य—राजत्वम्, अर्थयितुं—याचितुं शीलमस्य इति राज्यार्थिनः,—राज्यलोलुपस्य [ "सुप्यजातौ णिनिस्ताच्छील्ये" (३।२।७८ पा०) इति ताच्छील्ये णिनिः ]।

(ञ) विनङ्क्ष्यति—ध्वंसिष्यते, विनष्टो भविष्यतीत्यर्थः [ वि+नश+लृट्-स्यति "मस्जिनशोर्झलि" (७।१।६० पा०) इति नुम् ]।

(ट) शुभचरिते—साधुस्वभावे । उपेक्षितम्—अवज्ञातम् (उप+ईक्ष+क्तः)। दिव्यस्त्रियां—विद्याधराङ्गनायां, रक्तस्य—आसक्तस्य दिव्यस्त्रीरक्तस्य—विद्याधरीप्रसक्तस्य (विश० । ७मी तत्पु०)! अत्र—राज्योपेक्षणे । वार्त्ता—कथा इत्यर्थः । कष्टे—राज्ञः राजकार्य्ये मनोयोगविधानाय तीर्थाटनरूपक्लेशभोगे इत्यर्थः । प्रत्युत—वैपरीत्येन, दोष एव—अनिष्ट एव, यद्यहं तीर्थभ्रमणाय नागच्छं, तदा दिव्याङ्गनादर्शनमपि नाघटत, राजाऽपि तदा तां नाऽऽप्स्यत्, अतः मे तीर्थभ्रमणक्लेशः दुःखाय एव सञ्जात इत्याशयः । विभावयतः,—चिन्तयतः (वि+भू+णिच्+शतृ)।

मिति मन्ये"। इत्यभिहितो वेतालः स (ठ) मायी तत्क्षणात् निजमेव निलयं जगाम। राजाऽपि तमवाप्तुं पुनरुद्यतः तमेव शिंशपातरुमाससाद।

---

## अथ त्रयोदशकथा।

अथ राजा पुनः शिंशपामूलं गत्वा तं वेतालं स्कन्धमारोप्य पूर्ववत् प्रातिष्ठत। गच्छन्तञ्च तं पुनर्वेतालः प्राब्रवीत्,— "राजन्! शृणु सङ्क्षिप्तामिकां कथाम्,—

अस्ति वाराणसी नाम पुरी। तत्र देवस्वामीति राजमान्यो द्विजः कश्चित् प्रतिवसति स्म। तस्य महाधनस्य हरिस्वामीति सुतोऽभवत्। (क) तस्य लावण्यवती नाम उत्तमा पत्नी आसीत्, यां तिलोत्तमादिसुराङ्गनानिर्माणेन शिक्षितकौशलो विधिरनर्घरूपलावण्यैर्विनिर्ममे। कदाचित् स हरिस्वामी तया

(ठ) माया—कुहकम् अस्यास्तीति मायी—कुहकी (विश०। अस्त्यर्थे इन्)। निलयम्—आवासं, शिंशपावृक्षमिति यावत्।

---

(क) तस्य—हरिस्वामिनः। तिलोत्तमा—तन्नामाप्सराः, आदिर्यासां तादृश्यः सुराङ्गनाः,—देवकामिन्यः, अप्सरसः इत्यर्थः, तासां निर्माणेन—सृजनेन तिलोत्तमादिसुराङ्गनानिर्माणेन—तिलोत्तमाप्रभृत्यप्सरसां निर्मित्या, शिक्षितं—बहुसर्गैर्विनिर्माणेन अभ्यस्तमित्यर्थः, कौशलं—नैपुण्यं येन सः शिक्षितकौशलः,—पुनःपुनस्तत्तमाङ्गनासृष्ट्या अभ्यस्तसृजनपारिपाट्यः इत्यर्थः (विश०। बहुव्री०)। नास्ति अर्घः,—मूल्यं, मूल्येनाक्रेयत्वादिति भावः ("मूल्ये पूजाविधावर्घः" इत्यमरः), यस्य तादृशं यत् रूपलावण्यं—सौन्दर्यादिकमित्यर्थः, तैः अनर्घरूपलावण्यैः,—अमूल्यसौन्दर्यप्रभादिभिरित्यर्थः (कर्मधा०), विनिर्ममे -ससर्ज (वि+निर्+मा+लिट्-ए)।

कान्तया चन्द्रांशुशीतले (ख) हर्म्ये रतिश्रान्तो निद्रां ययौ। तस्मिंश्च काले (ग) कामचारी मदनवेगो नाम विद्याधरकुमारः तेन पथा नभसि सञ्चरन् तत्र समायात्, अपश्यच्च तां लावण्यवतीं पत्युः पार्श्वे सुप्ताम्। स तु दृष्ट्वैव तां सुप्तामेव गृहीत्वा नभोमार्गेण प्रायात्।

क्षणेन च प्रबुद्धो हरिस्वामी तां प्राणेश्वरीमपश्यन् ससम्भ्रमं शयनादुदतिष्ठत्,—(घ) "अहो! सा मम कान्ता क्व गता? कुपिता किं मयि? आहोस्वित् प्रच्छन्ना मच्चित्तं जिज्ञासुः क्वापि स्थिता परिहसति?" इत्येवं बहु (ङ) वितर्कयन् व्याकुलः समन्तात् हर्म्यप्रासादवलभीषु अन्विष्यन् निशि अभ्रमत्, परम् आगृहोद्यानात् सर्वत्र चिन्वन् कुतोऽपि तां न प्राप। ततः शोकाग्निसन्तप्तः स (च) सगद्गदं विललाप,—"हा!

(ख) हर्म्ये—सौधे, हर्म्यपृष्ठे इति यावत्।

(ग) कामेन—स्वेच्छया, चरितुं—भ्रमितुं शीलमस्य इति कामचारी—यथेच्छविहारी ["सुप्यजातौ णिनिस्ताच्छील्ये" (३।२।७८ पा०) इति णिनिः]।

(घ) अहो—खेदसूचकमव्ययम्। आहोस्वित्—अथवा (अव्य०)।

(ङ) वितर्कयन्—विचारयन् (वि+तर्क+णिच्+शतृ)। हर्म्यं—धनिनां वासगृहं ("हर्म्यादि धनिनां वासः" इत्यमरः), प्रासादः,—देवागारं ("प्रासादो देवभूभुजाम्" इत्यमरः), वलभी—चन्द्रशाला, सौधोपरिस्थगृहमित्यर्थः ("चिलाघर" इति वङ्गभाषा। "गृहान्ते वलभी चन्द्रशाले सौधोर्द्ध्ववेश्मनि" इति रभसः), तासु हर्म्यप्रासादवलभीषु—स्वकीयाट्टालिकादेवागारसौधस्योपरिवर्त्तिषु, स्वगृहे देवमन्दिरे हर्म्योपरिस्थक्षुद्रगृहे चेत्यर्थः (द्वन्द्व०)। परं—किन्तु, गृहोद्यानात्—गृहसमीपस्थोपवनात्, आ—व्याप्य आगृहोद्यानं—हर्म्यमारभ्य गृहोद्यानमभिव्याप्येत्यर्थः, तस्मात् ["आङ् मर्यादावचने" (१।४।८९ पा०) इति पञ्ची०। "आङ्मर्यादाऽभिविध्योः" (२।१।१३ पा०) इत्यव्ययी०]। चिन्वन्—अन्विष्यन् इत्यर्थः (चि+शतृ), कुतः,—कस्मादपि स्थानात्, किमपि स्थानमन्विष्येत्यर्थः (ल्यब्लोपे पञ्ची०), यद्वा,—कुतः,—कुत्रेत्यर्थः।

(च) गद्गदः,—शोकजाश्रुसंरुद्धकण्ठदेशतया अस्पष्टभाषणमित्यर्थः, तेन सह

चन्द्रमुखि ! हा ! ज्योत्स्नासिताङ्गि ! हा ! प्रिये लावण्यवति ! रात्र्या तुल्यगुणद्वेषात् अनया किं न सोढाऽसि ?। त्वया कान्त्या जिता याऽयं चन्द्रः चन्दनशीतलैः (क) करैः मामसुखयत्, सोऽयं त्वया विना लब्धान्तर इव तैरेव ज्वलद्भिरङ्गारैरिव विषदिग्धैराशुगैरिव मां तुदति"। इत्येवं विलपतस्तस्य हरिस्वामिनः

---

सगद्गदम्—अस्पष्टाक्षरं यथा तथेत्यर्थः (क्रिया विश०), विललाप—परिदिदेव (वि+लप+लिट्-णल्)। ज्योत्स्ना—कौमुदी, तद्वत् सित—शुभ्रम्, अङ्गं यस्याः तत्सम्बुद्धौ ज्योत्स्नासिताङ्गि !—चन्द्रिकाधवलकलेवरे !। रात्र्या—यामिन्या (कर्तृ), तुल्यगुणेन—सदृशगुणेन, समानगुणवत्त्वेनेत्यर्थः (हेतुना), यो द्वेषः,—ईर्ष्या, तव गुणासहिष्णुता इत्यर्थः, तस्मात् तुल्यगुणद्वेषात्—समानगुणासहनात् (६या तत्पु०। हेतौ ५मी०), तुल्यगुणत्वञ्च रात्र्या सह लावण्यवत्या चन्द्रवन्मुखत्वात् ज्योत्स्नावत् सिताङ्गलावण्यादिमत्त्वाच्च अवगन्तव्यम्, चन्द्रस्यैव रात्रेरुपस्थापकत्वात् चन्द्रस्य रात्रेर्मुखभूतता, लावण्यवत्यास्तु अतिसुन्दरमुखत्वात् चन्द्रवन्मुखवत्त्वम्, अत एव निशया सह तस्याः तुल्यगुणत्वम्, एवं ज्योत्स्नालावण्यादिकमपि निशायामेव चन्द्रोदये जायते, अतस्तया रात्रेरङ्गभूतत्वं, लावण्यवत्या अपि ज्योत्स्नासमानशुभ्राह्लादकाङ्गकान्तित्वात् लावण्यपूर्णत्वाच्च निशया तुल्यगुणत्वं, दृश्यते च लोके तुल्यगुणपुरुषद्वयं परस्परं द्विषत् अन्योऽन्यमपकरोति, एवं रात्रिरपि तुल्यगुणां लावण्यवतीं द्विषन्ती स्वप्रतिष्ठासंरक्षणार्थं तां हृतवतीत्याशयः। सोढा—क्षान्ता, सहनार्हा इत्यर्थः, सोढा इत्यत्र त्वमिति शेषः [सह+क्त. "हो ढः" (८।२।३१ पा०) इति हस्य ढः, "झषस्तथोर्धोऽधः" (८।२।४० पा०) इति निष्ठा-तस्य धः, "ष्टुना ष्टुः" (८।४।४१ पा०) इति धस्य ढः, "ढो ढे लोपः" (८।३।१३ पा०) इति ढकारलोपः]।

(क) करैः,—किरणैः। असुखयत्—सुखमन्वभावयत्, सुखिनमकरोदित्यर्थः ["सुखदुःखतत्करणे" इति सुखशब्दात् "तत्करोति तदाचष्टे" (ग०) इत्यनेन करोत्यर्थे णिचि "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (ग०) इत्यनेन णिचि परे टिलोपे सुखि इति धातोः लङ्-द]। लब्ध—प्राप्तम्, अन्तरम्—अवकाशो येन सः लब्धान्तरः,—प्राप्तावसरः, तवानुपस्थित्या भयशून्यः इत्यर्थः (विश०। बहुव्री०), तैः—करैः। विषदिग्धैः,—विषलिप्तैः (विश०। ३या तत्पु०), आशुगैः,—बाणैः ("आशुगौ मारुते बाणे" इति शाश्वतः)। तुदति—पीडयति (तुद+लट्-तिप्), सौन्दर्यसङ्ग्रामे त्वया पराजितश्चन्द्रः यैः शीतलैः करैः त्वद्भयात् नियतं मां सुखिन-

सा निशा कष्टेन (ञ) व्यरंसीत्, न तु विरहव्यथा। अथ प्रातः (झ) भास्वान् करैः विश्वस्य सन्तमसं बिभेद, परं तस्य हरिस्वामिनो मोहान्धतमसं न भेत्तुं चक्षमे। (ञ) तीर्णनिशैश्चक्राङ्गैरिव वितीर्णस्तस्य करुणाऽऽक्रन्दितध्वनिः शतगुणत्वं भेजे। स स्वजनैः (ट) सान्त्व्यमानोऽपि वियोगानलदीपितः

---

मकरोत्, इदानीं त्वदभावात् छिद्रं लब्ध्वा निर्भीकः स एव चन्द्रः तैरेव करैः मां नित्यं पीडयति इति सरलार्थः।

(ञ) व्यरंसीत्—अपागमत्, अतिक्रान्ताऽभूदित्यर्थः [वि+रम+लुङ्-द "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्]; न तु विरहव्यथा, इत्यत्र व्यरंसीत् इति योजनीयम्।

(झ) भास्वान्—सूर्यः। विश्वस्य—जगतः, सन्तमसं—विष्वक्तमः, सर्वतोव्यापि अन्धकारमित्यर्थः ("तमः। विष्वक् सन्तमसम्" इत्यमरः), बिभेद—ननाश (भिद+लिट्-णल्)। मोहः,—अविद्या, ममत्वबोधजनितासक्तिविशेषः इत्यर्थः ("अथ मोहो नृलिङ्गः स्यादविद्यायाञ्च मूर्च्छने" इति मेदिनी), स एव अन्धतमः,—गाढध्वान्तं, निविडान्धकारमित्यर्थः ("ध्वान्ते गाढेऽन्धतमसम्" इत्यमरः), तं मोहान्धतमसम्—अज्ञानघनान्धकारं [सन्तमसमन्धतमसमिति पदद्वयम् "अवसमन्धेभ्यस्तमसः" (५।४।७९ पा०) इति समासान्तः अच्]। चक्षमे—शशाक (क्षम+लिट्-ए)।

(ञ) तीर्णा—उत्तीर्णा, अतिवाहिता इत्यर्थः, निशा—रात्रिः यैस्तैः तीर्णनिशैः,—यापितरात्रिकैः, चक्रवाक्या सह विच्छिन्नतया इति भावः, चक्राङ्गैः,—रथाङ्गनामकैः, चक्रवाकैरित्यर्थः, वितीर्णः,—विस्तृतिं गतः, स्वस्थानात् दूरमतिगत इत्यर्थः। करुणः,—दीनः, स चासौ आक्रन्दितध्वनिः,—क्रन्दनशब्दः, चक्रवाकपक्षे,—आह्वानध्वनिः (कर्मधा०। आक्रन्दित इति भावे क्तः, तेन "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् आक्रन्दितम् आक्रन्द इत्यर्थः, "आक्रन्दः क्रन्दने हाने मित्रदारुणयुद्धयोः। भ्रातर्यपि च पुंसि स्यात्" इति मेदिनी), चक्रवाकद्वन्द्वः निशायां परस्परवियुक्तः नद्युभयतीरे तूष्णीम् आस्ते इति कविसमयप्रसिद्धिः; निशावसाने स विमुक्तकण्ठः करुणस्वरेण अन्योऽन्यमाह्वयति। हरिस्वामी तु रात्रिशेषे अधिककरुणम् उच्चैः चक्रन्द इत्यर्थः।

(ट) सान्त्व्यमानः,—आश्वास्यमानः (सान्त्व+णिच्+कर्मणि शानच्)।

तां प्रेयसीं विना धृतिं न लेभे; "इहानया स्थितम्, इह स्नातम्, इह प्रसाधनं कृतम्, इह च विहृतम्" इति इतस्ततः रुरोद। (ठ) बान्धवः सुहृदश्च तमेवं प्राबोधयन्,—"न तावत् सा मृता, कथं वा त्वया आत्मा हन्यते? तदवश्यं तामवाप्तासि, धैर्य्य-मवलम्बस्व, तां गवेषय च, धीरस्य उद्योगिनोऽप्राप्यमिह नास्ति" इति। इत्येवं (ड) बोधितः स हरिस्वामी कष्टेन कैश्चित् दिनैः धृतिं बबन्ध, अचिन्तयच्च,—"सर्वस्वं ब्राह्मणसात् कृत्वा तीर्थानि तावत् भ्रमामि, पापसञ्चयञ्च क्षपयामि, पापक्षये जाते जातु तां प्रियां भ्राम्यन्नवाप्नुयाम्"। इत्यालोच्य स समुत्थाय स्नानादिकमकरोत्।

अन्येद्युश्च (ढ) सत्रे विविधान्नपानानि कृत्वा अवारितं द्विजजनानामभ्यवहारमकारयत्, धनानि च तेभ्यः सर्वाणि

---

धृति—धैर्य्यम्। प्रसाधन—वेशम्, अलङ्करणमित्यर्थः, अलङ्काररचनादिना आत्मनः शोभासम्पादनमिति यावत् ("त्रिष्वथो वेशः प्रसाधनम्" इति मेदिनी)। विहृतं—क्रीडितं (वि+हृ+क्तः)।

(ठ) बान्धवः,—ज्ञातयः ("सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः)। एवं—वक्ष्यमाणप्रकारेण, प्राबोधयन्—समाश्वासयन् (प्र+बुध+णिच्+लङ्-अन्)। अवाप्तासि—लब्धासे [अव+आप+लुट्-तासि "अनद्यतने लुट्" (३।३।१५ पा०) इति लुट्]। अवलम्बस्व—आश्रयस्व (अव+लबि+लोट्-स्व)। गवेषय—अन्विष्य (गवेष+णिच्+लोट् हि)।

(ड) बोधितः,—आश्वासितः (बुध+णिच्+क्तः)। बबन्ध—आलम्बे इत्यर्थः (बन्ध+लिट्-णल्)। ब्राह्मणेभ्यः देय ब्राह्मणसात्—विप्राधीनमित्यर्थः ["ब्राह्मण+"देये त्रा च" (५।४।५५ पा०) इति साति:]। पापसञ्चयं—सञ्चितपापं, क्षपयामि—नाशयामि [क्षप+णिच्+लट्-मिप्। अथवा—क्षै+णिच्+लट्-मिप् "आदेच उपदेशेऽशिति" (६।१।४५ पा०) इति ऐकारस्य आकारे कृते "अर्त्तिह्रीव्ली—" (७।३।३६ पा०) इति पुगागमः]। जातु—कदाचित्। अवाप्नुयां—लभेय (अव+आप+लिङ्-याम्)।

(ढ) सत्रे—यज्ञे, सदादाने वा, "सदाव्रत" इति प्रसिद्धे अन्नपानादि-

प्रादात्। (ण) ब्रह्मण्यमात्रवित्तश्च स्वदेशान्निर्गत्य प्रियां प्राप्तुं तीर्थानि भ्रमितुमगात्। भ्राम्यतश्च तस्य (त) भीमो ग्रीष्मर्त्तुकेशरी प्रचण्डादित्यवदनो दीप्ततद्रश्मिकेशरः समाजगाम। समीरणश्च प्रियाविरहसन्तप्तानां पान्थानां निःश्वासमारुतैः (थ) न्यस्तोष्मा इव अत्युष्णो वहति स्म। जलाशयाश्च (द) शुष्यद्विपाण्डुपङ्काः घर्मलुप्ताम्बुसम्पदः स्फुटितहृदया इव दृश्यन्ते स्म।

---

दानचैले इत्यर्थः ("सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च" इत्यमरः)। अवारितम्—अनिषिद्धं यथा तथा (क्रिया विश०)। अभ्यवहारं—भोजनम् (अभि+अव+हृ+घञ्)।

(ण) ब्रह्मणो भावः कर्म वा ब्रह्मण्यं—ब्राह्मणाचारः, पूजनादिकं ब्राह्मणकर्म वा इत्यर्थः, तन्मात्रं—तदेव, वित्तं—धनं यस्य सः ब्रह्मण्यमात्रवित्तः,—विप्रत्वमात्रविभवः (विश०। बहुव्री०)।

(त) भीमः,—भयानकः, एकत्र,—प्राणिनां तीव्रसन्तापदायकत्वात्, अन्यत्र,—भीतिजनकत्वात्, ग्रीष्मर्त्तुः,—निदाघकालः, केशरी—सिंह इव सः ग्रीष्मर्त्तुकेशरी—ग्रीष्मकालरूपः सिंहः (उपमितस०), सिंहस्तु सावयवः प्राणी, ग्रीष्मकालस्तु न तथा, ग्रीष्मकालश्चेत सिंहः, तदा तस्य मुखादिकमङ्गं किं भवेत्? इत्याशंसायां मुखादिकं प्रदर्शयति, प्रचण्डेति!—प्रचण्डः,—सुतीक्ष्णः, आदित्यः,—सूर्य्यः, वदनं—मुखमिव यस्य सः, ग्रीष्मकाले सूर्य्यदेवो तीक्ष्णतरो भवति इति सर्वानुभूतमेव (विश०। बहुव्री०), सिंहस्य केशरादिकं विद्यते, ग्रीष्मकालश्चेत् सिंहः, तदा कीदृशः तस्य केशरः भवेत्? इत्याशंसायामाह, दीप्तेति।—दीप्ताः,—प्रभोज्ज्वलाः, तस्य—सूर्य्यस्य, रश्मयः,—किरणाः, केशराः,—जटाः इव, सिंहग्रीवास्थरोमाणः इव इत्यर्थः, यस्य सः दीप्ततद्रश्मिकेशरः,—प्रोज्ज्वलसूर्य्यमयूखरूपसटालः इत्यर्थः; सिंहस्य आपिङ्गलाः सूक्ष्माः केशरा विद्यन्ते, ग्रीष्मर्त्तौस्तु सूर्य्यमण्डलं परितः ये आपिङ्गलाः स्फुरज्ज्वालाः मयूखाः शलाका इव दृश्यन्ते, ते एवात्र केशरसदृशत्वेनावधातव्याः; स्फुरद्रश्मिजालरूपकेशरवान् ग्रीष्मकालरूपसिंहः तीक्ष्णसूर्य्यकिरणरूपं वदनं व्यादाय जगत् ग्रसितुं समायात इत्यर्थः।

(थ) न्यस्तः,—स्थाप्यतया निसृष्टः, न्यासीकृत इत्यर्थः, ऊष्मा—सन्तापः यस्मिन् सः न्यस्तोष्मा—न्यासरूपेण अर्पितसन्तापः (विश०। बहुव्री०)।

(द) शुष्यन्ति—प्रखरसूर्य्यकरैः शुष्कतां गच्छन्ति, अत एव विपाण्डूनि—

पादपाश्च पथिका (ध) चौत्कारमुखरास्तापम्लानदलाधराः मधुश्रीविरहिण इव समदृश्यन्त।

तस्मिंश्च काले अर्कतापेन कान्तावियोगेन क्षुधया तृषया अध्वश्रमेण चातीव क्लान्तो हरिस्वामी भोजनार्थी भ्रमन् कश्चित् ग्राममाससाद। तत्र च पद्मनाभनाम्नः विप्रस्य गृहे बहून् विप्रान् (न) भुञ्जानान् दृष्ट्वा द्वारशाखां समालम्ब्य निःशब्दनिश्चलस्तस्थौ। तथा स्थितं तमालोक्य तस्य याज्ञिकस्य विप्रस्य गृहिणी साध्वी सञ्जातदया व्यचिन्तयत्,—"अहो!

विशेषेण पाण्डुवर्णतां गतानि, पङ्कानि—कर्द्दमाः येषां तादृशाः शुष्कविपाण्डुपङ्काः,—सूर्य्यकिरणसम्पर्केण रसशोषणात पाण्डुवर्णकर्दमान्विताः (विण०। बहुव्री०), घर्म्मेण—आतपेन, रौद्रेणेत्यर्थः ("घर्म्मः स्यादातपेऽपि च" इति शाश्वतः), लुप्ताः,—विनष्टाः, शुष्काः इति यावत्, अम्बूनि—जलान्येव, सम्पदः,—विभवाः येषां ते घर्म्मलुप्ताम्बुसम्पदः,—आतपशुष्कवारिरूपधनाः (विण०। बहुव्री०), स्फुटितहृदयाः,—विदीर्णवक्षःस्थलाः, जलशोषणेन तलभागस्य उन्मुक्ततया कर्द्दमानामपि शुष्कतया विदीर्णतया च दृश्यमानाभ्यन्तरभागत्वादिति भावः (विण०। बहुव्री०)।

(ध) चौत्कारेण—उच्चरवेण, मुखराः,—सशब्दाः चौत्कारमुखराः,—विपुल-कलरवयुक्ताः इत्यर्थः, मधुश्रीवियोगेन उच्चैर्विलापपरायणा इति भावः, तापेन—आतपसन्तापेन, म्लानानि—म्लानानि, दलानि—पत्राणि एव, अधराः,—दन्त-च्छदाः येषां ते तापम्लानदलाधराः,—रौद्रदग्धकिसलयरूपाधरोष्ठाः, चौत्कार-शब्दकरणे मुखस्यावश्यकत्वात् मुखस्य च ओष्ठाधराद्यवयवसमुदायत्वात् अत्र नव-किसलयानां मुखावयवाधरत्वेनोत्प्रेक्षणमधिगन्तव्यं, विरहिणोऽपि प्रियवियोगसन्तापेन अधरम्लानता लोकदृष्टा एव; मधौ—वसन्ते, वसन्तागमे इत्यर्थः ("मधुर्मधौ वसन्तेऽपि" इति शाश्वतः), या श्रीः,—शोभा, (कायिकानायिका च इति ध्वनिः) तया विरहिताः,—वियोगिनः मधुश्रीविरहिणः,—वसन्तकालोचितसौन्दर्य्यपरित्यक्ता इत्यर्थः।

(न) भुञ्जानान्—अश्नतः [भुज+शानच् "भुजोऽनवने" (१।३।६६ पा०) इत्यात्मनेपदम्]। द्वारस्य शाखां द्वारशाखां—द्वारावयवविशेषं ("चौकाठ्" "बाजु" इति भाषा प्रसिद्धाम्)।

(प) क्षुत् नाम गुर्वी कस्य लाघवं न कुर्य्यात्? यदेष कोऽपि अन्नार्थी द्वारि अधोमुखस्तिष्ठति; दृश्यते चासौ दूरादभ्यागत इव क्षातः क्षीणेन्द्रियः; तदेषः अन्नदानपात्रम्” इत्यवधार्य्य सा साध्वी परमान्नभृतं सघृतशर्करं पात्रमुत्क्षिप्य पाणिभ्यामानीय प्रश्रयवती तस्मै ददौ, जगाद च एनं,—“भुङ्क्ष्व इह क्वचित् वापीतटे गत्वा”। सोऽपि “तथा” इति तदन्नपात्रं गृहीत्वा नातिदूरतो गत्वा क्वापि वापीतटे वटतरोरधः स्थापितवान्।

ततः स तत्र वाप्यां पाणिपादं प्रक्षाल्य (फ) आचम्य च यावत् भक्षयितुं सहर्षः परमान्नमुपैति, तावत् कश्चित् श्येनः कुतश्चित् चञ्च्वा पादद्वयेन च एकं कृष्णसर्पं गृहीत्वा तस्मिन् तरावुपाविशत्। तेन पक्षिणा (ब) आक्रम्य उह्यमानस्य

---

(प) क्षुत—क्षुधा, नाम—सम्भावनार्थकमव्यय, गुर्वी क्षुधा सर्वस्यापि लाघव कुर्य्यादिति सम्भावयामीत्यर्थः, यद्वा,—नाम इति कुत्सार्थकमव्ययम्, ईदृशीं क्षुधां धिक्, या सर्वस्यैव लाघव कुर्य्यादित्यर्थः (“नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते”॥ इति मेदिनी), गुर्वी—महती। क्षीणेन्द्रियः,—दुर्बल इत्यर्थ.। अन्नदानपात्र—भोज्यदानयोग्यम्। परमान्नेन—पायसेन, भृत—पूर्णम् इति तादृशं परमान्नभृत—परमान्नपूर्णमित्यर्थ. (परमान्न+भृ+क्तः)। पात्र—भाजनं, मृदादिनिर्म्मितमित्यर्थः, उत्क्षिप्य—उत्तोल्य, गृहीत्वेत्यर्थः (उत्+क्षिप+ल्यप्)। प्रश्रय.,—प्रणयः (“प्रश्रयप्रणयौ समौ” इत्यमरः), स अस्या अस्तीति प्रश्रयवती—अतिथौ अत्यादरवतीत्यर्थ., समादरपूर्वकमिति भावः (विश०), यद्वा,—प्रश्रयवती—विनीतेत्यर्थ.।

(फ) आचम्य—आचमनं कृत्वा, भोजनात् प्राक् शास्त्रविहित जलगण्डूषपानरूपमाचारविशेषम् अनुष्ठायेत्यर्थः, मुखप्रक्षालनं कृत्वा इत्यर्थो वा (आ+चम+ल्यप्)। श्येनः,—पक्षिविशेष.।

(ब) आक्रम्य—आक्रमणं कृत्वा, बलपूर्वकमवरुध्य इत्यर्थः (आ+क्रम+ल्यप्), उह्यमानस्य—नीयमानस्य [विशे०। वह+कर्म्मणि शानच्, “वचिस्वपि-

उत्क्रान्तजीवितस्य तस्य सर्पस्य आस्यात् विषलाला विनिर्ययौ ; सा अधःस्थिते तस्मिन्नन्नपात्रे तदाऽपतत्। हरिस्वामी तु तददृष्ट्वा क्षुधार्त्तः आगत्यैव तत् सर्वं भुक्तवान्। अथ तस्य भुक्तवत एव तीव्रा विषज्वाला प्रादुरभवत्। (भ) "अहो! विधौ विपर्य्यस्ते किमिव न विपर्य्येति? तत् सक्षीरघृतशर्करम् अन्नं मे विषीभूतम्" इति जल्पन् हरिस्वामी परिस्खलन् तां सत्रिणस्तस्य विप्रस्य गेहिनीं गत्वा प्राब्रवीत्,—"ब्राह्मणि! त्वद्दत्तात् अन्नात् मे विषं जातं, तत् क्षिप्रं कञ्चित् विषमन्त्रिणम् आनय, नो चेत् तव ब्रह्महत्या भविता"। इत्याकर्ण्य सा साध्वी "किमेतत्" इति विह्वला यावत् विषमन्त्रिणमानाययितुं चेष्टते स्म, तावत् स हरिस्वामी (म) परावृत्तनेत्रः प्राणैर्व्ययुज्यत। ततः सा निर्दोषाऽपि (य) आतिथेयी अपि सत्रिणा तेन विप्रेण मिथ्याऽतिथिवध-

यजादीनां किति" (६।१।१५ पा०) इति सम्प्रसारणम्], उत्क्रान्तम्—अपगतं, जीवितं—जीवनं यस्य तस्य उत्क्रान्तजीवितस्य—मृतस्य। आस्यात्—मुखात् ("वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः), विषमिश्रिता लाला विषलाला—सविषलाला (शाकपार्थि०)।

(भ) अहो! इति खेदसूचकमव्ययम् ; विधौ—दैवे, विपर्य्यस्ते—विपरीते, प्रतिकूले इत्यर्थः (भावे ७मी०), किमिव—किंवा, न विपर्य्येति?—न प्रतिकूलयति? न विरुद्धतामेति? अपि तु सर्वमेव विपर्य्येति इत्यर्थः (वि+परि+इ+लट्-तिप्)। अविषं विषं भूतं विषीभूतं—विषत्वेन परिणतम् (अभूततद्भावे च्विः)। परिस्खलन्—विषवेगेन स्खलितगतिः सन्, पतत्प्रायः सन् इत्यर्थः (परि+स्खल+शतृ)। सत्रिणः,—याज्ञिकस्य। विषं—विषलक्षणमित्यर्थः। विषाय—विषवेगनिवारणाय, मन्त्रः विद्यते अस्य तं विषमन्त्रिणं—विषवैद्यमित्यर्थः (विषमन्त्र+मत्वर्थे इनिः)।

(म) परावृत्ते—प्रत्यावृत्ते, तारानिकटस्थात् विवर्त्तिते इत्यर्थः, निमीलिते इति यावत्, नेत्रे यस्य सः परावृत्तनेत्रः,—निमीलिताक्षः ; यद्वा,—परावृत्तनेत्रः,—उद्वृत्तनेत्रः, ऊर्द्ध्वनेत्र इत्यर्थः; (विश०। बहुव्री०)। व्ययुज्यत—व्यश्लेष्यत (वि+युज +कर्म्मणि लङ्-त)।

(य) अतिथौ साध्वी आतिथेयी—अतिथिसेवापरायणा [विश०। अतिथि

जनितकोपेन भार्य्या निष्कासिता, शुभादपि कर्मणः समुत्पन्न-मृषापवादा जातावमाना च तपसे तीर्थमशिश्रियत्"।

इति कथामाख्याय वेतालः पृच्छति स्म,—"राजन्! एषां सर्पश्येनान्नदातॄणां मध्ये कस्य (र) विप्रवधोऽभूत्? अस्य वादो धर्मराजसकाशे अपि अभवत्, परं न कोऽपि निर्णयः समजनि; तत् राजेन्द्र! त्वमेव ब्रूहि, कस्य ब्रह्महत्या जाता? मिथ्या ब्रुवतो जानतस्ते स एव शापः स्मर्त्तव्यः" इति। तदाकर्ण्य राजा समुज्झितमौनस्तं वेतालमब्रवीत्,—"कस्य तत् पातकम्? सर्पस्य तावदवशस्य शत्रुणा भक्ष्यमाणस्य कोऽस्वाप-राधः? श्येनेनापि क्षुधितात्मना न किमपि दृष्टं, तत्तस्यापि नास्त्यपराधः। अकस्मात् (ल) प्राप्तमतिथिं भक्ष्येण भोजयतो-र्दम्पत्योरपि द्वयोर्वाऽन्यतरस्य वा कथं दोषः? यतस्तौ धर्मैक-

+"पथ्यतिथि—" (४।४।१०४ पा०) इति ढञ् "षिद्गौरादिभ्यश्च" (४।१।४१ पा०) इति ङीष्]। निष्कासिता—गृहान्निर्वासिता (निर्+कस्+णिच्+क्तः, स्त्रियां टाप्)। समुत्पन्नः,—सञ्जातः, मृषा—मिथ्या, अपवादः,—निन्दा, अतिथिहननरूप इत्यर्थः, यस्याः सा समुत्पन्नमृषाऽपवादा—सञ्जातालीककुत्सना (विश०। बहुव्री०)। तपसे—तपस्यां कर्त्तुं (तादर्थ्ये ४र्थी०)। अशिश्रियत—असेविष्ट, आश्रितवतीत्यर्थः [श्रि+लुङ् द "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" (३।१।४८ पा०) इति चङ् "चङि" (६।१।११ पा०) इति द्विर्भावः "अचि श्नुधातुभ्रुवां—" (६।४।७७ पा०) इति इयङ्]।

(र) विप्रवधः,—ब्रह्महत्यापातकः इत्यर्थः। वादः,—वितण्डा, कस्य ब्रह्महत्या अभूत् इत्यस्य तत्त्वनिर्णयार्थं परस्परयुक्तिप्रदर्शनपूर्वकः वाक्यप्रयोग इत्यर्थः, धर्मराजसकाशे—यमसन्निधौ। समजनि—अभूत [सम्+जन+लुङ्-तन् "दीप-जन—" (३।१।६१ पा०) इति चिण् "जनिवध्योश्च" (७।३।३५ पा०) इति उप-धाया वृद्ध्यभावः "चिणो लुक्" (६।४।१०४ पा०) इति चिणः परस्य तस्य लुक्]।

(ल) प्राप्तं—समुपस्थितम्। जाया च पतिश्च तयोः दम्पत्योः,—जायापत्योः ("जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते"। "दम्पती जम्पती जायापती

प्रवृत्तौ नेममपराधमर्हतः । अहं तावत् तस्यैवैषा ब्रह्महत्या इति मन्ये, योऽविचार्य्यैव (घ) एषामन्यतरस्य तां ब्रूयात्" इति । इतिवादिनो नृपस्य स्कन्धात् स वेतालस्तत्क्षणादलक्षितः तमेव शिंशपातरुमवललम्बे । राजाऽपि तमानेतुं समुद्योगी तथैव (ङ) अन्वधावत् ।

## अथ चतुर्दशकथा ।

अस्ति अयोध्या नाम नगरी, या (क) रक्षःकुलकृतान्तस्य रामस्य राजधानी आसीत् । तस्यां वीरकेतुर्नाम राजा महाबाहुः वसन् (ख) प्राकारो नगरीमिव इमां क्षौणीं ररक्ष । तस्मिन् महीपतौ शासति महीम् अस्यां पुर्य्यां रत्नदत्तो

भार्य्यापती च तौ" इत्यमरः ] । तौ—दम्पती, धर्मे—अतिथिपरिचरणरूपधर्म्मानुष्ठाने एव, एकौ,—केवलौ, न तु इत्याकरणरूपनन्दोद्दिष्टकर्म्मणि इति भावः ("एके मुख्यान्यकेवलाः" इत्यमरः), प्रवृत्तौ,—अभिनिविष्टौ तौ तादृशौ धर्मैकप्रवृत्तौ—केवलधर्म्माचरतौ (विश० । बहुव्री०) । अर्हतः,—युज्यते, ईदृशापराधस्य योग्यौ न भवतः इत्यर्थः (अर्ह + लट्-तस्) ।

(घ) एषां—सर्पश्येनान्नदातॄणाम्, अन्यतरस्य—कस्याप्येकस्य, तां—ब्रह्महत्याम् ।

(ङ) अन्वधावत्—अन्वद्रवत्, अनुधावितवानित्यर्थः (अनु + धाव + लङ्-द) ।

---

(क) रक्षःकुलानां—राक्षससमूहानां, कृतः अन्तः—नाशः येन तस्य (बहुव्री०) ; यद्वा,—रक्षःकुलानां—राक्षसवंशानां, कृतान्त इव कृतान्तः,—यमः तस्य, निःशेषेण राक्षसवंशोन्मूलकत्वादिति भावः, रक्षःकुलकृतान्तस्य—राक्षसवंशनाशकस्य, राक्षसवंशयमस्य वा (विश०) ।

(ख) प्राकारः,—परिखावेष्टिततट्स्थमृत्कूटोपरिस्थापितः इष्टकादिरचितनगरवेष्टनं, प्राचीरविशेष इति यावत् । क्षौणीं—पृथिवीं, परिखावेष्टितप्राकारो यथा

नाम कश्चित् महाबणिक् प्रतिवसति स्म। तस्य नन्दयन्तीति (ग) समाख्यायां पत्न्यां रत्नवती नाम देवाराधनलब्धा सुता समजायत। सा (घ) पितृवेश्मनि रूपलावण्यविनयैः सहजैः गुणैः सह दिने दिने वृद्धिमवाप। ताञ्च यौवनशालिनीं वीक्ष्य केवलं महान्तो बणिजो न, राजानोऽपि तत्पितरं ययाचिरे। सा तु मनस्विनी पुरुषद्वेषिणी वासवमपि भर्त्तारं न कामयते स्म, विवाहकथामपि श्रुत्वा प्राणान् त्यक्तुं यतते स्म। तेन तस्य पिता (ङ) वात्सल्यदुःखितस्तूष्णीं तस्थौ। स च (च) प्रवादस्तस्यामयोध्यायां सर्वत्र पप्रथे।

(छ) अत्रान्तरे चौरैर्मुष्यमाणाः समस्ताः पौराः सम्भूय तं नृपं वीरकेतुं व्यजिज्ञपन्,—"प्रभो! प्रतिरात्रं चौरैरिह वयं मुष्यामहे, ते तु नास्माभिर्लक्ष्यन्ते, तदिदानीं देवः प्रमाणम्"।

रिपुपक्षात् नगरीं रक्षति, तथा स राजा प्राकारोपमनिजबाहुभ्यां पृथिवीमिमां शत्रुबलात् रक्षितवान् इति समुदायार्थः।

(ग) समाख्यायां—नाम्न्याम्।

(घ) पितृवेश्मनि—पितृगृहे। सहजैः,—स्वाभाविकैः, जन्मना सह जातैरित्यर्थः।

(ङ) वत्सलस्य भावः वात्सल्यं तस्मात् वात्सल्यात्—स्नेहवशादित्यर्थः, दुःखितः,—विषण्ण इति यावत्, वात्सल्यदुःखितः,—कन्यायाः संसारसुखास्वादने अनिच्छादर्शनात् स्नेहपीड़ितमनाः सन्नित्यर्थः।

(च) प्रवादः,—परम्पराऽऽगतवाक्यम्, एकस्मादन्यैः श्रुतं तद्वाक्यमित्यर्थः। पप्रथे—व्याप, व्याप्तो बभूवेत्यर्थः (प्रथ+लिट्-ए)।

(छ) अत्रान्तरे—अस्मिन्नवकाशे, एतस्मिन्समयाभ्यन्तरे इत्यर्थः। मुष्यमाणाः,—अपह्रियमाणाः, अपह्रियमाणधनाः इति भावः (मुष+कर्मणि शानच्)। सम्भूय—मिलित्वा (सम+भू+ल्यप्)। रात्रौ रात्रौ प्रतिरात्रं—प्रत्येकरात्रौ (वीप्सायामव्ययी०)। मुष्यामहे—चौर्य्यामहे, चोरितधना भूयामहे इति भावः (मुष+कर्मणि लट्-महे), ते—चौराः। लक्ष्यन्ते—दृश्यन्ते (लक्ष+कर्मणि लट्-अन्ते)। देवः,—

इति पौरैर्विज्ञप्तो राजा तां (ञ) पुरीमभितः तस्कराणामनुसन्धानाय छन्नान् रात्रिरक्षकान् आदिशत्। ते च यदा समन्विष्य न तान् चौरानवापुः, तदा राजा स्वयं निशि (झ) एकाकी गृहीतशस्त्रो भ्रमन् एकतः एकं, प्राकारपृष्ठेन यान्तं, निःशब्दपदसञ्चारविचित्रगतिकौशलं, सशङ्कलोलनयनं, मुहुः पृष्ठतः पश्यन्तं, कमपि पुरुषमपश्यत्। "अयं स चौरो मे पुरीं (ञ) मुष्णाति एकचरः" इति मत्वा स नृपस्तस्यान्तिकमुपययौ। ततः स चौरस्तं नृपं दृष्ट्वा,—"कोऽसि?" इति पप्रच्छ। राजाऽपि,—"चौरोऽहम्"

---

राजा भवानित्यर्थः ("राजा भट्टारको देवः" इत्यमरः), प्रमाणं—प्रमाता, एतदुपद्रवनिवारणे कर्त्तव्यनिर्णेता इत्यर्थः ("प्रमाणं हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृषु" इत्यमरः)।

(ञ) पुरीमभितः,—समन्तात्, नगरस्य चतुःपार्श्वे इत्यर्थः (पुरीमिति अभितःशब्दयोगे २या०)। छन्नान्—गुप्तान्, प्रच्छन्नतया अवस्थितानित्यर्थः (विण०), रात्रिरक्षकान्—निशाकालिकपुरीरक्षकराजपुरुषानित्यर्थः, आदिशत्—आज्ञापयत् (आ+दिश+लङ्-द)।

(झ) एकाकी—निःसहाय एव [एक+"एकादाकिनिच्चासहाये" (५।३।५२ पा०) इति आकिनिच्, तस्य लुक् च]। एकतः,—एकस्यां दिशि [एक+"आद्यादिभ्यः उपसङ्ख्यानम्" (वा०) इति सप्तम्यास्तसिल्], एकम्—एकाकिनं, द्वितीयसहायरहितमित्यर्थः। निःशब्दपदसञ्चारेण—शब्दशून्यचरणचालनेन हेतुना, विचित्रम्—अद्भुतं, विस्मयजनकमित्यर्थः, गतिकौशलं—गमननैपुण्यं यस्य तादृशं निःशब्दपदसञ्चार-विचित्रगतिकौशलं—शब्दशून्यचरण-निक्षेपानुमितापूर्वगमनाभिज्ञम् (विण०। बहुव्री०), सशङ्के—सभये, कस्यापि दृष्टिविषयीभवनादिति भावः, अत एव लोले—चञ्चले, इतस्ततो दृष्टिनिक्षेपादिति भावः, नयने यस्य तादृशं सशङ्कलोलनयनं—भीतिविह्वलचक्षुषमित्यर्थः (विण०। बहुव्री०)। पृष्ठतः,—पृष्ठदेशे, पश्चादित्यर्थः [पृष्ठ+"आद्यादिभ्य उपसङ्ख्यानम्" (वा०) इति सप्तम्यास्तसिल्]।

(ञ) मुष्णाति—चोरयति (मुष+लट्-तिप्), एकः,—एकाकी एव, चरति—भ्रमतीति एकचरः,—असहायः इत्यर्थः (एक+चर+पचाद्यच्)।

इति तं चौरं प्रत्यवादीत्। तदाकर्ण्य स चौरः (ट) सानन्दं तम् अभ्यधात्,—"तर्हि दिष्ट्या त्वं मे सुहृत्, तत् एहि मम गृहं, मित्राऽऽचारं तावत् करोमि" इति। तदाकर्ण्य स राजा,—"तथा" इत्युक्त्वा, तेनैव चौरेण सह वनान्तः प्राकारवेष्टितम् (ठ) अशेषभोगशोभाऽऽढ्यं भास्वद्रत्न-विराजितं नवीनं बलिराजानधिष्ठितं पातालमिव तद्गृहं ययौ। तत्र प्रविष्टे तस्मिन् कृतासनपरिग्रहे राजनि स तस्करः गृहा-भ्यन्तरं प्रविवेश। क्षणे च तस्मिन् काऽपि दासी समेत्य तं नृपमवादीत्,—"महाभाग! कथं त्वमिह मृत्युमुखे प्रविष्टः?

(ट) सानन्दं—सहर्षं (क्रिया विश०), तं—राजानम, अभ्यधात—अवोचत् [अभि+धा+लुङ्-द् "गातिस्थाघुपाभूभ्यः—" (२।४।७७ पा०) इति सिचो लुक्]। दिष्ट्या—हर्षसूचकमव्ययं ("दिष्ट्या हर्षे मङ्गले च" इति मेदिनी)। मित्रे—सुहृदि, य आचारः,—आचरणं तं मित्राऽऽचारं—सुहृदि करणीयं व्यवहारमित्यर्थः।

(ठ) अशेषाभ्यां—प्रभूताभ्यां, भोगः,—धनं, सुखसाधनं द्रव्यजातमित्यर्थः ("भोगः सुखे धने चाहेः शरीरफणयोरपि" इति मेदिनी), शोभा—सौन्दर्य्यं, ताभ्यां भोगशोभाभ्याम्, आढ्य—सम्पन्नं, सम्पद्युक्तमित्यर्थः, अशेषभोगशोभाऽऽढ्य—निखिल-भोग्यवस्तुजातपूर्णे रमणीयञ्च, अन्यत्र,—अशेषाणां—बहुविधानां, श्वेतरक्तनीलकृष्णादि-वर्णानां दिविचतुःशिरस्कानाञ्च इत्यर्थः, भोगानां—सर्पशरीराणां, सर्पाणामिति यावत्, या शोभा तया आढ्यं—पूर्णमित्यर्थः, अशेषभोगशोभाऽऽढ्य—सुकान्तिकविविधसर्प-पूर्णमित्यर्थः (विश०। ३या तत्पु०), भास्वद्भिः,—अत्युज्ज्वलैः, रत्नैः,—मणिभिः, एकत्र,—नानादेशात् अपहृत्य आनीतैः, अन्यत्र,—सर्पाणां शिरःसंस्थैः इत्यर्थः, विराजितं—शोभितं भास्वद्रत्नविराजितं—प्रोज्ज्वलमणिराजिविस्फुरितं (विश०। ३या तत्पु०)। बलिराजेन—प्रह्लादपौत्रेण तन्नाम्ना दैत्याधिपेन, अनधिष्ठितम्—अनाश्रितं बलिराजानधिष्ठितं—बलिराजविहीनं (पातालमित्यस्य विश०। ३या तत्पु०), पातालमिव इत्यनेन तस्य गृहं भूमिकान्तर्गतम् इति सूचितम्; पाताले बलिराजा अस्ति, अस्य गृहे केवलं स एव नास्ति, अन्यत् सर्वं पातालसदृशमिति भावः।

( ड ) एकचौरोऽसौ निर्गत्य त्वयि पापमाचरिष्यति, ध्रुवमयं विश्वासघाती, तदितस्त्वरितं व्रज"।

इत्युक्तस्तया स राजा द्रुतं निर्गत्य राजधानीञ्च गत्वा निखिलसैन्यानि ( ढ ) असज्जयत्; ससैन्यश्चागत्य तस्य दस्योः तत् भूगृहं तैर्बलैररुणत्। अथ गृहं रुद्धं दृष्ट्वा स चौरः ( ण ) वृत्तं प्रति भेदमवगत्य, मरणे निश्चितमतिः शूरो युद्धाय निर्ययौ; निर्गतश्च रणे अमानुषं विक्रमं कुर्वन् करिणां करान्, वाजिनां अङ्घ्रान्, भटानाञ्च शिरांसि एक एव खड्गचर्मभृत् चिच्छेद। ततः ( त ) तं व्यापितानीकं नृपः स्वयमभ्यधावत्।

---

( ड ) एकः,—श्रेष्ठः, निपुण इति यावत ( "एकं सङ्ख्यान्तरे श्रेष्ठे केवले-तरयोस्त्रिषु" इति मेदिनी ), स चासौ चौरः एकचौर,—चौर्य्यनिपुणः (कर्म्मधा०)। पापम—अनिष्टमित्यर्थः, हननादिरूपमिति यावत।

( ढ ) असज्जयत—सन्नाहयत, अस्त्रशस्त्रादिना सज्जितानि अकरोदित्यर्थः ( सस्ज+णिच्+लङ् द )। भूगर्भस्थ गृहं भूगृह—मृत्तिकान्तस्थ भवनमित्यर्थः ( शाकपार्थि० )। बलैः,—सैन्यैः ( "वरूथिनी बलं सैन्यम्" इत्यमरः ), अरुणत—आक्रामत ( रुध+लङ् द )।

( ण ) वृत्त—चरित, निजस्वभावमित्यर्थ, यद्वा,—वृत्तम—अतीतम, अतीतविषयमित्यर्थ, स्वेनाचरितचौर्य्यादिकर्म्मेति यावत, यद्वा,—वृत्त—प्राण, जीविकामित्यर्थ ( प्रतिशब्दयोगे २या० । "वृत्तं वृत्तौ दृढे मृते। चरित्रे वर्त्तुले छन्दस्यतीताधीतयोरपि" ॥ इति हैम )। भेद—स्फोटन, रहस्यप्रकाशमित्यर्थः। करान्—शुण्डान् ( "करो वर्षोपले रश्मौ पाणौ प्रत्यग्रशुण्डयोः" इति मेदिनी )। भटाना—योद्धृणा ( "भटा योधाश्च योद्धारः" इत्यमरः )। खड्ग—कृपाण, चर्म—फलक च, "ढाल" इति ख्यात, बिभर्त्ति—धारयतीति खड्गचर्मभृत—असिचर्मधारी [ खड्गचर्म +भृ+क्विप् "ह्रस्वस्य पिति कृति तुक्" ( ६।१।७१ पा० ) इति तुक् ]।

( त ) त—चौर, व्यापितानि—नाशितानि, अनीकानि—सैन्यानि ( "अनीकोऽस्त्री रणे सैन्ये" इति मेदिनी ) येन तं व्यापितानीकं—विध्वस्तराजसैन्य ( विश० । बहुव्री० )। अभ्यधावत्—अभ्यद्रवत्, धावित्वा आक्रमितवानित्यर्थः ( अभि+धाव+लङ्-द )।

स राजा खड्गविद्याऽभिज्ञः (थ) करयुक्तिमवलम्ब्य तस्य हस्तात् निस्त्रिंशं छुरिकाञ्च जहार। ततोऽशस्त्रं तं मुक्तशस्त्रो नृपो बाहुयुद्धेन चौरं धरण्यां (द) जीवग्राहमग्रहीत्। प्रातश्च नीयमानं शूलाऽऽरोपणाय वध्यभूमिं तं (ध) सडिण्डिमं चौरं सा वणिक्कन्या हर्म्यपृष्ठतः रत्नवती ददर्श। तञ्च (न) व्रणितं धूलिलिप्ताङ्गमपि दृष्ट्वा सा काममोहिता तत्क्षणं पितरमुपेत्य प्रोवाच,—"तात! योऽयं वध्यभूमिं नीयते चौरः, अयमेव मया भर्त्ता वृतः, तदेनं नृपात् रक्ष, नो चेदहं एतमनुम्रिये"।

तदाकर्ण्य पिता तामवादीत्,—"पुत्रि! किमिदं भाषसे? चौरोऽयं पौराणां सर्वस्वहृत् राजपुरुषैः वधार्थं नीयते, कथम् एनमहं (प) नृपतेः मोचयामि? कीदृशी च ते प्रवृत्तिरियम्?" इति निर्भर्त्स्यमानाऽपि यदा सा निर्बन्धं न तत्याज, तदाऽसौ

(थ) करयुक्ति—हस्तकौशलमित्यर्थः। निस्त्रिंश—खड्गं ("खड्गे तु निस्त्रिंश-चन्द्रहासासिरिष्टयः" इत्यमरः)।

(द) जीवतीति जीवः, तं जीवं—जीवन्तमित्यर्थः, गृह्णातीति जीवग्राहं—जीवनेन सहितं यथा भवति तथेत्यर्थः [क्रिया विशे०। जीव+ग्रह+"समूलाकृतजीवेषु हन्कृञ्ग्रहः" (३।४।३६ पा०) इति णमुल्]।

(ध) डिण्डिमः,—कस्यापि विषयस्य प्रघोषणकाले वादनीयः वाद्यभेदः, तेन सहितं सडिण्डिमं—डिण्डिमवादनसहितं (क्रिया विशे०)।

(न) व्रणः,—क्षतं, युद्धकालिकास्त्राघातजनित इत्यर्थः, सञ्जातः अस्य इति तं व्रणितं—क्षताङ्गमित्यर्थः [विशे०। व्रण+"तदस्य सञ्जातम्" (५।२।३६ पा०) इति तारकादित्वादितच्]। भर्त्ता वृतः,—पतिः कृत इत्यर्थः, भर्त्तृपदे अधिष्ठापित इति यावत्। नृपात् रक्ष इत्यत्र ["भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इति अपादान-रक्षधातुयोगात् ५मी०]। अनुम्रिये—अनुमृता भवामीत्यर्थः [अनु+मृ+कर्त्तरि लट्-ए "रिङ् शयग्लिङ्क्षु" (७।४।२८ पा०) इति रिङ् "अचि श्नुधातु—" (६।४।७७ पा०) इतीयङ्]।

(प) नृपतेरिति ["भीत्रार्थानां—" (१।४।२५ पा०) इत्यनेन अपादाने मोच-धातुयोगात् ५मी०], मोचयामि—मोचयामि, रक्षामीत्यर्थः (मोच+णिच्+लट्-

वणिक् दुहितृवत्सलः राजानं समुपेत्य सर्वस्वेनापि तं चौरं वधमोक्षमयाचत । राजा तु (फ) हेमकोटिशतैः प्रलोभ्यमानोऽपि तं स्वशरीरपणाऽऽनीतं सर्वापहारिणं चौरं न तत्याज ।

ततः पितरि विमुखे प्रत्यावृत्ते सा वणिक्सुता बन्धुभिर्वार्यमाणाऽपि (ब) अनुमर्त्तुं कृतस्नाना शिविकामारुह्य तस्य दस्योर्वध्यभूमिमगात्; पितरौ बान्धवाश्च रुदन्तस्तामन्वगच्छन् । तस्मिंश्च समये (भ) वधकैः स चौरः शूलमधिरोपितः गतप्राण-

---

णिच्)। निर्भर्त्स्यमाना—ताड्यमाना (विश०। निर+भर्त्स+णिच्+कर्मणि शानच्), पित्रा इति शेषः। निर्बन्धम—आग्रहम्। दुहितरि—कन्यायां, वत्सलः,—स्निग्धः दुहितृवत्सलः,—तनयास्नेहपरवशः (विश०। ७मी तत्पु०)। वधात्—जीवननाशात्, मोक्षं—मुक्तिं वधमोक्षं—प्राणरक्षामित्यर्थः।

(फ) हेम्नां—सुवर्णानां, स्वर्णमुद्राणामित्यर्थः, कोटिशतैः—शतकोटिसङ्ख्यकैः हेमकोटिशतैः,—शतकोटिमितस्वर्णदीनारैरपि इत्यर्थः (करणे ३या०)। स्वशरीरं—निजदेह एव, पणः,—मूल्यं ("पणो वराटमाने स्यात् मूल्ये कार्षापणे ग्लहे" इति विश्वः), तेन आनीतं—प्राप्तं स्वशरीरपणाऽऽनीतं—निजदेहमूल्येन क्रीतमित्यर्थः, स्वशरीरमपि अस्य सङ्गार्थं मूल्यस्वरूपेण दास्यामीति सङ्कल्प्य वृतमिति भावः, यद्वा,—स्वशरीरमेव पणः,—ग्लहः, द्यूतादिषु कल्पितः नियमविशेषः इत्यर्थः, शरीरं पततु पततु, एनं गृह्णाम्येव, तदर्थं जीवनमपि देयमित्येवं प्रतिज्ञाविशेष इति भावः ("द्यूतादौ कल्पिते चैव बद्धमुष्टौ भृतौ पणः" इति शाश्वतः), तेनानीतं स्वशरीरपणाऽऽनीतं—निजजीवनमपि पणत्वेनाङ्गीकृत्य आवृतमित्यर्थः (विश०। ३या तत्पु०)।

(ब) अनु—सह, सङ्कल्पितभर्त्रा इति शेषः ("अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि" इति मेदिनी), मर्त्तुं—प्राणांस्त्यक्तुम् अनुमर्त्तुं—सहमरणाय (अनु+मृ+तुमुन्), कृतस्नाना—भर्त्रनुगमनव्यवसितायाः स्नानानुलेपनालङ्कारधारणादीनां लोकाचारत्वेनानुष्ठेयत्वात् स्नाता। माता च पिता च तौ पितरौ—मातापितरौ ["पिता मात्रा" (१।२।७० पा०) इत्येकशेषः]। रुदन्तः,—क्रन्दन्तः (विश०। रुद+शतृ)।

(भ) वधन्ते—हिंसन्ति, घ्नन्तीत्यर्थः, इति तैः वधकैः,—घातकैः ["वध

तथाऽऽगतां स्वजनान्वितां दृष्ट्वा, कथयतो जनात् वृत्तान्तं शृण्वन्, क्षणमश्रूणि मुक्त्वा हसन् प्राणान् जहौ। ततः शूला-दवतारितं चौरकलेवरमादाय सा साध्वी वणिक्सुता चिता-मारुरोह।

तस्मिंश्च क्षणे श्मशाने कृतनिवासः भगवान् भैरवः अदृश्यः अन्तरीक्षात् वाचमिमामुवाच,—"पतिव्रते! अस्मिन् (म) स्वयं-वरपतौ तव अनया भक्त्या तुष्टोऽस्मि, तत् मत्तो वरं प्रार्थयस्व"। तन्निशम्य सा वरदं देवं प्रणम्य वरं वव्रे,—"भगवन्! अपुत्रस्य मे पितुः पुत्रशतं (य) भूयात्, येनानन्यसुतोऽयं मां विना प्राणान् न जह्यात्"। इतिवादिनीं तां साध्वीं देवः पुनरन्त-रीक्षात् अब्रवीत्,—"साध्वि! पितुस्ते पुत्रशतं भवतु, अन्यच्च वरं (र) वृणीष्व, त्वादृशी दृढसत्त्वा एतावन्मात्रं नार्हति"।

हिंसायाम्" इत्यस्य वध+ण्वुल् "जनिवध्योश्च" (७।३।३५ पा०) इति उपधाया वृद्ध्य-भावः]। गलन्तः,—निःसरन्तः, प्राणाः,—असवः यस्य सः गलत्प्राणः,—आसन्न-मृत्युरित्यर्थः (विश०। बहुव्री०)। कथयतः,—परम्परं वक्तव्या अनुमरणवृत्तान्त-मालोचयतः इत्यर्थः। जहौ—तत्याज [हा+लिट्-णल् "आत औ णलः" (७।१।३४ पा०) इति औ]।

(म) स्वयम्—आत्मना, वरः,—वरणं स्वयंवरः, तेन तत्र वा लब्धः पतिः,—भर्त्ता तस्मिन् स्वयंवरपतौ—स्वयंवरमनोनीतस्वामिनि (शाकपार्थि०), यद्वा,—स्वयम्—आत्मना, वरः,—वरणं यस्य तादृशः पतिः तस्मिन् स्वयंवरपतौ—स्वयमेव वृते भर्त्तरि (कर्मधा०)। मत्तः,—मत्सकाशात् (अस्मद्+पञ्चम्यास्तसिल्)।

(य) भूयात्—जनिषीष्ट [भू+लिङ्-यात् "लिङाशिषि" (३।४।११६ पा०) इति लिङ्]। न—नास्ति, अन्यः,—मत्तः अपरः, सुतः,—तनयः, सुता—तनया वा यस्य सः अनन्यसुतः,—मद्व्यतिरिक्तापत्यान्तरविरहितः (विश०। बहुव्री०)।

(र) वृणीष्व—भजस्व, प्रार्थयस्वेत्यर्थः (क्र्यादिगणीय—वृ+लोट्-स्व)। दृढम्—अचलं, सत्त्व—सत्त्वगुणः, स्वभावो वा, व्यवसायो वा, सङ्कल्प इत्यर्थः, चित्तं वा ("सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मत्वे व्यवसायासुचित्तेष्वस्त्री

तदाकर्ण्य सा अवादीत्,—"देव! यदि मयि प्रसन्नोऽसि, तदैष मे भर्त्ता जीवतु, धार्मिकश्च सदा भवतु" इति। "एवमस्तु, अक्षतशरीरस्तव पतिः उत्तिष्ठतु, धार्मिकश्च भवतु, राजा वीरकेतुश्चास्य तुष्यतु"। इति उक्तवति (ल) अदृश्यमूर्त्तौ शर्वे नभसि स्थिते सहसा स चौरो जीवन्नक्षतशरीरः समुत्तस्थौ। ततो (व) विस्मितहृष्टो रत्नदत्तो वणिक् तां रत्नवतीं चौरं जामातरञ्चादाय प्रहृष्टैर्बान्धवैः सार्द्धं निजमन्दिरं प्रविश्य लब्धपुत्रवरः स्वाऽऽनन्दोचितमुत्सवमकरोत्। (श) ज्ञातवृत्तान्ततुष्टश्च राजा तदैव तं चौरमेकवीरमानाय्य सेनापतिं व्यधात्। स च चौर्य्यात् निवृत्य तां वणिक्सुतां परिणीय धर्मरतः तया साकं सुखेन कालं निनाय"।

---

तु कन्तुषु" इति मेदिनी) यस्याः सा दृढ़सत्त्वा—महासत्त्वगुणसम्पन्ना, स्थिरस्वभावा वा, अटलसङ्कल्पा वा, दृढ़मना वा (विण०। बहुव्री०), एतावन्मात्रं—केवलमेकवरं, नार्हति—न युज्यते, त्वत्सदृशी साध्वी केवलमेकमात्रवरस्य योग्या न भवति, वरान्तरस्यापि योग्या इत्यर्थः।

(ल) अदृश्या—दर्शनाविषयीभूता, मूर्त्तिः,—आकारः यस्य तस्मिन् अदृश्यमूर्त्तौ—दर्शनपथातीतरूपे (विण०। बहुव्री०), शर्वे—भैरवे, महादेवे इत्यर्थः (सबंव भावे ७मी०)।

(व) आदौ विस्मितः,—आश्चर्यान्वितः, पश्चात् हृष्टः,—सन्तुष्टः विस्मितहृष्टः,—मृतस्य पुनरुज्जीवनरूपासम्भवव्यापारदर्शनात् विस्मयं गतः, पुनः कन्याजामातृलाभादतीवानन्दित इति भावः (विण०। स्नातानुलिप्तवत् स०)। स्वाऽऽनन्दोचितं—निजप्रीत्यनुरूपं, यादृशः हर्षः अजायत तदुपयुक्तमित्यर्थः, अतिमहान्तमिति यावत् (विण०। ६ष्ठी तत्पु० ७मी तत्पु० वा)।

(श) ज्ञातः,—लोकमुखात् श्रुतः, यः वृत्तान्तः,—वार्त्ता, तेन तुष्टः,—प्रीतः ज्ञातवृत्तान्ततुष्टः,—चौरादेर्वृत्तान्तश्रवणात् परिहृष्टः (विण०। ३या तत्पु०), यद्वा,—आदौ ज्ञातवृत्तान्तः, पश्चात् तुष्टः,—विदितसर्ववार्त्तः अत एव परितुष्टः (स्नातानुलिप्तवत् स०)। एकः,—मुख्यः ("एके मुख्यान्यकेवलाः" इत्यमरः), वीरः,—शूरः तम् एकवीरं—वीरश्रेष्ठं (विण०। कर्मधा०), आनाय्य—आह्वय्येत्यर्थः, दूतादिभि-

इति कथामाख्याय वेतालो (ष) दत्तपूर्वशापभयं तं भूपं पप्रच्छ,—"राजेन्द्र! ब्रूहि, सपितृकां समुपागतां तां वणिक्सुतां दृष्ट्वा चौरेण शूलपृष्ठवर्त्तिना रुदितं हसितञ्च किम्?"। राजा प्रत्यवदत्,—"चौरेण अस्य अकारणबन्धोः वणिजः (स) नाऽऽनृण्यं लब्धमिति दुःखात् रुदितम्। 'किमियं कन्या नृपानपि विहाय चौरे मयि अनुरक्ता!! अहो!, स्त्रीचित्तमतिविचित्रम्' इति सविस्मयेन हसितञ्च"। इतिवादिनस्तस्य महीपतेरंसात् स वेतालस्तत्क्षणमलक्षितः स्वं निलयं प्रत्यपद्यत। राजाऽपि अविलुप्तधैर्य्यस्तमनुसरन् तं शिंशपातरुमाजगाम।

रिति शेषः (आ+नी+णिच्+ल्यप्)। व्यधात—अकार्षीत् इत्यर्थः [वि+धा+लुङ्-द "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]।

(ष) दत्तं—विहितम्, उत्पादितमिति यावत्, पूर्वं—प्राक्, प्रागुल्लिखितमिति यावत्, शापात् भयं यस्मै तं दत्तपूर्वशापभयं—प्राक् प्रदर्शिताभिसम्पातभयं (विशे०। बहुव्री०)। सह पित्रा वर्त्तते या सा तां सपितृकां—पितृसहितां ["नद्यृतश्च" (५।४।१५३ पा०) इति कप्]। किम्?—कथम्?'।

(स) नास्ति ऋणं—देयम्, उत्तमर्णाय इति शेषः ("ऋणं देये जले दुर्गे" इति हैमः), यस्य सः अनृणः, तस्य भावः आनृण्यम्—ऋणशुद्धिं, राजसमीपे सर्वस्वेनापि वधदण्डनिवारणार्थप्रयत्नरूपोपकारऋणात् मुक्तिमित्यर्थः।

# अथ पञ्चदशकथा ।

ततो नृपः पुनस्तथैव गत्वा शिंशपामूलं, तं वेतालं प्राग्वत् स्कन्धमारोप्य गन्तव्याभिमुखं गन्तुमारेभे। वेतालोऽपि यान्तं तं नृपं कथाम् (क) एतामाचचक्षे,—

"आसीत् नेपालराज्ये शिवपुरं नाम नगरम्। तत्र पुरा यशःकेतुर्नाम नृपः यथार्थनामा प्रतिवसति स्म। स मन्त्रिणि प्रज्ञासागरनामके राज्यभारं निवेश्य चन्द्रप्रभानाम्न्या (ख) महादेव्या समं भोगानसेवत। (ग) कालेन गच्छता तस्य तस्यां देव्यां शशिप्रभा नाम जगन्नेत्रशशिप्रभा कन्या समुदपद्यत। क्रमेण सा (घ) यौवनस्था कदाचित् मधुमासे सपरिच्छदा उद्याने यात्रोत्सवं द्रष्टुमगमत्। अत्रान्तरे कश्चित्

---

(क) एताम्—वक्ष्यमाणाम्, आचचक्षे—कथयामास (आ+चक्ष+लिट्-ए)।

(ख) महादेव्या—प्रधानमहिष्या, समं—सह।

(ग) कालेन (इति अपवर्गे ३या०)। जगतां—भुवनानां, लोकत्रयस्यामिति भावः, यानि नेत्राणि—चक्षूंषि, तेषां शशिप्रभा—चन्द्रिका, नेत्रतर्पकत्वात् कौमुदीरूपेत्यर्थः, जगन्नेत्रशशिप्रभा—जगत्त्रयनयनहारिणीत्यर्थः, अतीव सुन्दरीति भावः। समुदपद्यत—समजायत (सम्+उत+पद+लङ्-त)।

(घ) यौवने—तारुण्ये, तिष्ठतीति यौवनस्था—युवतीत्यर्थः [यौवन+स्था+"सुपि स्थः" (३।२।४ पा०) इति कः "आतो लोपः इटि च" (६।४।६४ पा०) इति आकारलोपः]। मधुमासे—चैत्रमासे ("स्याच्चैत्रे चैत्रिको मधुः" इत्यमरः), सपरिच्छदा—सोपकरणा, राजतनयोचितवस्त्रालङ्कारयाना[illegible]सहिता इत्यर्थः (विण०)। यात्रोत्सवं—देवार्चनोत्सवं, यात्राशब्देनैव [illegible]त्सवे लब्धेऽपि पुनरुत्सवपदं "पद्मिनीषण्ड" "धनुर्ज्या" इत्यादिवत् न दोषा[illegible], यद्वा,—यात्रा—देवार्चनोत्सवः, तत्र उत्सवम्—आनन्दजनकानुष्ठानं [illegible] देवपूजादर्शन-

(ङ) आढ्यपुत्रो मनःस्वामी नाम द्विजयुवा यात्रादर्शनार्थमागतः तां कुसुमावचयोद्यताम् उत्क्षिप्तबाहुलतिकां लक्षितैकपयोधरां दृष्ट्वा मदनमोहितः तया हृष्टया सद्योहृतस्य मनसः स्वामी नैवाभवत्। "किमियं (च) मनोभुवो रतिः वसन्तसम्भृतानि पुष्पाणि स्वयम् उच्चिनुते ? किं वा स्वयं वनदेवता माधवमर्चयितुमागता ?" इति चिन्तयन्तं तं सा नृपनन्दिनी

---

उत्सवाङ्गभूतमुत्सवान्तरमित्यर्थः ("यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे" इति विश्वः)।

(ङ) आढ्यपुत्रः,—धनितनयः ("इभ्य आढ्यो धनी" इत्यमरः)। कुसुमावचयाय—पुष्पचयनाय, उद्यताम—उद्यमवती कुसुमावचयोद्यता—पुष्पचयनप्रवृत्ता (विग्र०। ४र्थी तत्पु०), उत्क्षिप्त,—ऊर्द्ध्वोत्तोलित', बाहु,—एकभुजः, लतिका—लता इव यया ताम् उत्क्षिप्तबाहुलतिकाम्—उत्थापितैकभुजवल्लीम् (विग्र०। बहुव्री०), लक्षितः,—बाहूत्तोलनात दृष्ट, एकः पयोधर,—स्तन यस्याः ता लक्षितैकपयोधरां—दृष्टैकस्तनी (विग्र०। बहुव्री०)। हृष्टया—प्रमुदितया, प्रफुल्लचित्तया इत्यर्थः, उत्सवदर्शनेनेति भावः, "दृष्टया" इत्यत्र "दृष्टया" इति पाठे—नेत्रविषयीभूतया (विग्र०)। मनसः स्वामी—स्वचित्तस्य प्रभुः, झटितिप्रभया चित्तहरणादिति भावः, कामविवश, राजनन्दिन्यामेव चित्त समर्पयामासेति स्पष्टार्थः।

(च) मनसि मनसो वा भवतीति मनोभूः तस्य मनोभुवः,—कामस्य (मनस्+भू+क्विप्)। वसन्तेन—वसन्तर्तुना, कामसखेनेति यावत्, सम्भृतानि—सम्यक् पुष्टानि वसन्तसम्भृतानि—वसन्ताविर्भावहेतुना बहुलतया सञ्जातानीति यावत्, कामसखा वसन्तः कामपत्न्या रतेस्तत्रागमनं विदित्वेव स्वयमाविरभवत्, तेन च पुष्पाणि बहुलतया सञ्जातानि, रतिस्तु सखिप्रीत्या स्वयमेव तानि सञ्चिनोतीति भावः, यद्वा,—वसन्तेन कर्त्रा, सम्भृतानि—रतेः सन्तोषार्थं नानादेशात् एकत्र सङ्गृहीतानि इत्यर्थः (विग्र०। ३या तत्पु०)। स्वयम्—आत्मना, स्वकरेणेत्यर्थः, सख्यादरादिति भावः, उच्चिनुते—सङ्गृह्णाति (उत्+चि+लट्-ते)। स्वयं—मूर्त्तिमतीत्यर्थः। माधवं—विष्णु वसन्तं वा ("वसन्ते माधवौ विष्णौ वैशाखे मासि माधव," इति शाश्वतः)।

समपश्यत्। सा च दृष्टमात्रे (छ) साङ्गे नव इव स्मरे तस्मिन् समुत्सुका पुष्पाणि च स्वाङ्गानि च नास्मरत्।

इत्येवं यावत् तौ अन्योऽन्यानुरक्तौ चित्रलिखिताविवाऽऽस्तां, तावत् सहसा "हा हा" इति रवः समुदभूत्। "किमेतत्?" इति (ज) समुत्क्षिप्तकन्धरं पश्यतोस्तयोः उपलब्धान्यमदगन्धोत्थया रुषा भग्नाऽऽलानो मत्तो द्विपः निर्गत्य मार्गद्रुमान् रुजन् पातिताधोरणो लम्बमानाङ्कुशस्तत्राऽऽगात्। ततश्च परिजने (झ) सन्त्रस्तविद्रुते स मनःस्वामी युवा ससम्भ्रमं प्रधाव्य तां

(छ) साङ्गे—सावयवे, मूर्त्तिमति इत्यर्थः, न तु अनङ्ग इति भावः, नवे—अभिनवे, न तु पुराणे इत्यर्थः, हरकोपानलदग्धः पुरातनकामः अनङ्गः जातः, अयन्तु नवः कामः साङ्गः इति विलक्षणोऽयं कामादिति भावः। समुत्सुका—तद्दर्शनाय उद्युक्ता, उत्कण्ठिता वा। स्वाङ्गानि—निजावयवान्, निजसत्तामपीति भावः।

(ज) समुत्क्षिप्ते—समुत्थापिते, कन्धरे—ग्रीवे यस्मिन् तत समुत्क्षिप्तकन्धरम्—उद्यतग्रीवं यथा तथा (क्रिया विश०), पश्यतोस्तयोः—पश्यन्तौ तौ अनादृत्य इत्यर्थः ["षष्ठी चानादरे" (२।३।३८ पा०) इति अनादरे षष्ठी०], उपलब्धात्—विदितात्, आघ्रातादिति यावत्, अन्यस्य—स्वतरस्य हस्तिन इत्यर्थः, मदगन्धात्—दान-वारिगन्धात्, उत्था—सञ्जाता तया उपलब्धान्यमदगन्धोत्थया—घ्रातगजमद-गन्धाऽऽघ्राणजनितया (विश०), रुषा—क्रोधेन, भग्नं—खण्डितम्, आलानं—बन्धनस्तम्भः ("आलानं बन्धस्तम्भे" इत्यमरः) येन सः भग्नाऽऽलानः,—बन्धनस्तम्भं भङ्क्त्वा इत्यर्थः (विश०। बहुव्री०), मत्तः,—क्षरितमदः। मार्गद्रुमान्—पथिस्थान् द्रुमान् (शाकपार्थि० ७मी तत्पु० वा), रुजन्—भञ्जन् (रुज+शतृ), पातितः,—पृष्ठदेशात् निक्षिपितः, आधोरणः,—हस्तिपकः, हस्तिचालक इत्यर्थः ("आधोरणा हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः), येन सः पातिताऽऽधोरणः,—निक्षिप्तचालकः (विश०। बहुव्री०)।

(झ) आदौ सन्त्रस्तः,—अतिभीतः, पश्चात् विद्रुतः,—पलायितः तस्मिन् सन्त्रस्तविद्रुते—भीतप्रधाविते (विश०। स्नातानुलिप्तवत् स०। भावे ७मी०)। ससम्भ्रमं—सत्वरं (क्रिया विश०। "सम्भ्रमस्त्वरा" इत्यमरः), प्रधाव्य—द्रुतं गत्वेत्यर्थः;

राजपुत्रीम् अङ्गैः किञ्चित् कृताश्लेषां भयप्रेमत्रपाऽऽकुलां दोर्भ्यामादाय गजगोचरात् सुदूरमनयत्। अथ कथमपि (ञ) प्राप्तपरिजना तं युवानं पश्यन्ती माराग्निपुटपाकपच्यमाना सत्वरं राजभवनमगात्।

स तु युवा उद्यानात् तस्मात् स्वान्तःपुरप्रविष्टां तां दृष्ट्वा समुत्सुको व्यचिन्तयत्,—"एतां विना नाहं क्षणमपि स्थातुं जीवितुं वा (ट) समुत्सहे, तन्मम श्रीमूलदेवो नामात्र सिद्धो धूर्त्तो गुरुर्गतिः" इति सञ्चिन्त्य कथमपि अवसिते तस्मिन् दिने प्रातस्तस्य गुरोर्मूलदेवस्यान्तिकमगात्; अपश्यच्च तं मित्रेण शशिना नित्यसङ्गतम्। ततश्च समुपेत्य तस्मै प्रणम्य तत्

---

(प्र+आप+ल्यप्)। अङ्गैः,—हस्ताद्यवयवैः, गात्रैर्वा (करणे ३या०), किञ्चित्—ईषत्, न तु गाढमिति भावः, कृतः आश्लेषः,—सम्बन्धः आलिङ्गनं वा यया तां कृताश्लेषां—संश्लिष्टाम्, अङ्गसम्पृक्तामित्यर्थः, आलिङ्गितां वा (विश०। बहुव्री०), भयेन—त्रासेन, प्रेम्णा—प्रणयेन, त्रपया—लज्जया च, आकुलां—कातरामित्यर्थः (विश०। ३या तत्पु०), दोर्भ्यां—बाहुभ्यां ("भुजबाहू प्रवेष्टो दोः" इत्यमरः)। गजगोचरात्—हस्तिस्पर्शयोग्यस्थानात, हस्तिसान्निध्यादित्यर्थः।

(ञ) प्राप्ताः,—लब्धाः, परिजनाः,—अनुचरजनाः यया सा प्राप्तपरिजना—लब्धस्वजना (विश०। बहुव्री०); मारः,—मदनः ("मदनो मन्मथो मारः" इत्यमरः), अग्निः,—अनलः इव, सन्तापकत्वादिति भावः, तस्य पुटपाकेन—पुटः,—पात्रविशेषः, तेन पाकः,—पचनं तेन पात्रविशेषाभ्यन्तरे अन्तर्गूढसन्तापेनेत्यर्थः, पच्यमाना—तप्यमाना माराग्निपुटपाकपच्यमाना—कामानलान्तर्दह्यमाना, पुटपक्वद्रव्यं यथा अभ्यन्तरे दग्धं भवति बहिर्न दृश्यते, तथा राजनन्दिनी अपि कामानलेन हृदये दह्यमाना अभवत, न तु बहिरिति भावः।

(ट) समुत्सहे—क्षमे, शक्नोमि इत्यर्थः (सम्+उत्+सह+लट्-ए)। सिद्धः,—गुटिकासिद्धः इत्यर्थः, साधनप्रभावेण गुटिकाविद्यां वशीकृत्य कामरूपीति भावः, धूर्त्तः,—मायी, मायाविद्याजीवीत्यर्थः (विश०। "धूर्त्तन्तु खण्डलवणे धूर्त्तो चतुरमायिनोः" इति हेमचन्द्रः)। गतिः,—उपायः ("उपायो वर्त्म च गतिर्गतिर्वार्त्ता" "गतिर्दशा" इति शाश्वतः)। अवसिते—समाप्ते, अतिवाहिते इत्यर्थः [भावे

(ठ) स्वमनोषितं न्यवेदयत्। सोऽपि विहस्य तत् साधयितुं प्रत्यपद्यत।

ततः स (ड) धूर्त्तपतिः मुखे योगगुलिकां निक्षिप्य आत्मानं वृद्धब्राह्मणरूपमकरोत्, द्वितीयां गुलिकां तस्य मनःस्वामिनो मुखे निक्षिप्य तं सुकान्तकन्यकारूपं व्यधाच्च। अथ स धूर्त्तराजः तद्रूपं तं समादाय तं राजानमुपेत्य सभायां व्यजिज्ञपत्,—"राजन्! एक एवास्ति मे पुत्रः, तत्कृते दूरात् इयं कन्या याचित्वा आनीता, परं स मे पुत्रः क्वापि गतः, तमन्वेष्टुमहं यामि, तदेषा कन्या त्वया रक्ष्यतां, यावदहं सुतम् अन्विष्यामि, त्वं हि विश्वास्यः रक्षिता" इति। तच्छ्रुत्वा शापभयेन स भूपतिः "तथा" इति प्रतिपद्य सुतां शशिप्रभामानाययामास, जगाद च तां,—"पुत्रि! कन्यामिमां स्वमन्दिरे रक्ष, स्वपार्श्वमेवास्याः शय्यां प्रकल्पय"। इति पित्राऽऽदिष्टया तया स कन्यारूपः द्विजयुवा मनःस्वामी निजमन्तःपुरं नीतः।

अथ तस्मिन् मूलदेवे (ढ) यथारुचि प्रयाते, कन्यारूपः स मनःस्वामी प्रियाऽन्तिके अहर्निशं तिष्ठन् कतिपयैः दिवसैः सखीमिव प्रीतिविस्रम्भशालिनीं विदित्वा, एकदा विरहक्षामां

---

ष्मी०। अव+षो+क्तः "द्यतिस्यतिमास्थामित्ति किति (७।४।४० पा०) इति इकारः]।

(ठ) स्वमनोषितं—निजमनोऽभिलाषम्।

(ड) धूर्त्तपतिः,—मायाविश्रेष्ठः। योगेन—योगसाधनेन, लब्धां—प्राप्तां, गुलिकां—गुटिकां योगगुलिकां—साधनयोगलब्धगुटिकां (शाकपार्थि०)। सुकान्ता—अतिकमनीया, या कन्यका—कुमारी, सुकान्तकन्यका [कर्मधा०। "स्त्रियाः पुंवद्भाषितपुंस्कात्—" (६।३।३४ पा०) इति पुंवद्भावः], तस्या रूपमिव रूपम्—आकारः यस्य तं सुकान्तकन्यकारूपं—सुरूपकुमारीमूर्त्तिं (विधेय विश०। बहुव्री०)।

(ढ) यथारुचि—यथेष्टम्, अभिलषितदेशमित्यर्थः (अव्ययी०)। अहश्च निशा च अहर्निशं—रात्रिन्दिवं (द्वन्द्वैकवद्भावे क्लीवत्वं क्रत्वत्वञ्च)। प्रीत्या—प्रणयेन,

शयनीयलुठत्तनुं तां राजसुतां रात्रौ आसन्नशयनस्थितः पप्रच्छ,—"सखि ! किं त्वं दिने दिने पाण्डुरकान्तिः क्षीयमाणा कान्तवियुक्तेव दुःखिता तिष्ठसि ? ब्रूहि, स्निग्धमुग्धे सखीजने मयि कोऽविश्रम्भः ? न चेत् मम वदिष्यसि, तदाऽहं न भोक्ष्ये"। तदाकर्ण्य सा विनिश्वस्य शनैरब्रवीत्,—"सखि ! किं मे त्वयि अविश्रम्भः ? शृणु, कथयामि,—

एकदाऽहं यात्रां द्रष्टुं (ण) मधूद्यानं गताऽभूवम्, अपश्यञ्च तत्र कञ्चित् सुभगं हिममुक्तेन्दुसश्रीकं दर्शनोद्दीपितस्मरं मधु-

---

विस्रम्भः,—विश्वासः ("समौ विस्रम्भविश्वासौ" इत्यमरः), तेन शालते—युज्यते तां, यद्वा,—प्रीतिविस्रम्भाभ्यां शालते इति तां प्रीतिविस्रम्भशालिनीं—प्रेमविश्वाससमन्वितां, मनःस्वामी आत्मानं प्रति राजकन्यां स्नेहशालिनीं विश्वसन्तीं चेत्यर्थः [ शाल+ "बहुलमाभीक्ष्ण्ये" (३।२।८१ पा०) इति णिनिः ]। विरहेण—विच्छेदेन, क्षामा—कृशा [ क्षै+क्तः "क्षायो मः" (८।२।५३ पा०) इति क्त-स्थाने मः ] विरहक्षामां—प्रियवियोगकातरां (विशे०। ३या तत्पु०), शयनीये—शय्यायां, लुठन्ती—विक्षिपन्ती, शिथिलं तिष्ठन्तीति यावत्, तनुः,—अङ्गं यस्याः तां शयनीयलुठत्तनुं—शय्यालुठितदेहां (विशे०। बहुव्री०)। आसन्ने—समीपवर्त्तिनि, शयने—शय्यायां, स्थितः,—आसीनः आसन्नशयनस्थितः,—निकटस्थशय्योपरि उपविष्टः (विशे०। ७मी तत्पु०)। स्निग्धः,—स्नेहसम्पन्नः, अत एव मुग्धः,—मूढः, गुणदोषविचारानभिज्ञः इत्यर्थः, केवलगुणदर्शीति भावः, तस्मिन् स्निग्धमुग्धे—स्नेहवशीभूते इत्यर्थः (कर्मधा०)। भोक्ष्ये—खादिष्यामि (भुज+लृट्-स्ये)।

(ण) मधौ—वसन्ते, यत् उद्यानम्—आक्रीडं, विहारस्थानमित्यर्थः, तत् मधूद्यानं—वसन्तकाले भ्रमणोपयोगि राजोद्यानमित्यर्थः (शाकपार्थिवा०)। सु—शोभनं, भगं—श्रीः ("भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्त्तिषु" इत्यमरः) यस्य तं सुभगं—सुश्रीकं (विशे०। बहुव्री०), हिमात्—तुषारात्, शिशिरकालिकादित्यर्थः, मुक्तेन—अनावृतेन, हिमावरणापगमात् प्रकाशितेन इत्यर्थः, इन्दुना—चन्द्रेण, निर्मलचन्द्रेणेति भावः, समाना—तुल्या, श्रीः,—शोभा, सौन्दर्यमित्यर्थः, यस्य तं हिममुक्तेन्दुसश्रीकं—वासन्तपूर्णशशधरमनोहरमित्यर्थः, शिशिरे सर्वदा तुषारावृते नभसि चन्द्रः मलिनो दृश्यते, वसन्ते तु तुषाराभावात् निर्म्मले नभसि चन्द्रः स्फुटं

मासमिवालङ्कृतकाननं ब्राह्मणपुत्रम्। यावत् (त) इमे समुत्सुके तन्मुखेन्दुद्युतिसुधापायिनी लोचने मे चकोरायितुं प्रवृत्ते, तावत् मदस्रावी निरर्गलः अकालकालमेघनिभः महागजो गर्जन् अकस्मात् तत्राऽऽगात्। (थ) तत्सम्भ्रमाच्च परिजने भय-

दृश्यते मनोहरश्चातीव इति तदौपम्य [ विश०। बहुव्री०। "नद्यृतश्च" (५।४।१५३ पा०) इति कप्, समासस्य स-भावश्च"], दर्शनेन—अवलोकनेनैव, न तु सान्निध्येनेति भावः, उद्दीपितः,—प्रज्वालितः, स्मरः,—कामः, कामानल इति यावत्, येन यस्मात् वा तं दर्शनोद्दीपितस्मरं—कामोद्दीपकम्, अतीव सुरूपमित्याशयः, मधुमासमिव—चैत्रमासमिव, अलङ्कृतं—शोभितम्, एकत्र,—नवपल्लवपुष्पादिना, अन्यत्र, —रूपप्रभया इति भावः, काननं—वनम्, उपवनमिति यावत्, येन तम् अलङ्कृतकाननं—भूषितोद्यानं, चैत्रमासस्य वसन्तांशत्वात् पुष्पादिविकाशेन काननशोभकत्वमवगन्तव्यं ( विश०। बहुव्री० )।

( त ) इमे—परिदृश्यमाने, इति अङ्गुलीनिर्देशपूर्वकं स्वकीयनेत्रद्वयप्रदर्शनम्; समुत्सुके—प्रियदर्शनरूपेष्टसाधनाय उद्युक्ते ( विश०। "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः ), तस्य—ब्राह्मणपुत्रस्य, मुखमेव इन्दुः,—चन्द्रः, तस्य द्युतिः,—शोभा, अन्यत्र, —रश्मिः ( "द्युतिः स्त्री रश्मिशोभयोः" इति मेदिनी ), सा एव सुधा—अमृतम्, अन्यत्र,—तस्याः सुधा—तस्याः सुतमृतमित्यर्थः, तां पातुं शीलमनयोः इति तन्मुखेन्दुद्युतिसुधापायिनी—तदाननशशधरकान्तिपीयूषपानशालिनी [ विश०। "सुप्यजातौ णिनिस्ताच्छील्ये" (३।२।७८ पा०) इति णिनिः ]। चकोरः,—पक्षिविशेषः, तद्वदाचरितुं चकोरायितुं—चकोरवदाचरणं कर्तुमित्यर्थः, चकोरो यथा चन्द्रसुधां विहाय नान्यत् किमपि पिबति, केवलं तल्लालस एव ऊर्द्ध्वमुखस्तिष्ठति, तथा मम चक्षुषी अपि ब्राह्मणतनयस्य मुखं विहाय नान्यत् किमपि अपश्यतां, केवलं तदासक्ते एव अतिष्ठतामिति भावः [ चकोर+"कर्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति क्यङ् "अकृत्सार्वधातुकयोर्दीर्घः" (७।४।२५ पा०) इति दीर्घः, ततः तुमुन् ]। निरर्गलः,—निष्प्रतिबन्धः इत्यर्थः, पालिताधोरणत्वात् इति भावः, अकाले—असमये, वर्षातिरिक्ते समये इत्यर्थः, यः कालमेघः,—कृष्णवर्णमेघः, तन्निभः, —तत्सदृशः अकालकालमेघनिभः,—अनार्तवजलदोपमः, गजस्य अतर्कितोपस्थित्या गाढ़कृष्णवर्णत्वेन च अकालकालमेघसाम्यं ( विश०। नित्यसमा० )।

( थ ) तस्मात्—गजात्, सम्भ्रमः,—साध्वसं, भयमित्यर्थः, यद्वा,—तत्र सम्भ्रमः,

विद्रुते भयविह्वला अहं तेन विप्रपुत्रेण दोर्भ्यामुत्क्षिप्य दूरतो नीता ; तदा श्रीखण्डलिप्तेव सुधासिक्तेव न जाने, कामपि तदङ्गस्पर्शेन दशामन्वभवम् । क्षणेन च परिजनेन मिलितेन अवशाऽहमिहाऽऽनीता स्वर्गादिव भुवस्तले निक्षिप्ताऽस्मि । तदा प्रभृति (द) तैस्तैः सङ्कल्पैः कल्पितसङ्गमं तं प्राणदं प्रियं पार्श्वस्थमिव सदा पश्यामि, सुप्ताऽपि तमेव आश्लिष्यामि, किं बहुना, तमेव सततं चिन्तयन्ती कालं हरामीति । तदेष मां प्राणेश्वरविरहानलः दिवानिशं दहति" ।

इति तस्या वाक्सुधया पूरितश्रवणविवरः स मनःस्वामी सानन्दः आत्मानं कृतार्थं मन्यमानः आत्मप्रकाशनावसरोऽयमिति विविच्य मुखात् गुलिकां निष्कास्य स्वं रूपं (ध) प्रकटीचक्रे, जगाद च,—"सुन्दरि ! स एवाहं, यस्त्वया उद्याने दर्शनक्रीतश्चिरदासतां नीतः । त्वद्विरहाऽऽतुरोऽहमिदं कन्यारूपं गृहीत्वा त्वत्सकाशमागतोऽस्मि । तदिदानीं कामसन्तप्तं मां (न) प्रसाददृष्ट्या निर्वापय" इति । एवं वदन्तं तं

—संवेगः, आगमनवेग इत्यर्थः ("सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी), तस्मात् तत्सम्भ्रमात्—तद्भयात् तस्यागमनवेगं दृष्ट्वा वा । श्रीखण्डः,—श्वेतचन्दनं, तेन लिप्ता श्रीखण्डलिप्ता—श्वेतचन्दनचर्चिता (विण० । ३या तत्पु०) ।

(द) तैस्तैः,—आलिङ्गनादिरूपैः, सङ्कल्पैः,—मानसकर्मभिः, न तु कायिकैरिति भावः ("सङ्कल्पः कर्म्म मानसम्" इत्यमरः), कल्पितः,—कल्पनाविषयीकृतः, सङ्गमः,—संसर्गो यस्य तं कल्पितसङ्गमं—कृतसंसर्गमित्यर्थः (विण० । बहुव्री०) । हरामि—अतिवाहयामीत्यर्थः (हृ+लट्-मिप्) ।

(ध) अप्रकटम—अप्रकाशं, प्रकटं—प्रकाशं सम्पद्यमानं चक्रे प्रकटीचक्रे—प्रकाशीचकार (प्रकट+कृ+लिट्-ए अभूततद्भावे च्विः) ।

(न) प्रसादपूर्णा दृष्टिः तया प्रसाददृष्ट्या—सानुग्रहावलोकनेनेत्यर्थः (शाकपार्थि०), निर्वापय—शीतलीकुरु [निर्+वा+णिच्+"आर्त्तह्री—" (७।३।३६ पा०) इति पुक्+लोट्-हि] ।

प्राणेश्वरं प्राप्तं विलोक्य सा राजसुता स्नेह (प) श्चर्य्य-ऽऽश्चर्य्यत्रपाऽऽकुला सहसा किंकर्त्तव्यविमूढ़ा समपद्यत । ततश्च गान्धर्व्वविवाहेन (फ) कृतमङ्गलौ तौ प्रेम्णा परमेण तत्र निभृतं तस्थतुः । ततः स मनःस्वामी तत्र (ब) द्विरूपभृत् तस्थौ, दिवा सगुलिकः कन्यारूपः, रात्रौ निष्कासितगुलिकः पुमान् ।

अथ गच्छत्सु दिनेषु यशःकेतोर्नृपस्य श्यालको मृगाङ्कदत्तः मृगाङ्कदत्तां नाम निजां सुतां द्विजातये महामन्त्रिणः प्रज्ञासागरस्य (भ) सूनवे महाऽऽडम्बरपुरःसरं प्रददौ । तस्मिन् मातुलपुत्त्र्या विवाहे सा राजपुत्त्री शशिप्रभा निमन्त्रिता मातुलगृहं प्रायात्, तया सह सोऽपि कन्यारूपी मनःस्वामी

(प) स्नेहः,—प्रेम, आश्चर्य्यं—विस्मयः, नार्य्याः सहसा पुरुषाकारेण परिणमनादिति भावः, त्रपा—लज्जा, नवप्रणयिमर्यादिष्वसुलभा इति भावः, ताभिराकुला—व्यस्ता, युगपत् विविधभावावेशात् आत्मसंवरणाक्षमा इति भावः, स्नेहाश्चर्य्यत्रपाऽऽकुला—प्रणयाद्भुतलज्जादिभावैरधीरा ( विग० । बहुव्री० )। किं कर्त्तव्यम्—अस्मिन् विषये किमाचरणीयं, तस्मिन् विमूढ़ा—अज्ञा किङ्कर्त्तव्यविमूढ़ा—कर्त्तव्यनिर्द्धारणाक्षमा ( विग० । ७मी तत्पु० )।

(फ) कृतं—विहितं, मङ्गलं—सर्वार्थरक्षणम्, अन्योऽन्यप्राप्तिरूपस्वाभीष्टसिद्धिरिति यावत्, यद्वा,—मङ्गल—कल्याणं, परस्परमिलनानन्द इति यावत् ( "मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकन्तु कल्याणे सर्वार्थरक्षणेऽपि च" इति मेदिनी ) याभ्यां वा तौ कृतमङ्गलौ—सिद्धाभीष्टौ, जातानन्दौ वा ( विग० । बहुव्री० )।

(ब) द्वे—द्विप्रकारे, रूपे—आकारौ, स्त्रीपुंरूपे इति यावत्, बिभर्त्ति इति द्विरूपभृत्—स्त्रीपुंरूपधरः [ द्विरूप+भृ+क्विप् "ह्रस्वस्य पिति—" ( ६।१।७१ पा० ) इति तुक् ]। गुलिकया सह वर्त्तते यः सः सगुलिकः,—मुखधृतगुटिकः ( विग० । बहुव्री० )। निष्कासिता—मुखात् बहिष्कृता, गुलिका येन सः निष्कासितगुलिकः,—गुटिकाविहीनमुखः ( विग० । बहुव्री० )।

(भ) सूनवे—पुत्राय ।

समायात्। तत्र तं कान्तं कन्यकारूपं मनःस्वामिनं दृष्ट्वा स मन्त्रिसुतः (म) स्मरव्याधबाणैर्नितरां हतोऽभवत्। ततस्तया (य) कपटकन्यया मुषितचित्तः स मन्त्रिसुतः स्ववधूसहितोऽपि शून्यमात्मानं मन्यमानः स्वगृहं जगाम; आगत्य च गृहं तन्मुखलावण्यध्यानासक्तो मोहमगात्। "किमेतत्?" इति (र) सम्भ्रान्ते परिजने उत्सवोज्झिते स प्रज्ञासागरः पिता द्रुतं तत्रोपागमत्। तेन च पित्रा आश्वास्यमानः स मोहात् (ल) प्रबुध्य प्रलपन्निव सोन्मादं मनोगतमुज्जगार। तत्र पराधीनं मत्वा तत्पितरि नितरां व्याकुले, विदितवृत्तान्तो राजा तत्रैवाऽऽययौ। स राजा तं तथाविधं दृष्ट्वा (व) सप्तमीं मदनावस्थां गतोऽयमिति मन्यमानो जगाद,—"कथं ब्राह्मण-

(म) स्मर,—काम, व्याध इव—मृगयुरिव, तस्य बाणैः,—शरैः स्मरव्याधबाणैः,—कामशरैः, नितराम्—अत्यर्थम् (अव्य०)।

(य) कपटेन—छद्मना. कन्या—कुमारी तया कपटकन्यया—कन्यारूपधारिण्या, न तु वास्तवकन्ययेत्यर्थं (विश०), मुषितचित्त,—अपहृतमना (विश०। बहुव्री०)। तस्याः,—कपटकन्यायाः, मुखलावण्यस्य—वदनकान्ते, ध्याने—चिन्तायाम्, आसक्तः,—निरतः तन्मुखलावण्यध्यानासक्तः,—मन स्वामिवदनशोभाचिन्तनाकृष्टः (विश०। ७मी तत्पु०)।

(र) सम्भ्रान्ते—भीते, त्वरान्विते वा। उत्सवः,—आनन्दानुष्ठानम्, उज्झितः,—त्यक्तः येन तस्मिन्, यद्वा,—उत्सवात् उज्झितः,—निवृत्तः तस्मिन् उत्सवोज्झिते—त्यक्तोत्सवे विरतोत्सवे वा (विश०। बहुव्री० ५मी तत्पु० वा। भावे ७मी०)।

(ल) प्रबुध्य—संज्ञाय, संज्ञां लब्ध्वा इत्यर्थः (प्र+बुध+ल्यप्), प्रलपन् इव—अनर्थकं भाषमाण इव, असम्बद्धवाची इवेति यावत् (प्र+लप्+शतृ), उन्मादेन—वातुलतया सह वर्तते य. तद्‌यथा तथा सोन्मादं—सोन्मत्ततार्क (क्रिया विश०)। उज्जगार—उद्गारयामासेत्यर्थः (उत्+गृ+लिट्-णल्)।

(व) सप्तमस्य पूरणीं सप्तमीम्—"अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसम्प्रलापाश्च। उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः" ॥ इत्युक्तासु स्मरस्य दशसु दशासु मध्ये सप्तमदशामुन्मादरूपामित्यर्थः, मदनावस्थां—स्मरदशाम्। ब्राह्मणस्य

निक्षेपः कन्याऽस्मै दीयते ? तया च विना नियतमसौ पश्चिमां दशां यास्यति, अस्मिंश्च विनष्टे अस्य पिता महामन्त्री अपि विनश्यति, अस्य च नाशे मे राज्यनाशः, तदत्र का गतिः ?" ।

इत्युक्ताः सर्वास्ताः (श) प्रकृतयः प्राब्रुवन्,—"राजन् ! प्रजानां धर्मरक्षणं राज्ञां परमो धर्मः, तस्य मूलं मन्त्रं विदुः, स च मन्त्रिष्ववस्थितः, मन्त्रिनाशे मूलनाशात् कथं धर्मरक्षा ? अस्य च सपुत्रस्य मन्त्रिणो द्विजस्य वधात् पापञ्च स्यात्, तस्मा-दासन्नोऽयं धर्मविप्लवः भवता अवश्यं परिहर्त्तव्यः । सा विप्र-न्यस्तकुमारिका मन्त्रिपुत्राय दातव्या, अथ कालान्तरे विप्रः आगमिष्यति, तदा तस्य प्रतिविधानं भविता" इति । एवं प्रकृतिभिरुक्तो नृपतिः "तथा" इति तां (ष) कूटकन्यां मन्त्रि-पुत्राय दातुं प्रत्यपद्यत ।

अथ लग्नं निश्चित्य राजसुतागृहात् आनीतः कन्यारूपः स मनःस्वामी तं महीपतिं जगाद,—"राजन् ! अन्येन अन्यार्थ-मानीतां मां यदि अन्यस्मै ददासि, (स) कामं तदस्तु, त्वं

---

—हृद्ब्राह्मणरूपधरस्य मूलदेवस्य इत्यर्थः, निक्षेपः,—न्यासः, स्थाप्यधनमित्यर्थः, पुत्र-र्थं रक्षणाय स्थापिता भाविपुत्रवधूरिति यावत्, ब्राह्मणनिक्षेपः,—ब्राह्मणस्य न्यस्तधन-रूपिणीत्यर्थः (विश० ! इष्टौ तत्पु०) । नियतं,—निश्चितम् । पश्चिमां—चरमां, दशासु दशासु शेषां मृत्युरूपामित्यर्थः ।

(श) प्रकृतयः,—पौरवर्गाः ("प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे" इति मेदिनी) । तस्य—धर्मरक्षणस्य, मूलं—प्रधानकारण-मित्यर्थः, मन्त्रं—मन्त्रणाम् ; मन्त्रं तस्य मूलं विदुः इत्यन्वयः । स च—मन्त्रः इत्यर्थः । आसन्नः,—समीपवर्त्ती । धर्मविप्लवः,—धर्मव्यसनम् ।

(ष) कूटेन—मायया, कापटेनेत्यर्थः ("मायादम्भादिग्रन्थेषु सीरावयव-यन्त्रयोः । अयोघनेऽनृते राशौ निश्चले कूट इष्यते" इति माधवः), कन्या तां कूटकन्यां—कापटकुमारीम्

(स) कामम्—अनुमतौ, स्वीकारार्थकमव्ययमिदं, त्वद्वचनमहं स्वीकरोमी-

हि राजा, धर्माधर्मौ तवोचितौ ; अहन्तु ईदृशेन समयेन विवाहमिच्छामि, तावदहं बलात् पत्या एकशय्यां न नेतव्या, यावदसौ षण्मासान् तीर्थानि परिभ्रम्य न समायाति ; नो चेत् दन्तैः कृत्तजिह्वां मामवधारय"।

इति तेन समये उक्ते, राज्ञा सम्बोधितः स मन्त्रिपुत्रः (ङ) प्राप्तनिर्वृतिः "तथा" इति प्रतिपद्य आशु तं परिणीय एकस्मिन् वासके वेत्रिरक्षिते तां मृगाङ्कदत्तां ताञ्च कूटवधूं स्थापयित्वा तीर्थयात्रायै प्रतस्थे। स च मनःस्वामी स्त्रीरूपस्तया

---

त्यर्थः ("कामं बाढेऽनुमतिरेतसोः" इति हैमः), यद्वा,—कामम्—अकामतोऽनुमोदे, इच्छाऽभावेऽपि अगत्या स्वीकरोमीत्यर्थः ("अकामानुमतौ काममसूयोपगमेऽपि च" इति रुद्रः)। तव—त्वया इत्यर्थः ["क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति कर्त्तरि ६ष्ठी०], उचितौ—ज्ञातौ, यद्वा,—उचितौ—मितौ, तुल्यौ इत्यर्थः, सोल्लुण्ठोक्तिरियं, राज्ञां धर्माधर्मविवेचनं नास्ति, उभयमपि प्रयोजनानुरोधादकुण्ठितमाचरन्ति ते, अतः अन्यार्थमानीतायाः कन्यकायाः दानं त्वयि न चित्रमिति भावः ("उचितन्तु भवेत् न्यस्ते मिते ज्ञाते समञ्जसे" इति मेदिनी)। समयेन—शपथेन, नियमेन वा ("समयः शपथे भाषासम्पदोः कालसंविदोः। सिद्धान्ताचारसङ्केतनियमावसरेषु च॥ क्रियाकारे निर्देशे च" इति वैजयन्ती)। षण्मासान्—मासषट्कं यावत् ["कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति २या० ]। कृत्ता—छिन्ना, जिह्वा—रसना यया तां कृत्तजिह्वां—छिन्नरसनां (विशे०। बहुव्री०), यदि मद्वचनं भवद्भिर्नाङ्गीक्रियते, तदाऽहं छिन्नरसनैव निर्वाचा तिष्ठामि, नैनं किञ्चिदप्यालपामि इति ; मया यदुक्तं, तत् कदाऽपि न वितथं भवेत्, यद्यहमनृतवादिनी भवेयं, तदा जिह्वां मे शतखण्डीकृत्य निक्षिपामि इति निश्चिनु इति वा भावः।

(ङ) प्राप्ता—अधिगता, निर्वृतिः,—सुखं ("निर्वृतिः स्वस्थतावस्तं गमने च सुखे स्त्रियाम्" इति मेदिनी) येन तादृशः प्राप्तनिर्वृतिः,—जातानन्दः (विशे०। बहुव्री०)। वासः,—गृहं, स एवेति वासकः (स्वार्थे कन्) तस्मिन् वासके—भवने, वेत्रः,—वेतसलता धार्य्यतया अस्य अस्तीति वेत्री—वेत्रधरः, दौवारिकः इत्यर्थः (वेत्र+अस्त्यर्थे इनिः), तेन रक्षिते—गुप्ते वेत्रिरक्षिते—द्वाराधिष्ठितप्रतिहारिणि।

मृगाङ्कदत्तया सह एकगृहे (क) समानशयनाशनस्तस्थौ। तथास्थितं तं कदाचित् सा मृगाङ्कदत्ता निशि बहिःसुप्तपरिजने शय्यागृहे रहसि प्राब्रवीत्,—"सखि! कामपि कथामाख्याहि, मे निद्रा नास्ति"। तदाकर्ण्य स स्त्रीरूपो युवा अस्यै कथामेकामकथयत्,—"सखि! पूर्वमासीत् इला नाम राजा सूर्य्यवंशभवः। गौरीशापेन स्त्रीत्वं प्राप्तस्य तस्य विश्वैकमोहनं रूपमासीत्; तदवलोक्य देवोद्यानगतश्चन्द्रतनयो बुधस्तां चकमे, तयोश्च सङ्गात् पुरूरवाः समजायत"। इति कथां सङ्क्षेपेणोक्त्वा स धूर्त्तः पुनरुवाच,—"सखि! इत्थं देवताऽऽदेशात् मन्त्रौषधिबलाच्च कदाचित् पुरुषः स्त्री, कदाचन स्त्री च पुमान् स्यात्; तदेवं (ख) महतामपि कामजाः संयोगा जायन्ते"। श्रुत्वैतत् सा (ग) मुग्धा तरुणी मृगाङ्कदत्ता सहवासविस्रम्भात् प्राह,—"सखि! श्रुत्वा ते इमां कथां मे अङ्गं सिमिसिमायते, हृदयञ्चेदं सीदतीव, तदेतत् किम्? ब्रूहि"। तदाकर्ण्य अङ्गनारूपः सः युवा तां प्रत्यवादीत्,—

---

(क) समाने—एके, अभिन्ने इत्यर्थः ("समानः सत्समैकेषु त्रिषु ना नाभिमारुते" इति मेदिनी), शयनाशने—शय्याभोजने यस्य सः समानशयनाशनः,—एकशय्याशायी एकत्रभोजी च, यद्वा,—अश्नाति अत्र इति अशनं—भोजनपात्रम्, एके शयनाशने—शयनीयभोजनाधारे, यद्वा,—समाने—समे, तुल्ये इत्यर्थः, शयनाशने—शय्याभोजने यस्य सः अनुरूपशय्याशायी अनुरूपभोजी चेत्यर्थः (विण०। बहुव्री०)।

(ख) महतां—महात्मनां, देवादीनामित्यर्थः, कामजाः,—सम्भोगवासनोत्थाः।

(ग) मुग्धा—सुन्दरी, मूढ़ा वा, विभ्रान्तचित्ता इत्यर्थः (विण०। मुह+क्तः। "मुग्धस्तु सुन्दरे मूढ़े" इति मेदिनी)। सहवासेन—एकत्रावस्थानेन हेतुना, विस्रम्भात्—विश्वासात ("समौ विस्रम्भविश्वासौ" इत्यमरः) सहवासविस्रम्भात्—एकस्थानवसतिजनितोत्पन्नविश्वासात् (३या तत्पु०। ५मी पूर्वी०)। सिमिसिमः,—हर्षजनितभावविशेषः, "शिर् शिर्" इति भाषा, तमनुभवति इति सिमिसिमायते—सिमिसिमरूपभावविशेषमनुभवति, हृष्यति इत्यर्थः; [सिमिसिम+"सुखादिभ्यः—

"सखि! एतानि ते (घ) अपूर्वाणि कामचिह्नानि, मया एतानि अनुभूतानि, अहं तव न निगुह्ये"। इति तेनोक्ता सा पुनरवादीत्,—"सखि! त्वं मे प्राणसमा, तदहं त्वां किं न वच्मि? (ङ) अपि केनापि उपायेन इह पुंसः प्रवेशः स्यात्?"। एवमुक्तवतीं तां स धूर्त्तपतेः शिष्यो युवा विप्रः प्राह,—(च) "यद्येवं, तत्ते वदामि सखि! अस्ति मे वैष्णवः प्रसादः, येनाहं स्वेच्छया निशि पुरुषः स्यां, तदेषः अद्य त्वत्कृते पुमान् भवामि"। इत्युक्त्वा स मनःस्वामी मुखात् गुलिकामवतार्य्य परमसुन्दरस्वरूपं तस्यै अदर्शयत्। ततस्तयोस्तत्कालोचितरसः (छ) कोऽपि रतोत्सवः प्रावर्त्तत। ततश्च स तया मन्त्रिसुत-भार्य्यया साकं दिवा नारी, रात्रौ पुमान् भूत्वा कांश्चित् कालमनयत्।

अथ तं मन्त्रिसुतम् (ज) आसन्नाऽऽगमनकालं बुद्ध्वा तां

---

(३।१।१८ पा०) इति क्यङ् "अकृत्सार्वधातुकयोर्दीर्घः." (७।४।२५ पा०) इति दीर्घः, ततः लट् ते]। सीदति—अवसादं गच्छति (सद+लट् ति)।

(घ) अपूर्वाणि—पूर्वमननुभूतानीत्यर्थः। तव—त्वय्यर्थः (सम्बन्धविवक्षया षष्ठी)। निगुह्ये—सङ्गुप्ये, त्वत्सकाशे हृदयभावं मा सङ्गोपय, सत्यं ब्रूहीत्यर्थः (नि+गुह+कर्म्मणि लट्-ए)।

(ङ) अपि—प्रश्नसूचकमव्ययं ("गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इति शाश्वतः)।

(च) यद्येवम्—ईदृशी यदि ते पुरुषाकाङ्क्षा स्यादित्यर्थः। विष्णोरयं वैष्णवः,—विष्णुसम्बन्धी, विष्णुविहित इत्यर्थः (विष्णु+अण्), प्रसादः,—अनुग्रहः। स्याम्—भवेयम् [अस+लिङ्-याम् "श्नसोरल्लोपः." (६।४।१११ पा०) इति अस्तेरकार-लोपः]। त्वत्कृते—तव निमित्तं, तव वासनापूरणायेत्यर्थः।

(छ) कोऽपि—अनिर्वचनीय इत्यर्थः।

(ज) आसन्नः,—निकटः, आगमनकालः,—प्रत्यावर्त्तनसमयः यस्य तादृशम् आसन्नाऽऽगमनकालं—समीपप्रत्यावर्त्तनसमयं, प्राय. पूर्णवर्षासामित्यर्थः (विष०।

तद्भार्य्यामादाय निशि स्वैरं पलाय्य क्वापि प्रायात्। ततश्च तं वृत्तान्तं विदित्वा स मूलदेवः पुनः वृद्धद्विजाऽऽकृतिः शशिना मित्रेण (झ) सम्भूय तं यशःकेतुमुपेत्य सविनयमब्रवीत्,—"देव! आनीतोऽयं मया पुत्रः, तद्देहि मे तां स्नुषाम्" इति। ततः स नृपः सम्भ्रान्तः शापभीतः समभ्यधात्,—"ब्रह्मन्! न जाने सा ते स्नुषा क्व गता, तत् क्षमस्व, अस्मात्त्वापराधात् स्वसुतां तव सुताय ददामि"। इत्युक्त्वा तं धूर्त्तराजं (ञ) क्रोध-निष्ठुरं विब्रुवाणं जरद्विप्ररूपं कथञ्चिदनुनीय तस्मै कृतसुत-पुत्रव्यपदेशाय शशिने तां तनयां शशिप्रभां यथाविधि प्रादात्। ततः स मूलदेवः तथाभूतौ वधूवरौ नीत्वा स्व निलयं प्रायात्। ततस्तस्मिन् मनःस्वामिनि उपस्थिते तस्य मूलदेवस्य अग्रतः तस्य शशिनश्च महान् विवादः समजायत। मनःस्वामी अब्रवीत्,—"एषा शशिप्रभा मह्यं दीयतां, कन्यैवासौ मया गुरोरनुग्रहात् प्राक् परिणीता" इति। शशी प्रोवाच,—

बहुव्री०)। स्वैरं—स्वच्छन्द, स्वाभिप्रायानुसारमित्यर्थं (क्रिया विश०। "मन्द-स्वच्छन्दयोः स्वैर." इति शाश्वत.), पलाय्य—पलायनं कृत्वा [परा+अय+ल्यप् "उपसर्गस्यायतौ" (८।२।१९ पा०) इति अथोत्तरपदस्य उपसर्ग-रेफस्य लत्वम्]।

(झ) सम्भूय—मिलित्वा (सम्+भू+ल्यप्)। मे—मह्यम्। स्नुषां—वधू, पुत्रवधूमित्यर्थः ("समाः स्नुषाजनीवध्वः" इत्यमरः)।

(ञ) क्रोधेन—कोपेन, निष्ठुर—परुषं क्रोधनिष्ठुर—रोषकर्कशं (विश०। तृथा तत्पु०), वि—विशेषेण, विरुद्धं वा, ब्रुवाणं—कथयन्त विब्रुवाणम्—भर्त्सयन्तं तिरस्कुर्वन्तमित्यर्थः (वि+ब्रू+शानच्), जरन्—वृद्धः, विप्ररूपः,—ब्राह्मणरूपः तं जरद्विप्ररूप—वृद्धब्राह्मणवेशधर (विश०। कर्मधा०), यद्वा,—जरतो विप्रस्य रूपमिव रूप यस्य त (बहुव्री०)। कृतः,—विहित, तस्य—विप्रस्य, पुत्रः इति व्यपदेशः,—छलं यस्मिन् तस्मै कृततत्पुत्रव्यपदेशाय—पुत्रेतिदत्तकपटपरिचयाय (विश०। बहुव्री०)।

"मूर्ख! कोऽस्यास्त्वम्? ममैवेषा भार्य्या, अग्निसाक्षिकमेषा पित्रा मह्यं दत्ता"। इत्थं (ट) मायाबलप्राप्तराजपुत्रीनिमित्तं विवदमानयोस्तयोः कोऽपि निर्णयः नाऽऽसीत्। तद्राजन्! त्वं मम ब्रूहि, कस्येयं भार्य्या (ठ) उपपद्यते? एतं मे संशयं छिन्धि, समयश्च त्वया मम स्मर्य्यताम्" इति। इति वेतालवचः श्रुत्वा राजा तं प्रत्यभाषत,—"मन्येऽहं शशिन एवासौ (ड) न्याय्या भार्य्या, यस्मै तत्पिता सर्वजनसमक्षम् अग्निसाक्षिकश्च धर्म्येण वर्त्मना दत्ता। मनःस्वामी तां चौर्य्येण गान्धर्वधर्मतो भेजे; चौरस्य (ढ) परस्वेषु स्वत्वं नैव कदाचित् न्याय्यम्" इति। एतत् राज्ञो वचनं निशम्य स वेतालः पुनस्तथैव स्वं निलयं प्राप। राजाऽपि दृढप्रयत्नः पुनस्तत्र गत्वा तं स्कन्धमधिरोप्य गन्तुं प्रववृते।

---

(ट) मायाबलेन—छलव्यवहारेणेत्यर्थः, प्राप्तायाः,—लब्धायाः, राजपुत्र्याः,—राजनन्दिन्याः, निमित्त—कारणं मायाबलप्राप्तराजपुत्रीनिमित्त—कपटताऽऽनीतराजकुमारीहेतोः (६ष्ठी तत्पु०), विवदमानयोः,—वैमत्यहेतुकं नानाविधं विरुद्धं भाषमाणयोः, अन्योऽन्य कलहायमानयोरित्यर्थः [वि+वद "भासनोपसम्भाषा—" (१।३।४७ पा०) इति वैमत्ये आत्मनेपदनियमात् लटः शानच्]।

(ठ) उपपद्यते—युज्यते (उप+पद+लट् ते)। छिन्धि—खण्डय, निरासय इत्यर्थः [छिद+लोट्-हि "रुधादिभ्यः श्नम्" (३।१।७८ पा०) इति श्नमि कृते "हुझल्भ्यो हेर्धिः" (६।४।१०१ पा०) इति हेर्धि-भावः]। समयः,—नियमः, आगमेऽपि मृषाभाषणे शिरसः शतधाभवनरूपं शापवचनमित्यर्थः।

(ड) न्याय्या—उचिता, न्यायसङ्गता इत्यर्थः। धर्मादनपेतेन धर्म्येण—धर्मविहितेन, यथाशास्त्रं वैवाहिककर्मानुष्ठानरूपेणेत्यर्थः, वर्त्मना—मार्गेण।

(ढ) परस्वेषु—परधनेषु।

# अथ षोड़शकथा ।

अथ राजा तं वेतालं नीत्वा गच्छति स्म। वेतालश्च तमब्रवीत्,—"राजन्! शृणु अपूर्वामिकां कथाम्,—"

अस्ति (क) हिमवान् नाम सर्वरत्नभूमिर्नगेन्द्रः, यो हि गौरीगङ्गयोः हरभार्य्ययोस्तुल्यप्रभवः; यश्च कुलभूभृताम् अग्रणीः सूर्य्येणाप्यदृष्टपृष्ठदेशः अभिमानोन्नतः सर्वत्र गीयते। तस्य (ख) सानोरुपरि काञ्चनपुरं नाम पुरं रविणा न्यासीकृतं रश्मिवृन्दमिव विभाति। तत्र जीमूतकेतुरिति श्रीमान् विद्या-

(क) हिमवान्—हिमालयः। सर्वेषां रत्नानां—पद्मरागादिमणीनां, भूमिः,—उत्पत्तिस्थानं सर्वरत्नभूमिः,—समस्तरत्नप्रभवः (विशे० । ६ष्ठी तत्पु०), नगेषु नगानां वा इन्द्रः,—श्रेष्ठः नगेन्द्रः,—पर्वतराजः (६ष्ठी वा ७मी तत्पु०)। तुल्यः,—एकः, प्रभवः,—उत्पत्तिस्थानं तुल्यप्रभवः,—एकोत्पत्तिस्थानं (कर्मधा०), गौरी मेनकागर्भजाता हिमालयतनया, गङ्गा च हिमाचलादुत्पन्ना, अतस्तयोरेकप्रभवत्वं, किञ्च उभे एव शिवेन परिणीते इति भावः। कुलभूभृतां—"महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैव कुलपर्वताः" इत्युक्तानां सप्तानां वर्षपर्वतानां, पर्वतश्रेष्ठानामपि इत्यर्थः। सूर्य्येणाप्यदृष्टपृष्ठदेशः इति अत्युन्नतत्वादिति भावः, सूर्य्यस्तस्य कटकभागेनैव विचरति, अतस्तस्य पृष्ठदेशं द्रष्टुं न शक्नोतीत्याशयः (विशे० । बहुव्री०), अभिमानेन—गर्वेण, सर्वभूभृत्सु अहं श्रेष्ठ इति दर्पेणेत्यर्थः, उन्नतः,—उच्चशिरा इत्यर्थः, अभिमानोन्नतः,—दर्पोत्तुङ्गः (विशे० । बहुव्री०)। गीयते—कथ्यते (गै+कर्म्मणि लट्-ते), जनैरिति शेषः।

(ख) सानोः,—प्रस्थस्य, पर्वतोपरिस्थसमभूभागस्येत्यर्थः ("स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः)। अन्यासः न्यासः कृतः तत् न्यासीकृतं—निक्षेपीकृतं, पुनर्ग्रहणाय किञ्चित् कालं स्थापितमित्यर्थः (अभूततद्भावे च्विः), विविधमणिरत्नादिविभूषितं काञ्चनपुरमेतादृशमुज्ज्वलमासीत् यत्, दर्शनमात्रेणैव सूर्य्यमयूखजालमिवेदम् एकत्र स्तूपीभूय समवस्थितमिति प्रतिभाति इति विशदार्थः।

अमरपतिः पुरन्दर इव (ग) मेरौ समध्युवास। तस्य गृहोद्याने कुलक्रमाऽऽगतः कल्पतरुः स्थितः। स राजा जीमूतकेतुः तं देवस्वरूपं कल्पतरुमाराध्य तत्प्रसादात् (घ) जातिस्मरं बोधिसत्त्वांशसम्भवं दानवीरं महासत्त्वं सर्वभूतानुकम्पिनं गुरुशुश्रूषणापरं जीमूतवाहनं नाम पुत्रं प्राप।

कालेन सम्प्राप्तयौवनं तं स राजा (ङ) सद्भिस्तद्गुणैः सचिवैश्च प्रेरितः यौवराज्ये अभिषिक्तवान्। कदाचित् यौवराज्यस्थितः स जीमूतवाहनः हितैषिभिः पितृमन्त्रिभिरुपेत्य जगदे,—"युवराज! योऽयं कल्पतरुः सर्वकामदः (च) सर्वभूतानामधृष्यश्च तवोद्याने तिष्ठति, अयं तव सदा पूज्यः; अस्मिन् अनुकूले स्थिते शक्रोऽपि नास्मान् बाधितुं शक्नुयात्, किमुतापरः?"।

---

(ग) मेरौ—सुमेरौ, देवानामावासभूमिस्वरूपे इत्यर्थः। समध्युवास—अधितष्ठौ (सम्+अधि+वस+लिट्-णल्)।

(घ) जातिं—पूर्वजन्म स्मरति यस्मात्तादृशं जातिस्मरं—प्राक्तनजन्मवृत्तान्तस्मरणयुक्तं (विण०। जाति+स्मृ+पचाद्यच्), बोधिसत्त्वः,—बुद्धदेवः, तस्य अंशात् सम्भवः,—उत्पत्तिर्यस्य तादृशं बोधिसत्त्वांशसम्भवं—बुद्धदेवांशसम्भूतं (विण०। बहुव्री०), दाने—त्यागे, वीरः,—भटः, श्रेष्ठो वा ("वीरो जिने भटे श्रेष्ठे" इति हेमचन्द्रः) तं दानवीरं—दानधर्मयुद्धदयाभेदेन चतुर्विधेषु वीरेषु मध्ये वीरविशेषं, दातृश्रेष्ठमित्यर्थः (विण०। ७मी तत्पु०)।

(ङ) सद्भिः,—उत्तमैः। प्रेरितः,—प्रणोदितः, चालित इत्यर्थः (विणं०)। अभिषिक्तवान्—नियोजितवान्, युवराजपददानार्थं नानातीर्थाहृतैर्जलैर्यथाविधि स्नापितवानित्यर्थः (अभि+षिच्+क्तवतु)।

(च) सर्वभूतानां—निखिलप्राणिनां, सर्वप्राणिभिरित्यर्थः (कृद्योगे कर्त्तरि ६ष्ठी०), न धृष्यः अधृष्यः,—धर्षणानर्हः, अपराजेय इत्यर्थः [धृष्+"ऋहलोर्ण्यत्"(३।१।१२४ पा०) इति ण्यत्]। तव—त्वयेत्यर्थः (कर्त्तरि ६ष्ठी०)। अनुकूले—प्रसन्ने। शक्रः,—इन्द्रः। बाधितुं—पीडयितुं, पराजेतुमिति यावत्। किमुत—किं पुनः।

एतदाकर्ण्य स जीमूतवाहनः (छ) अन्तरचिन्तयत्,—'अहो बत ! ईदृशममरपादपं प्राप्यापि पूर्वैः पुरुषैरस्माकं तादृशं फलं किमपि नासादितं, केवलं कैश्चिदपि कृपणैस्तैः कश्चिदपि अर्थमर्थितः, तेन आत्मा च महात्मा चैषः उभौ लाघवं नीतौ, तदहमस्मात् मनोरथमभीष्टं साधयामि' इत्यालोच्य स महात्मा पितुरन्तिकमाजगाम । आगत्य च (ज) विहिताशेषशुश्रूषया परितोषितं सुखमासीनं पितरमेकान्ते व्यजिज्ञपत्,—"तात ! त्वमेव जानासि यदेतस्मिन् संसारसागरे आशरीरमिदं सर्वं धनं वीचिविभ्रमचञ्चलं, विशेषेण अचिरस्थायिनी प्रकाशपलायिनी

---

(छ) अन्तः,—मनसि । अहो बत !—खेदे अनुकम्पायां वा (अव्य० । "अहो बतानुकम्पायां खेदे सम्बोधनेऽपि च" इति मेदिनी), पूर्वपुरुषाणां कार्पण्यं स्मृत्वा तान् प्रति खेदः, अनुकम्पा वा इति बोध्यम् । अमरपादप—देवतरु ("पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" इत्यमरोक्तौ कल्पवृक्षस्य देवतरुत्वम्) । कृपणैः,—कदर्य्यैः, क्षुद्राशयैरित्यर्थः, (विशे० । "कदर्य्ये कृपणक्षुद्रकिम्पचानमितम्पचाः" इत्यमरः), ईदृशं देवदुर्लभं सर्वाभीष्टप्रदं द्रुमं प्राप्यापि किमपि पारलौकिकं श्रेयः असाधयित्वा केवलं तुच्छैहिकसम्पदि अभिलाषात् तेषां कृपणत्वम् अनुकम्पनीयत्वञ्च बोद्धव्यम् । तेन च—अकिञ्चित्करार्थप्रार्थनहेतुना इत्यर्थः, महाधनिनः दानवीरस्य च समीपे अकिञ्चित्करवस्तुप्रार्थनं स्वस्य नीचाशयत्वव्यञ्जकं दातुश्च तत् ग्लानिकरमिति एतादृशकर्म्मणा उभयोरेव लघुत्वसम्पादनमवगन्तव्यम् । अभीष्टं—प्रियम् ।

(ज) विहिता—कृता, या अशेषा—कृत्स्ना, विविधा इति यावत्, शुश्रूषा—परिचर्य्या तया विहिताशेषशुश्रूषया—सम्पादितविविधसेवया (कर्मधा० । करणे ३या०) । आशरीरम्—आदेहं, शरीरमारभ्येत्यर्थः, ["आङ्मर्य्यादाभिविध्योः" (२।१।१३ पा०) इति अव्ययीभावः] । वीचेः,—तरङ्गस्य, विभ्रमः,—विलासः, तद्वत् चञ्चलं—चपलं, अचिरविध्वंसि इति यावत्, तरङ्गो यथा उत्थायैव विलीयते, इदं शरीरं सर्वं धनजातञ्च तथा स्वल्पेनैव कालेन विलीनं भवति न चिरं तिष्ठतीति भावः । अचिरस्थायिनी—अल्पस्थायिनी, प्रकाशः,—प्रकटीभावः, तदनन्तरमेव पलायिनी—पलायनशीला प्रकाशपलायिनी—उदयानन्तरमेव पलायनस्वभावा (विशे० । आक-

सन्ध्याविद्युदिव चला लक्ष्मीः न कुत्रापि कदाऽपि स्थिरा, एकः परोपकार एवास्मिन् संसारे अनश्वरः युगान्तशतसाक्षिणो धर्म-यशसी प्रसूते। तात! तत् क्षणिकेषु एषु सर्वेषु अस्माभिरीदृशः कल्पतरुः किमर्थं रक्ष्यते? यैश्च पूर्वैरयं 'मम मम' इति आग्रहेण रक्षितः, तैरिदानीं कुत्र गतम्? तेषां कस्यायम्? अस्य वा ते के? तस्मात् परोपकारैकफलसिद्धये त्वदाज्ञया इमं कामदं कल्पपादपम् आराधयामि"।

अथ पित्रा "तथा" इति (झ) अभ्यनुज्ञातः स जीमूतवाहनः कल्पतरुं गत्वा उवाच,—"देव! त्वया अस्मत्पूर्वेषामभीष्टाः कामाः पूरिताः, तन्ममैकमनन्यं कामं परिपूरय; यथा पृथ्वी-मदरिद्रां पश्यामि, तथा करोतु देवः। (ञ) भद्रमस्तु ते, व्रज, लोकाय अर्थिने त्वं मया दत्तोऽसि"। इतिवादिनि कृताञ्जलौ जीमूतवाहने "त्यक्तस्त्वया एषोऽहं यातोऽस्मि" इति वाक्

पार्थिवा० ), सन्ध्या च विद्युच्च ते इव सन्ध्याविद्युदिव—सन्ध्येव विद्युदिव च इत्यर्थः, सन्ध्यायाः मुहूर्त्तद्वयात्मकत्वात् मुहूर्त्तद्वयस्थित्यात्मिका सन्ध्या यथा अचिरस्थायिनी; तथा विद्युच्च यथा प्रकाशमात्रमेव पश्चादगोचरा तथा लक्ष्मीरपि चला इति योजना। अनश्वरः,—अविनश्वरः [ न+नश+"इण्नश—" ( ३।२।१६३ पा०) इति क्वरप् ], युगान्तानां—युगावसानानां, शतं—शतसङ्ख्या, तस्य साक्षिणी—साक्षाद्द्रष्टृणी युगान्तशतसाक्षिणी—पर्यायक्रमेण पुनः पुनरावर्त्तमानचतुर्युगचतुष्टयस्य प्रत्यक्ष-दर्शिनीत्यर्थः, "कीर्त्तिर्यस्य स जीवति" इति सिद्धान्तात् धर्मयशसोरक्षय्यत्वात् इति भावः [ धर्मयशसी इत्यस्य विश०। षष्ठी तत्पु०। युगान्तशत+साक्षात्+ "साक्षाद्द्रष्टरि संज्ञायाम्" (५।२।९१ पा०) इति इनिः "अव्ययानां भमात्रे" (वा०) इति टिलोपः ]। प्रसूते—जनयति ( प्र+सू +लट्-ते )।

(झ) अभ्यनुज्ञातः,—अनुमतः। कामाः,—मनोरथाः। एकम्—एकमात्रं, न द्वितीयमित्यर्थः, अन्यः,—असदृशः ( "अन्योऽसदृशेतरयोः" इति हेमः ), स न भवतीति तम् अनन्यं—सदृशं, तव माहात्म्यानुरूपमित्यर्थः।

(ञ) भद्रं—शुभम्। अर्थिने—याचकाय, दरिद्रायेति यावत्।

तस्मात्तरोरुदभूत्। क्षणेन च स कल्पतरुः (ट) दिवः समुत्पत्य भुवि तथा वसूनि अवर्षत्, यथा न कोऽपि दुर्गत आसीत्। ततस्तस्य (ठ) तया सर्वजीवानुकम्पया त्रैलोक्ये यशः पप्रथे।

अथ (ड) तद्गोत्रजाः सर्वे मात्सर्यात् असहिष्णवः कल्प-पादपरहितं तं जीमूतवाहनं सपितृकं सुजयं मत्वा सम्भूय च तस्य राज्यापहरणाय योद्धुं समनह्यन्त। तदवलोक्य जीमूत-वाहनः पितरमवादीत्,—"तात! धृतायुधेन त्वया योद्धुं कस्य शक्तिरस्ति? किन्तु अस्य (ढ) पापस्य विनाशिनः शरीरस्य कृते बन्धून् हत्वा कोऽकृपणो राज्यमाकाङ्क्षति? तत् किं नो राज्येन? अन्यत्र क्वचित् गत्वा वयं धर्ममेव आचरिष्यामः, येन लोकयो-

---

(ट) दिवः,—आकाशात् (अपा० ५मी०), दिवमुत्पत्येत्यर्थे वा (ल्यब्लोपे ५मी०)। वसूनि—धनानि ("रिक्थमृक्थं धनं वसु" इत्यमरः)। दुर्गतः,—दरिद्रः ("निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः" इत्यमरः)।

(ठ) तया—पूर्वोक्तकल्पतरुदानरूपया इत्यर्थः। पप्रथे—वितस्तार (प्रथ+लिट् ए)।

(ड) तस्य—जीमूतवाहनस्य, गोत्रात्—वंशात्, जायन्ते इति तद्गोत्रजाः,—तद्वंशप्रभवाः, जीमूतवाहनस्य ज्ञातिवर्गाः इत्यर्थः [तद्गोत्र+जन+"अन्येष्वपि दृश्यते" (३।२।१०१ पा०) इति डः]। मत्सरः,—अन्यशुभद्वेषः ("मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु" इत्यमरः), तस्य भावः तस्मात् मात्सर्यात्—पराभ्युदयासहनस्वभावत्वात्, असहिष्णवः,—असहनाः, जीमूतवाहनस्य यशः सोढुमशक्नुवानाः इत्यर्थः [न+सह+"अलंकृञ्—" (३।२।१३६ पा०) इति इष्णुच्]। सुखेन जेतुं शक्यं सुजयम्—अनायासेन पराजेतव्यं [सु+जि+"ईषद्दुःसुषु—" (३।३।१२६ पा०) इति खल्]। समनह्यन्त—समवर्मयन्, कवचादिना आत्मनः समसज्जयन् इत्यर्थः (सम्+नह+लङ्-अन्त)।

(ढ) पापमनेन साधयति पापमस्यास्ति इति वा तस्य पापस्य—पापकारिणः इत्यर्थः, शरीरलाभमन्तरा पापाचरणाशक्यत्वात् तत्साधकत्वेन शरीरस्यापि पापत्वं बोद्धव्यम् (अर्श-आदित्वादच्)। बन्धून्—ज्ञातीन् ("सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः)। अकृपणः,—अक्षुद्रः, उदाराशयो महानित्यर्थः।

उभयोः सद्गतिः स्यात्। अन्यथा एते (ण) दायादा राज्यलोलुपा मोदन्ताम्"। इतिवादिनं तं जीमूतकेतुरब्रवीत्,—"पुत्र! अहं त्वदर्थं राज्यमिच्छामि, त्वञ्चेत् कृपया तत् जहासि, तदा वृद्धस्य मे तेन किम्?"। इत्थं (त) कृताभ्यनुज्ञेन पित्रा मात्रा च समन्वितः स जीमूतवाहनः राज्यं विहाय मलयाचलमगात्, तत्र स रचिताऽऽश्रमः पितरौ शुश्रूषमाणस्तस्थौ।

एकदा स इतस्ततो भ्रमन् विश्वावसुनाम्न (थ) सिद्धराजस्य तत्र निवासिनः पुत्रं मित्रावसुं नाम दृष्ट्वा सम्भाष्य च मित्रम् अकरोत्। ततश्चैकदा स जीमूतवाहनः उपवने स्थितं देव्या गौर्य्या (द) आयतनं दृष्ट्वा प्रविवेश, ददर्श च तत्र उपवीणयन्तीं, सखीजनपरिवृतां, शैलबालाऽऽराधनार्थं स्थितां, लोचनलावण्य-

—

लोकयोरुभयोः,—ऐहिकपारत्रिकयोः, सद्गतिः,—शुभावस्था, इहलोके यथाधर्माधि-लाभः परलोके चाक्षयस्वर्गलाभ इत्यर्थः।

(ण) दाय—पैतृकधनम्, आददते—गृह्णन्ति इति दायादाः,—बान्धवाः, ज्ञातय इत्यर्थः। [दाय+आ+दा+"आतश्चोप—" (३।१।१३६ पा०) इति कः। "दायादौ सुतबान्धवौ" इत्यमरः]। मोदन्ताम्—प्रीयन्ताम् (मुद+लोट् अन्ताम्)।

(त) कृता—दत्ता, अभ्यनुज्ञा—अनुमतिः येन तेन कृताभ्यनुज्ञेन—विहितानुमोदनेन, समर्थितपुत्रप्रार्थनेनेत्यर्थः (विश०। बहुव्री०)। शुश्रूषमाणः,—सेवमानः [श्रु+सन्+"अज्झनगमां सनि" (६।४।१६ पा०) इति सनि परे दीर्घः, "ज्ञाश्रुस्मृदृशां सनः" (१।३।५७ पा०) इत्यात्मनेपदविधानात् लटः शानच्]।

(थ) सिद्धाः,—देवयोनिविशेषाः, तेषां राजा तस्य सिद्धराजस्य—सिद्धाधिपस्य।

(द) आयतनं—स्थानं, मन्दिरमित्यर्थः। उप—समीपे, वीणया गायन्तीम् उपवीणयन्तीं—देव्याः समीपे वीणावादनपुरःसरं गानं कुर्वतीमित्यर्थः [विश०। उप+वीणा+"मुण्डमिश्र—" (३।१।२१ पा०) इति सूत्रस्य वृत्तौ "प्रातिपदिकाद्धात्वर्थे इत्येव सिद्धे केषाञ्चिद्ग्रहणं सापेक्षेभ्योऽपि णिजर्थम्" इति नियमात् णिच्+शतृ]। शैलबाला—पार्वती, तस्या आराधनार्थं—पूजार्थं शैलबालाऽऽराधनार्थं

दर्शनेन लज्जितैरिव निश्चलैर्मृगैराकर्ण्यमानसङ्गीतवीणारवाम्, अञ्जनेन कृष्णां कर्णमूलं विमथ्नतीं पाण्डवचमूमिव तारकां बिभ्रतीं, परस्परोपमर्देन मुखेन्दोरिव दर्शनमैद्ममभिवाञ्छन्तौ उन्मुखौ स्तनौ दधतीं, धातुः सृष्टवतो मुष्टिग्रहेणेव निपीडिते वलीमग्नाङ्गुलीमुद्रे मध्ये क्षाममनोरमां कामपि कन्यकाम्।

—गौरीपूजार्थम्। आकर्ण्यमानः,—श्रूयमाणः, सङ्गीतायाः,—संशब्दितायाः, कलं ध्वनन्त्या इत्यर्थः ("गीतं शब्दितगानयोः" इति हैमः), वीणायाः,—वल्लक्याः, रवः,—शब्दः यस्यास्ताम् आकर्ण्यमानसङ्गीतवीणारवां—श्रूयमाणवीणास्वनां, यद्वा,—आकर्ण्यमानः सङ्गीतस्य वीणायाश्च रवः यस्यास्तां (विश०। बहुव्री०)। अञ्जनेन—कज्जलेन, कृष्णां—कृष्णवर्णां, सूक्ष्मकज्जलरेखायुक्तामित्यर्थः, चमूपक्षे,—अञ्जनेन—तदाख्यमहाराजविशेषेण उपलक्षितामित्यर्थः (इत्थम्भूतलक्षणे तृया०), कृष्णः सहायत्वेनास्यामस्तीति तां कृष्णां—कृष्णाधिष्ठितामित्यर्थः (अर्श-आदित्वादच्), कर्णमूलं—कर्णसमीपं, विमथ्नतीम्—आघट्टयन्तीं, स्पृशन्तीमित्यर्थः, आकर्णविस्फारितामिति भावः, अन्यत्र,—कर्णः,—तदाख्यः दुर्योधनसखा एव, मूलं—प्रधानं, सङ्ग्रामे प्रधानभूतं कर्णमित्यर्थः, विमथ्नतीम्—आलोडयन्तीम्, उन्मूलयन्तीमित्यर्थः, यद्वा,—कर्ण एव मूलं यस्य तं कर्णमूलं—कर्णसेनापतिकसैन्यसमूहं, कर्णाधिष्ठितसैन्यवृन्दमित्यर्थः (वि+मन्थ+शतृ, ताः), पाण्डवचमूः—पाण्डवसेना, तारकां—दृशं, नयनमित्यर्थः ("तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि। कनीनिकायामक्षि च न पुमान् तारि त्रिषु" ॥ इति मेदिनी)। परस्परोपमर्देन—अन्योऽन्यसङ्घर्षेण, अतिपीनतया परस्परसंश्लिष्टत्वादिति भावः। सृष्टवतः,—सृष्टिकर्तुः, सृजनं कृतवतः इत्यर्थः, कन्याम् इति शेषः (सृज+कर्तरि क्तवतुः), मुष्ट्या ग्रहः,—ग्रहणं तेन मुष्टिग्रहेण—सृजनसमये मुष्टिद्वारा धारणेनेत्यर्थः, निपीडिते—कृशे; ननु मध्यदेशस्य चेदीदृशी कोमलता यत्, मुष्टिपीडनेनैव सः क्षीणः सञ्जातः, तदा पीडनकाले कोमलपदार्थे अङ्गुलिचिह्नानीव मध्यदेशेऽपि अवश्यमेव अङ्गुलिचिह्नानि सम्भवन्ति, तानि तु कथं न दृश्यन्ते इत्याह, वलीति।—वलीषु—उदररेखात्रयेषु, मग्ना—अदर्शनं गतेति भावः, अङ्गुलीमुद्रा—अङ्गुलीरेखा यत्र तादृशे वलीमग्नाङ्गुलीमुद्रे—त्रिवलीशोभिते इति भावः, मध्ये—कटिदेशे (औपश्लेषिके ७मी०), मध्यदेशावच्छेदे इति यावत्, क्षामा—कृशा, अत एव मनोरमा तां क्षाममनोरमां—कृशोदरीं मनोहारिणीञ्चेत्यर्थः (कर्मधा०)।

तया च दृष्टया तन्व्या स जीमूतवाहनः सद्यः (ध) दृष्टिमार्ग-प्रविष्टया मुषितचित्तोऽभूत्। साऽपि तं (न) भूषितोद्यानम् उत्कण्ठाविकारप्रदं कामाङ्गदाहवैराग्यात् वनमाश्रितं मधुमिव दृष्ट्वा अनुरागविवशा तथा विह्वलतां भेजे, यथा सखीनां व्याकुलतामधात्। ततः स जीमूतवाहनस्तस्याः सखीमपृच्छत्, —"भद्रे! तव सख्याः किं (प) धन्यं नाम? को वा वंशोऽनया अलङ्कृतः?"। तदाकर्ण्य सखी प्राब्रवीत्,—"महाभाग! इयं हि नाम्ना मलयवती, मित्रावसोः स्वसा, सिद्धराजस्य दुहिता"। एवमुक्त्वा सा सखी सहृदया तं जीमूतवाहनं, महाऽऽगतं मुनि-पुत्रम् अस्य (फ) नामान्वयौ पृष्ट्वा तां मलयवतीं स्मितमिताक्षरम् अवादीत्,—"सखि! विद्याधरेन्द्रस्यास्य किमातिथ्यं न

(ध) दृष्टिमार्गेण—जीमूतवाहनस्य नेत्रपथेन, नयनं विस्फारीकृत्य दर्शना-वसरे इति भावः, प्रविष्टया—अन्तर्गतया दृष्टिमार्गप्रविष्टया—विस्फारितचक्षुःपथेन हृदयान्तर्गतया (विग्र०)।

(न) भूषितम्—अलङ्कृतम्, उद्यानं येन तं भूषितोद्यानं—मण्डितोपवनम्, उद्यानशोभावर्द्धकमित्यर्थः, उत्कण्ठा—उत्कलिका, प्रियजनविरहे तस्य सस्पृह-स्मरणमिति यावत् ("चिन्ता तु स्मृतिराध्यानं स्मरणं, सस्पृहे पुनः। उत्कण्ठोत्-कलिके तस्मिन्, अभिध्या तूभयोरपि" इति शब्दार्णवः), सा एव विकारः,—अन्यथा-भावः, तं प्रददाति इति तम् उत्कण्ठाविकारप्रदम्—उत्कलिकाजनकं, चित्तापहारक-मिति भावः, कामस्य—मदनस्य, स्मरस्य इति यावत्, अङ्गदाहात्—हरेण भस्मी-करणात्, वैराग्यं—निर्वेदः तस्मात् कामाङ्गदाहवैराग्यात्—मृत्युमरणेन संसार-नैःस्पृह्यात्। मधुं—वसन्तम्। विह्वलतां—व्याकुलतां ("विह्वलव्याकुलौ समौ" इत्यमरः)। अधात्—समपादि, विहितवतीत्यर्थः [धा+लुङ्-द "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]।

(प) धन्यं—पुण्यवत्, प्रशस्यमिति यावत्, नामव्याजेन ईदृश्याः लोक-ललामभूतायाः आश्रयं प्राप्य तस्य जन्मसार्थकं सञ्जातमिति धन्यपदप्रयोगाशयः।

(फ) नाम च अन्वयः,—वंशश्च ("सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानः" इत्यमरः) तौ नामान्वयौ—नामजनने (द्वन्द्व०)। स्मितेन—

करोषि ? जगत्पूज्य एष: अतिथि: प्राप्त:"। इति तयोक्ते सा सिद्धराजसुता तूष्णीं लज्जाऽवनताऽऽनना अभूत्। तत: सखी, —"लज्जावतीयं, (ब) मत्तोऽर्घा गृह्यताम्" इतिवादिनी तस्मै सार्घ्यां मालामुपानयत्। स च जीमूतवाहन: (भ) प्रेमनिर्भर: तां मालामादाय तस्या मलयवत्या: कण्ठे समर्पयत्। साऽपि (म) तिर्य्यक्प्रसृतया स्निग्धया दृशा नीलोत्पलमयीमिव मालां तस्मै प्रत्यर्पयत्। इत्येवम् (य) अन्योन्यकृताशब्दस्वयंवरयोस्तयो: एकां सिद्धराजसुतां काऽपि चेटी समागत्य जगाद,—"राजपुत्रि! जननी त्वां स्मरति, शीघ्रमागच्छ"। तदाकर्ण्य सा (र) कामेषुकीलितामिव स्वात्मां दृष्टिं प्रियमुखात् कथञ्चित्

---

ईषद्धास्येन सह, मितं—स्वल्पम्, अक्षरं यस्मिन् तत् स्मितमिताक्षरम्—ईषद्धास्ययुक्त-परिमिताक्षर यथा तथा ( क्रिया विश० )।

( ब ) मत्त:,—मत्सकाशात् (अपादाने ५मी०। पञ्चम्यास्तसिल्), अर्घा—पूजा, अतिथिर्विहिता इति भाव:। अर्घाय—पूजाविधये ("मूल्ये पूजाविधावर्घ:" इत्यमर:) इदम् अर्घ्यं—दूर्वाक्षतादिकं ( "निव्यर्घ्यमर्घार्थे" इत्यमर: ), तेन सह वर्त्तते तां सार्घ्याम्—अर्घ्यसहिताम्।

( भ ) प्रेम्ण:,—स्नेहस्य, निर्भर:,—अतिशयो यस्य स: प्रेमनिर्भर:,—स्नेहातिशय:, अतिशयप्रणयसम्पन्न: इत्यर्थ: ( विश०। बहुव्री० ), प्रेम्णा निर्भर:,—नि:शेषेण परिपूर्ण इति वा ( ३या तत्पु० )।

( म ) तिर्य्यक्—वक्रभावेन, प्रसृतया—प्रेरितया, निक्षिप्तया इति यावत्, तिर्य्यक्प्रसृतया—सकटाक्षयेत्यर्थ: ( विश० )। नीलोत्पलमयीमिव—नीलोत्पलग्रथिता-मिवेत्यर्थ:, इन्दीवरलोचनत्वादिति भाव:।

( य ) अन्योऽन्यं—परस्परं, कृत:,—विहित:, अशब्द:,—शब्दरहित:, अवाचिक: इत्यर्थ:, मानस इति भाव:, स्वयंवर:,—आत्मनैव पतिपत्नीरूपेण वरणं याभ्यां तयो: अन्योन्यकृताशब्दस्वयंवरयो:,—मिथ: सम्पादितमानसविवाहयोरित्यर्थ: ( विश०। बहुव्री०। निर्द्धारे ६ष्ठी० )।

( र ) कामेषौ—कन्दर्पबाणे, कीलिता—बद्धा ( "बद्धे कीलितसंयतौ" इत्यमर: ) कामेषुकीलिता—मन्मथबाणनिबद्धां ( विश०। ७मी तत्पु० ), हृदयहारिण

भाजन कष्टेण गृहमगात्, जीमूतवाहनोऽपि तन्मताऽऽज्ञा स्वमाश्रममयासीत्। अथ सा प्राणेशविरहाऽऽतुरा स्वां जननीं दृष्ट्वा शयनीयं गत्वा आशु तत्र पपात।

अथ *सा (ख) अन्तर्गतकामाग्निधूमेनेव आविलनेत्रा, सन्तापक्वथिताङ्गी, अश्रूणि प्रमुञ्चन्ती, सखीभिश्चन्दनैर्लिप्ता, पद्मिनीदलैश्च वीजिता, शयने सख्या अङ्के भूतले च न शर्म लेभे। ततश्च (ग) वासरे रक्तया सन्ध्यया सह क्वापि गते, चन्द्रे च हसन्त्याः प्राच्या मुखं समाक्रम्य चुम्बति, सा स्मरेणाऽऽपूर्य्य-माणाऽपि जीवितस्पृहाशून्या दूतीसम्प्रेषणादिकं लज्जया कर्त्तुं

जीमूतवाहनमुखादन्यत्र प्रेरयितुमसमर्थत्वादिति भावः, यथा कश्चित् कमपि प्राणिनं कस्मिंश्चिन् शङ्कौ रज्ज्वादिना दृढं सयत्नं स्थापयति, स च प्राणी तत्स्थानादन्यत्र चलितुं न शक्नोति, तथा कामोऽपि मलयवतीदृष्टिं जीमूतवाहनमुखं प्रति अनु-रागरज्ज्वा निजबाणे दृढं निबध्य स्थापितवान्, सा च तन्मुखात् दृष्टिं क्षणमप्यन्यत्र नेतुं न शशाकेति तात्पर्य्यम्, एतेन अतिरमणीयं जीमूतवाहनमुखं कामबाण इव योषिदुन्मादकमिति प्रतीयते; सोत्का—सोत्सुकामित्यर्थः, सोत्कण्ठितामित्यर्थो वा (विश०)।

(ख) अन्तर्गतस्य—हृदि प्रच्छन्न स्थितस्य, कामाग्नेः,—मदनानलस्य, धूमेन अन्तर्गतकामाग्निधूमेन—हृदिस्थितमदनानलधूमेन (६ष्ठी तत्पु०), आविलनेत्रा—कलुषितनयना, रक्तचक्षुः इति यावत्, प्रियाप्राप्त्या अविरतरोदनजनितनेत्रलौहित्यस्य कामाग्निधूमसम्बन्धजनितत्वोत्प्रेक्षा; सन्तापेन—कामानलोष्मणा, क्वथित—निष्पक्व, निःशेषेण पाकं प्राप्तमित्यर्थः ("निष्पक्वं क्वथितम्" इत्यमरः), अङ्गं यस्याः सा सन्ताप-क्वथिताङ्गी—कामाग्निदग्धावयवा, विवर्णदेहा इत्यर्थः (विश०। बहुव्री०)। अङ्के—उत्सङ्गे, क्रोडे इत्यर्थः ("उत्सङ्गचिह्नयोरङ्कः" इत्यमरः)। शर्म—सुखं ("शर्मशात-सुखानि च" इत्यमरः)।

(ग) वासरे—दिवसे, नायके इति व्यज्यते, रक्तया—अरुणवर्णया, अनुरक्तया इति व्यज्यते, सन्ध्यया—कयाचित् नायिकयेति व्यज्यते। क्वापि गते—अनिर्दिष्ट-प्रदेशं प्रस्थिते, निशायां समागतायामित्यर्थः; चन्द्रे—कस्मिंश्चिन्नायके इति व्यज्यते। प्राच्याः,—पूर्वदिग्वध्वाः, प्रेयस्या नायिकाया इति व्यज्यते। समाक्रम्य चुम्बति—*

नाशयत्, निनाय च कष्टेन निशाम्। जीमूतवाहनोऽपि तद्वियोगाऽऽर्त्तः (श) शयनस्थोऽपि कामस्य हस्ते पतितः, नूतनोद्भिन्नरागोऽपि प्रोन्मिषत्पाण्डुरकान्तिः, लज्जामूकोऽपि कामजां पीड़ां वदन् निशामनैषीत्; प्रातश्चोत्थाय नितान्तमुत्सुकः तदेव गौर्य्या मन्दिरमगात्। तत्र तेन सख्या मुनिपुत्रेण (ष) पृष्ठतः आगत्य यावदसौ समाश्वास्यते, तावत् मदनानलविह्वला सा मलयवती विरहासहा एकाकिनी गृहान्निर्गत्य गुप्तं प्राणत्यागाय तत्र निर्जने समायात्। सा पादपान्तरितं कान्तमलक्षयन्ती (स) उदश्रुलोचना देवीं गौरीं व्यजिज्ञपत्,—"देवि! तव प्रसादात् अस्मिन् जन्मनि यदि मया जीमूतवाहनः पतिः न लब्धः, तदा अन्यस्मिन्नपि जन्मनि यथा

सरभस गृहीत्वा चुम्बति इत्यर्थः, प्राच्यां दिशि चन्द्रोदये च सञ्जाते इति भावः।

(श) शयनस्थः,—शय्यायामवस्थितः, शय्यास्थोऽपि कामस्य हस्ते पतितः इति विरोधः, कामस्य वशीभूतः, कामपीडित इति विरोधपरिहारः; नूतनोद्भिन्नः,—अभिनवप्रकाशितः, रागः,—रक्तवर्णः, यस्य सः नूतनोद्भिन्नरागः,—प्रत्यग्रप्रकटितरक्तवर्णः, तथाभूतोऽपि, प्रोन्मिषन्ती—प्रकर्षेण प्रकाशमाना, पाण्डुरा—पाण्डुवर्णा, कान्तिः,—अङ्गलावण्यं यस्य सः प्रोन्मिषत्पाण्डुरकान्तिः,—प्रकाशमानपाण्डुच्छायः (विश०। बहुव्री०); रक्तोऽपि पाण्डुर इति विरोधः, नूतनोद्भिन्नः,—सद्यः सञ्जातः, रागः,—अनुरागः ("रागस्तु मात्सर्य्ये लोहितादिषु। क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च" इति मेदिनी) यस्य सः नूतनोद्भिन्नरागः,—अचिरोपजातप्रणयोऽपि (विश०। बहुव्री०), प्रोन्मिषत्पाण्डुरकान्तिः,—विरहपाण्डुदेहः इति परिहारः; लज्जया मूकः,—वचनरहितः लज्जामूकः,—लज्जया तूष्णीं स्थितः (विश०। तृया तत्पु०) तथाभूतोऽपि, कामजां पीडां वदन्—कथयन् इति विरोधः, वदन्—पाण्डुरकान्त्यादिना प्रकाशयन्निति तत्परीहारः।

(ष) पृष्ठतः,—पश्चाद्भागात्, पश्चादनुसृत्येत्यर्थः (ल्यब्लोपे पञ्चमी०। पञ्चम्या तसिल्)। समाश्वास्यते—सान्त्व्यते (सम्+आ+श्वस+णिच्+कर्म्मणि लट्-ते)।

(स) उत्—उद्गतम्, अश्रु उदश्रु, उदश्रुणी—निर्गच्छदश्रुणी, लोचने—

स एव मे पतिर्भूयात्, तथा प्रसादः क्रियताम्"। इत्युक्त्वा सा स्वोत्तरीयेण तत्क्षणम् अशोकतरुशाखायां, तस्या एव देव्या अग्रतः "हा नाथ! जीमूतवाहन! विश्वविख्यातकरुणेनापि त्वया कथमस्मि न (छ) परित्राता?" इत्युक्त्वा यावत् गले पाशं नियच्छति, तावत् इयमशरीरिणी भारती अन्तरीक्षात् समुद्भूत्,—"पुत्रि! मा साहसं कार्षीः, भाविविद्याधरचक्रवर्त्ती जीमूतवाहनस्ते पतिर्भविष्यति"। इति दैवीवाचमाकर्ण्य सवयस्यः जीमूतवाहनः हृष्टां तां प्रियामुपाजगाम। "एष ते देव्या वरः प्रदत्तः सत्यमेव" इति (ज) तन्मित्रे मुनिपुत्रे तां बालां जल्पति, जीमूतवाहनस्तत्तत् पेशलं ब्रुवन् स्वहस्तेनैव तस्याः कण्ठात् पाशममोचयत्।

ततोऽकस्मात् तत्र पुष्पाणि (ख) चिन्वती काऽपि सखी तं व्यापारमवलोकयन्ती हृष्टा समेत्य तां सव्रीड़या दृशा भुवं

नयने यस्याः सा उदश्रुलोचना—साश्रुनेत्रा (विश०। बहुव्री०)। लब्धः,—प्राप्तः, प्रागेव मनसा पतित्वेन वृतः इति भावः (लभ+कर्म्मणि क्तः), तव प्रसादात् लब्धः पतिः जीमूतवाहनः अस्मिन् जन्मनि यदि मे—मम न भूयात् इत्युत्तरेणान्वयः, लोकसाक्षिकपतिर्न भूयादित्यर्थः।

(छ) परित्राता—रक्षिता, जीवनपरित्यागात् न वारिता इत्यर्थः (परि+त्रै+क्तः, स्त्रियां-टाप्), अहमिति शेषः। पाशं—रज्जुं, नियच्छति—निबध्नाति (नि+यम+लट्-ति)। साहसं—बलात्कारकृतकार्य्यं, पूर्वापरमविविच्यैव हठकारितामित्यर्थः, यद्वा,—साहसं—दमम्, आत्मविनाशरूपं दण्डमित्यर्थः ("साहसन्तु बलात्कारकृतकार्य्ये दमेऽपि च" इति मेदिनी)। भावी—अचिरमेव भविष्यन्, विद्याधरेषु चक्रवर्त्ती—सार्वभौमः, आसमुद्रक्षितीशः इत्यर्थः, विद्याधरस्वामी चक्रवर्त्ती—सार्वभौमश्चेति वा ("चक्रवर्त्ती सार्वभौमः" इत्यमरः)।

(ज) तन्मित्रे—जीमूतवाहनस्य सुहृदि। जल्पति—कथयति (जल्प+शतृ सप्तम्)। पेशलं—रुचिरं, प्रियमित्यर्थः।

(ख) चिन्वती—संगृह्णती [चि+शतृ+"उगितश्च" (४।१।६ पा०) इति

लिखन्तीं जगाद,—"सखि! दिष्ट्या वर्द्धसे अभीष्टसिद्धित:। अद्यैव महाराजो विश्वावसुस्ते पिता मम सन्निधौ कुमारेण मित्रावसुना विज्ञप्त:.—'तात! जगन्मान्य: कल्पतरुप्रद: योऽयं विद्याधरेन्द्रतनयो जीमूतवाहन इहाऽऽगत:, स: अतिथित्वेन (ग) न: पूज्य:. तादृशश्चान्यो वर: न दृश्यते, तस्मादसौ मलयवत्या कन्यारत्नेन पूज्यताम'। 'तथा' इति राज्ञा (घ) अभिहिते, भ्राता ते मित्रावसु: अस्य महाभागस्य आश्रममद्यैव गत:। मन्ये, सद्य एव ते विवाहो भविता, तत् त्वं मन्दिरमागच्छ, एष च महाभाग: स्वमाश्रमं यातु"। इति तया सख्या अभिहिता सा शनै: प्रहृष्टा समुत्सुका च प्रायात्। जीमूतवाहनोऽपि शीघ्रमाश्रममाजगाम। आगत्य च मित्रावसो: यथाऽभीष्टं कार्य्यं श्रुत्वा अभिनन्द्य च स्वां जातिं पूर्ववृत्तान्तञ्च तस्मै समाचचक्षे। ततो मित्रावसु: प्रीत: परितुष्टयोस्तत्पित्रो-रावेद्य गत्वा स्वगृहं पितरौ तद्वार्त्तावर्णनेन समनन्दयत्, अनयच्च तस्मिन्नेव दिने स्वं गृहं जीमूतवाहनम्। ततश्च यथा-यथं महोत्सवं विधाय, तत्रैव शुभे दिवसे तस्य विद्याधरेन्द्रस्य मलयवत्याश्च विवाहविधिं निरवर्त्तयत्। ततो जीमूतवाहन:

ङीप्]। सव्रीडया—सलज्जया. दृशा उपलक्षिताम् (इत्थम्भूतलक्षणे ३या०)। लिखन्तीं—पादाङ्गुल्या रेखायुक्तां कुर्वतीमिति भाव: [विष०। लिख+शतृ+"उगितश्च" (४।१।६ पा०) इति ङीप्]। दिष्ट्या—हर्षसूचकमव्ययम् ("दिष्ट्या हर्षे मङ्गले च" इति मेदिनी), वर्द्धसे—अभ्युदयसे, सुखेन तिष्ठसीत्यर्थ: (वृध+लट्-से)।

(ग) न:.—अस्माकम्, अस्माभिरित्यर्थ: (कृद्योगे कर्त्तरि ६ष्ठी०)। वर:,—जामाता ("वरो जामातरि श्रेष्ठे देवतादेरभीप्सिते" इति शाश्वत:)।

(घ) अभिहिते—आहूते, समादरेण मित्रावसुवचसि अनुमोदिते इत्यर्थ: [भावे ७मी०। "अदन्तरोरुपसर्गवद्वृत्ति:" इति नियमात् अत्+धा+क्त "दधातेर्हि:" (७।४।४२ पा०) इति हि: "अयो होऽन्यतरस्याम्" ((८।४।६२ पा०) इति हस्य भत्वम्]।

सिद्धमनोरथः तया नवोढया मलयवत्या सह तत्रैव कियन्तं कालं तस्थौ ।

एकदा (ङ) कौतुकाचिप्तचित्तः स मित्रावसुना सह मलयाद्रिं भ्राम्यन् समुद्रवेलामाससाद । तत्र (च) अस्थिसङ्घातान् पतितान् दृष्ट्वा स तं मित्रावसुं "केषामेते अस्थिसङ्घाः प्राणिनाम् ?" इति पप्रच्छ । ततः श्यालको मित्रावसुः तं कारुणिकमब्रवीत्,—"सखे ! शृणु, अत्र वृत्तान्तं सङ्क्षेपेण ते कथयामि,—

पुरा (छ) नागमाता कद्रुः तार्क्ष्यमातरं सपत्नीं विनतां सकपटपणनिर्जितां दासीतामनैषीत् । तेनैव वैरेण तार्क्ष्यस्तां

(ङ) कौतुकेन—अपूर्वस्थलदर्शनकौतूहलेन, आचिप्तम्—आकृष्टं, चित्तं—मानसं यस्य सः कौतुकाचिप्तचित्तः,—कुतूहलाक्रान्तमनाः (विश० । बहुव्री० ) । समुद्रवेलां—समुद्रतीरम् ।

(च) अस्थिसङ्घातान्—अस्थिसमूहान् ।

(छ) नागमाता—सर्पजननी, कद्रुः,—तन्नाम्नी कश्यपपत्नी. तार्क्ष्यः,—गरुड़ः ("गरुत्मान् गरुडस्तार्क्ष्यः" इत्यमरः ), तस्य मातरं—जननीं तार्क्ष्यमातरं—गरुड़प्रसूं, समानः पतिः यस्याः सा तां सपत्नीं—समानपतिकां [ समान+पति+"नित्यं सपत्न्यादिषु" ( ४।१।३५ पा० ) इति नः, ततः निपातनात समानस्य स-भावः "ऋन्नेभ्यो ङीप्" ( ४।१।५ पा० ) इति ङीप् ]। पणेन—म्लहेन, निर्जितां—पराजितां पणनिर्जितां ( ३या तत्पु०), कपटेन—मिथ्याव्यवहारेण सह, पणनिर्जितां सकपटपणनिर्जितां—छलनाश्रयेण पणवशीकृतामित्यर्थः ( विश० ); पुरा किल कद्रुविनतयोः सपत्न्योः एवमालापः प्रक्रान्तः यत्, इन्द्रहयस्य खलु उच्चैःश्रवसः पुच्छबालाः वर्णेन कीदृशाः ? कद्रुस्तु तान् कृष्णवर्णानाह । विनता पुनः शुभ्रान् इति । एवं स्ववचनस्य याथार्थ्यसंस्थापनप्रवृत्तयोस्तयोर्महान् वादः समजायत । तत्ताभ्यामेवं पणः स्थापितः यत्, याऽत्र वादे पराजिता भविष्यति, सा अन्यस्याः आमरणान्तिकी दासी भविता । एवं समयं कृत्वा उभेऽपि स्वं स्वं मन्दिरमगच्छताम् । ततो रात्रौ कद्रुः पुत्रानाहूय सर्वं विज्ञाप्य एवमाह यत्, यूयमद्यैव उच्चैःश्रवसं गच्छत, स कृष्णपुच्छश्चेत् भवतावसंज्ञा, श्वेतपुच्छश्चेत् यूयं कृष्णवर्णाः तत्पुच्छलोमानि तथा

मातरं दास्यान्मोचयित्वाऽपि बलात् नागान् कद्रुपुत्रान् सदा पातालं प्रविश्य भक्षयितुं कांश्चित् जघान, कांश्चित् ममर्द च। इत्थं क्रमेण सर्वनागेषु व्यापन्नेषु सर्वक्षयमाशङ्क्य नागराट् वासुकिः प्रार्थनापूर्वं तार्क्ष्येण (ञ) समयं व्यधात्,—'खगेन्द्र! एकमेकं नागं ते आहारार्थं प्रत्यहं प्रेषयामि अत्र दक्षिणोदधेः पुलिने, त्वया तु पुनः कदाचन पातालं न प्रवेष्टव्यं, सर्वेषु नागेषु एकपदे निहतेषु तव कः स्वार्थः?'। इति नागराजेनोक्तो स गरुड़ः स्वार्थदर्शी 'तथा' इति प्रत्यपद्यत। तदा प्रभृति दिने दिने असौ गरुत्मान् वासुकिप्रेषितमेकैकं नागम् अस्मिन् अम्बुधेः पुलिने भुङ्क्ते, एतेन च तेषां भक्ष्यमाणानां नागानामस्थिसञ्चयाः कालक्रमात् गिरिशृङ्गनिभाः समपद्यन्त"।

इति मित्रावसोर्मुखादुपश्रुत्य (ट) सान्तर्दुःखः स जीमूतवाहनः निजगाद,—"सखे! शोच्यः स राजा वासुकिः, यः

---

ध्यामकृत, यथा तानि कृष्णवर्णानि प्रतीयन्ते। तेऽपि मातृनिदेशात्तथा अकुर्वन्। अश्वश्चेद्युक्ते सपत्न्यौ गत्वा तत्पुच्छलोमानि कृष्णान्येवापश्यताम्। एवं कपटपणनिर्जिता विनता कद्र्वाः दासीत्वमगात्। ततः गते च सुबहुतिथे काले विनतागर्भे गरुडः सञ्जातः। समतीतबाल्यावस्थश्च सः विदितमातृदास्यवृत्तान्तः नागानपृच्छत्, कीदृशेन समयेन मातरं मे दास्यान्मोचयितुमर्हथ यूयम्?। ते च अमृतमेव निष्क्रयं स्थिरीचक्रुः, गरुत्मानपि दिवं गत्वा देवराजं विजित्य अमृतमानीय तेभ्यो दत्त्वा मातरममोचयदिति पौराणिकी वार्त्ता।

(ञ) समयं—नियम ("समयः शपथे भाषासम्पदोः कालसंविदोः। सिद्धान्ताचारसङ्केतनियमावसरेषु च॥ क्रियाकारे निर्देशे च" इति मेदिनी)। दक्षिणोदधेः,—दक्षिणदिगवस्थितसमुद्रस्य, पुलिने—जलमध्यादुत्थिते द्वीपे ("तोयोत्थितं तत् पुलिनम्" इत्यमरः। तत् इति द्वीपमित्यर्थः। "पुलिनं द्वीपमुच्यते" इति त्रिकाण्डशेषश्च)। एकपदे—तत्काले, एकस्मिन्नेव काले इत्यर्थः ("एकपदं तत्काले नपुंसकम्" इति मेदिनी)।

(ट) अन्तः,—मनसि, दुःखं, तेन सह वर्त्तते इति सान्तर्दुःखः,—दुःखित-

स्वहस्तेन स्वाः प्रजा विद्विषे उपहारीकरोति। स (ञ) क्लीवः धृताऽऽननसहस्रोऽपि एकेन आननेनापि,—'मामग्रतः भुङ्क्ष्व गरुत्मन्!' इति भाषितुं नाशकत्? कथं वा निःसत्त्वः स्वकुलक्षये तार्क्ष्यमभ्यर्थयामास? कथं वा तार्क्ष्यः कश्यपसुतो वीरः कृष्णवाहनः ईदृशं पापं कुरुते? अहो! मोहस्य प्रागल्भ्यम्!!"। इति उक्त्वा "असारेण देहेन अद्य एकस्यापि नागस्य जीवितरक्षणं कुर्य्याम्" इति मनसि सङ्कल्प्य स्थिते तस्मिन् महासत्त्वे जीमूतवाहने, मित्रावसोः पितुराज्ञया कश्चित् (ट) प्रतीहारः तयोराह्वानार्थमाजगाम। स तु जीमूतवाहनः,—"व्रज त्वमग्रतः, अहं पश्चात् यास्यामि" इति तं मित्रावसुं (ठ) विसृज्य स्वयं तत्रास्थात्। तस्मिंश्च गते जीमूतवाहनः तत्र (ड) वाञ्छितार्थोन्मुखो भ्रमन् दूरात् करुणं

---

मानवः। शोच्यः,—शोकार्हः, दयायोग्यः इत्यर्थः, दुर्बलत्वात् हीनत्वाद्वा इति भावः। विद्विषे—शत्रवे (सम्प्र० ४र्थी०)।

(ञ) क्लीवः,—अविक्रमः, दुर्बल इत्यर्थः ("पापे क्लीव नपुंसके षण्ढेऽन्यवद्-विक्रमे" इति मेदिनी), धृतं—वोढम्, आननानां—मुखानां, सहस्रं येन सः धृता-ऽऽननसहस्रः,—सहस्रवदनः, वासुकेः सहस्रफणत्वादिति भावः (विश० । बहुव्री०)। अशकत्—अक्षमिष्ट [शक+लुङ्-द "पुषादि—" (३।१।५५ पा०) इति च्लेरङ्] निःसत्त्वः,—दुर्बलः। अभ्यर्थयामास—ययाचे (अभि+अर्थ+णिच्+लिट्-णल्)। मोहस्य—अविद्यायाः, मूढताया इति यावत् ("अविद्यामूर्च्छयोर्मोहः" इति शाश्वतः), प्रागल्भ्यम—औद्धत्यं, निर्भयत्वं वा।

(ट) प्रतीहारः,—द्वाःस्थः, द्वाररक्षक इत्यर्थः ("द्वारि द्वाःस्थे प्रतीहारः" इत्यमरः)।

(ठ) विसृज्य—त्यक्त्वा, सम्प्रेष्य इत्यर्थः (वि+सृज+ल्यप्)। अस्थात्—अवर्त्तिष्ट [स्था+लुङ्-द "गातिस्था—" (२।४।७७ पा०) इति सिचो लुक्]।

(ड) वाञ्छिताय—ईप्सिताय, अर्थाय—प्रयोजनाय, नागजीवनरक्षार्थं निज-जीवनदानरूपप्रयोजनसाधनायेत्यर्थः, यद्वा,—अर्थाय—वस्तुने, गरुडागमनरूपायेत्यर्थः

रुदितमशृणोत् । गत्वा च कियद्दूरम् उत्तुङ्गशिलातलसमीपगम् एकं दुःखितं युवानं सुन्दराकृतिं (ढ) राजभटेनेव पुंसा आनीय तत्क्षणं त्यक्तं, रुदतीं वृद्धां मातरं सानुनयं निवर्त्तयन्तं पुरुषमद्राक्षीत् ।

अथ "कोऽयम् ?" इति जिज्ञासुः स यावदत्र करुणार्द्रचेताः (ण) छन्नः शृण्वन् जीमूतवाहनस्तिष्ठति स्म, तावत् सा वृद्धा दुःखभारातिपीडिता स्त्री युवानं तम् अनुशोचितुं प्रावर्त्तत,— "हा शङ्खचूड ! हा दुःखशतलालित ! हा गुणिन् ! हा कुलैकतन्तो ! पुत्र ! क्वाहं त्वां पुनर्द्रक्ष्यामि ? वत्स ! त्वन्मुखचन्द्रे गते स तव पिता शोकान्धकारपतितः वृद्धः कथं जीविष्यति ? अर्ककरस्पर्शादपि यत्तव अङ्गं दूयेत, कथं तत् तार्क्ष्यभक्षणजां रुजां सोढुं शक्ष्यति ?। विस्तीर्णनागलोकेऽपि विधात्रा (त) नागाधिपेन च अभव्याया मे एकसुतस्त्वं विचिन्त्य किं लब्धः ?"। इति विलपन्तीं तां स युवा तनयः प्राब्रवीत्,—

("अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः), उन्मुखः,—उद्युक्तः । रुदितं—रोदनं ("क्तदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात्) ।

(ढ) राज्ञः,—नृपतेः, भटः,—योद्धा तेन राजभटेन—राजसैन्येनेत्यर्थः ।

(ण) छन्नः,—प्रच्छन्नः, गुप्तभावेनावस्थितः सन्नित्यर्थः (छद+क्तः) । युवानं तमिति (कर्म्मप्रवचने २या॰), अनु—लक्ष्यीकृत्य, शोचितुं—विलपितुं, हेतुभूतयुवोपलक्षितः शोक इत्यर्थः । कुलस्य—वंशस्य, एकः,—अद्वितीयः, तन्तुरिव तन्तुः,—सूत्रं, तत्सम्बोधने कुलैकतन्तो !—वंशावलम्बनस्वरूप इत्यर्थः, द्वितीयसन्तानाभावात् सूत्रमिव त्वामेव आश्रित्य वंशोऽस्माकमद्यापि तिष्ठति, तवोच्छेदात् वंशोऽयं निश्चयमेव पतिष्यतीति भावः । दूयेत—तप्येत, क्लिश्येत इति यावत् (दू+विङ्-ईत) ।

(त) नागाधिपेन—सर्पराजेन, वासुकिना इत्यर्थः, अभव्यायाः,—अमङ्गलायाः, दुर्लक्षणाया इत्यर्थः । विचिन्त्य—अपचित्य, उच्छिद्येत्यर्थः, (वि+चि+ल्यप्) ।

"मातः! दुःखार्त्तमपि मां किं भृशं (थ) दुःखयसि? गृहानेव निवर्त्तस्व, एष ते पश्चिमः प्रणामः, आगमनवेला चेयं गरुत्मतः"। तदाकर्ण्य,—"हा! हताऽस्मि, को मे पुत्रमिह (द) पास्यति" इति सा वृद्धा दिक्षु प्रक्षिप्ताऽऽर्त्तलोचना भृशं चक्रन्द।

एतत् सर्वमाकर्ण्य बोधिसत्त्वांशसम्भवः स जीमूतवाहनः दृष्ट्वा च सर्वं (ध) गाढ़करुणो व्यचिन्तयत्,—"हन्त! अयं शङ्खचूड़ो नाम नागः वासुकिना आहाराय तार्क्ष्याय प्रहितः, इयञ्चास्य जननी स्नेहेनान्वागता, एकसुता चेयं दुःखिनी नितान्तमार्त्ता विलपति, तदेनमेवमार्त्तम् एकान्तनाशिना देहेन यदि न रक्षामि साम्प्रतं, तन्मे निष्फलं जन्म धिक्!" इत्यालोच्य मुदा समुपगम्य जीमूतवाहनः वृद्धां तामुवाच,—"नागमातः! अहं ते पुत्रं रक्षामि, मा रुद"। इति श्रुत्वा सा वृद्धा गरुड़शङ्किनी सन्त्रस्ता,—"तार्क्ष्य! मां भुङ्क्ष्व मां भुङ्क्ष्व" इति जगाद। शङ्खचूड़ः प्राब्रवीत्,—"मातः! नैषः तार्क्ष्यः, मा

(थ) दुःखं—दुःखितं करोषि दुःखयसि—पीडयसि [दुःख+"तत्करोति तदाचष्टे" (ग०) इति णिच्+लट्-सिप्]. गृहान् ("गृहाः पुंसि च भूम्न्येव" इत्यमरात् पुंलिङ्गे बहुवचननिर्देशः)। पश्चिमः,—चरमः, शेषः इत्यर्थः।

(द) पास्यति—रक्षिष्यति (पाल रक्षणे इति पा+लृट्-स्यति)। प्रक्षिप्ते—निक्षिप्ते, सञ्चालिते इत्यर्थः, आर्त्ते—पीड़िते, कातरे इति यावत्, लोचने—नयने यया सा प्रक्षिप्ताऽऽर्त्तलोचना—रक्षकान्वेषणाय इतस्ततः प्रेरितव्याकुलनेत्रा इत्यर्थः (विशे०। बहुव्री०)।

(ध) गाढ़ा—अत्यर्था, करुणा—दया यस्य सः गाढ़करुणः,—अतिदयालुः [विशे०। बहुव्री०। "गोस्त्रियोरुपसर्जनस्य" (१।२।४८ पा०) इति ह्रस्वः]। एनं—शङ्खचूड़म्। एकान्तं नष्टुं शीलमस्येति तेन एकान्तनाशिना—अवश्यमेव क्षयिणेत्यर्थः [एकान्त+नश+"सुप्यजातौ णिनिस्ताच्छील्ये (३।२।७८ पा०) इति णिनिः]। मुदा—हर्षेण।

वासं कार्षीः, क्वायं चन्द्र इव (न) अन्तरिन्द्रियमाह्लादयति ! क्व चासौ तार्क्ष्यः भयमुत्पादयति !" । इति शङ्खचूड़ेनोक्तो जीमूतवाहनोऽब्रवीत्,—(प) "अम्ब ! अहं विद्याधरः ते सुतं रक्षितुमायातः ; स्वमेतत् शरीरं वस्त्रच्छन्नं गरुत्मते क्षुधिताय दास्यामि, त्वमेतं सुतं नीत्वा गृहं व्रज" । तदाकर्ण्य वृद्धा अवदत्,—(फ) "मा मैवं, त्वं मम अधिकः पुत्रः, यस्य ईदृशेषु अस्मासु ईदृशी कृपालुता" । एतदाकर्ण्य स जीमूतवाहनः पुनरब्रवीत्,—"मातः ! न त्वमस्य मे मनोरथस्य भङ्गं कर्त्तुमर्हसि" । (ब) आग्रहेण एवं ब्रुवन्तं तं शङ्खचूड़ः अवादीत्,—"महासत्त्व ! त्वया सत्यं कृपालुता दर्शिता, नाहन्तु त्वच्छरीरेण स्वशरीरं रक्षितुमिच्छामि, रत्नव्ययेन को हि पाषाणं रक्षति ? मादृशैः स्वमात्रानुकम्पिभिर्विश्वम् आपूर्णं, येषां जगदनुकम्प्यं, तादृशा भवादृशा अतिविरलाः ।

(न) अन्तरिन्द्रियम्—अन्तःकरणं, मन इति यावत् ।

(प) अम्ब !—मातः ! [ "अम्बार्थनद्योर्ह्रस्वः" (७।३।१०७ पा०) इति सम्बोधने अम्बा-शब्दस्य ह्रस्वः ] । स्वं—निजम् ।

(फ) मा मैवम् इत्थम् वद इति शेषः । अधिकः,—शङ्खचूड़ात् गरीयान्, ज्येष्ठ इति यावत् ।

(ब) आग्रहेण—आसक्त्या, ऐकान्तिकाभिनिवेशेनेत्यर्थः ( "विनाऽपि तद्योगं तृतीया" इति नियमात् सहशब्दाभावेऽपि तदर्थस्य गम्यमानतया तृ्या० । "आग्रहोऽनुग्रहासक्त्योराक्रमे ग्रहणेऽपि च" इति मेदिनी ) । वयमिव दृश्यामहे इति तैः मादृशैः,—मत्सदृशैः [ अस्मद्+दृश+"त्यदादिषु" (३।२।६० पा०) इति कञ् "त्वमावेकवचने" (७।२।९७ पा०) इति अस्मदो मादेशः "आसर्वनाम्नः" (६।३।९१ पा०) इति आकारोऽन्तादेशः ], स्वमात्रम्—आत्ममात्रं, केवलं निजमेवेत्यर्थः, अनुकम्पन्ते—दयन्ते इति तैः स्वमात्रानुकम्पिभिः,—निजमात्रकृपालुभिः, केवलमात्मजीवनरक्षार्थं यतमानैरित्यर्थः, स्वार्थतत्परैरिति भावः ( अनु+कम्प+ग्रहादित्वात् णिनिः ) । येषां—यैरित्यर्थः [ "कृत्यानां कर्त्तरि वा" (२।३।७१ पा०) इति-कर्त्तरि

हे साधो ! अहं कलङ्कः (भ) शशिबिम्बमिव शङ्खपालकुलं शुचि कलङ्कयितुं न च शक्ष्यामि"। इति तं प्रतिषिध्यैव शङ्खचूड़ः मातरं पुनर्जगाद,—"अम्ब ! अस्मात (म) कान्तारात् निवर्त्तस्व, अत्रैतत् नागानामसृग्भिरुक्षितं कृतान्तलीला-पर्य्यन्तरौद्रं वध्यशिलातलं किं न पश्यसि ? अहमिदानीम् अब्धितटं गत्वा गोकर्णाऽऽख्यमीश्वरं नत्वा द्रुतमागच्छामि, यावत तार्क्ष्यो नागच्छति" इत्युक्त्वा मातरम् आपृच्छ्य च स शङ्खचूडो गोकर्णप्रणामार्थमगात्।

"अस्मिंस्तेन समये तार्क्ष्य आगच्छेत्, तदा मे मनोरथः सिद्धः स्यात्" इति जीमूतवाहनो यावत् मनस्यकरोत्, तावत्

---

६ष्ठी० ] अनुकम्प्य—दयनीयम् (अनु + कम्प + ण्यत)। (तादृशाः भवादृशाः इति मादृशा' इतिवत साध्यम्)

(भ) शशिबिम्बं—चन्द्रमण्डलं ("बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमर'), शङ्खपालः,—अष्टनागनायकेषु अन्यतमो नागविशेष', तथा च,—"अनन्तो वासुकिः पद्मो महापद्मोऽपि तक्षकः। कर्कोटः कुलिकः शङ्ख इत्यष्टौ नागनायकाः"॥ अपीक्तः शङ्ख एव शङ्खपाल, तथा च,—"नागोदयं प्रवक्ष्यामि ईशानेन तु भाषितम्। ब्रह्मणा हि पुरा सृष्टा ह्यष्टौ नागास्त्वनेकशः॥ अनन्तं भास्करं विद्यात सोमं विद्यात्तु वासुकिम। तक्षकं भूमिपुत्रन्तु कर्कोटञ्च बुधं विदु'॥ पद्म बृहस्पतिं विन्द्यात् महापद्मञ्च भार्गवम। कुलिकः शङ्खपालश्च शार्ब्बतौ तु शनैश्चर." ॥ इति। असौ च शङ्खचूडस्य पूर्वपुरुष इति ज्ञातव्यम; तस्य कुलं—वंशं शङ्खपालकुल—शङ्ख-पालान्वयं, शुचि—पवित्रं, निष्कलङ्कमिति यावत्।

(म) कान्तारात—दुर्गमवर्त्मनः, विपत्सङ्कुलस्थानादिति भाव: ("कान्तारोऽस्त्री महारण्ये बिले दुर्गमवर्त्मनि। पुंसि व्याधिक्षुभेदे" इति मेदिनी)। असृग्भिः,—रक्तैः, उक्षितं—सिक्तम (उक्ष+क्तः), कृतान्तलीलया—यमविलसितेन, इतस्ततः पर्य्यस्त-मृताक्ष्यिदर्शनीयुद्भयेति भाव', पर्य्यन्त—समीपवर्त्तिप्रदेशोऽपि इत्यर्थः, रौद्रं—भीषणं, घोरदर्शनमित्यर्थः, यस्य तादृशं कृतान्तलीलापर्य्यन्तरौद्रं—भीषणं कृत्योर्लीलाक्षेत्रमिति यावत् (विश०। बहुव्री०)। आपृच्छ्य—जिज्ञासित्वा इत्यर्थः (आ + प्रच्छ + ल्यप् सम्प्रसारणञ्च)।

(य) आसन्नपक्षीन्द्रस्य पक्षपवनान्दोलितान् निवारणपरानिव तरून् वीक्ष्य, 'गरुड़ाऽऽगमनवेलेयमिति मत्वा जीमूतवाहनः परार्थप्राणदित्सया तां बध्यशिलामारुरोह। आरूढ़मेव तं महासत्त्वं गरुड़ः सहसा निपत्य तस्मात् शिलातलात् चञ्च्वा जहार, (र) जवाच्च स्रुतशोणितधारम् उत्खातशिरोरत्नं तं नीत्वा मलयाद्रेः शृङ्गे भक्षयितुमारेभे। "एवमेव (ल) प्रतिजन्म मे परार्थो देहः स्यात्, परोपकृतिरहितौ स्वर्गमोक्षौ मा भूताम्" इति तार्क्ष्येण भक्ष्यमाणस्य तस्यानुध्यायतः विद्याधरेन्द्रस्योपरि नभस्तलात् पुष्पवृष्टिः पपात।

अत्रान्तरे स रक्तधाराक्तशिरोमणिः तत्पत्न्या मलयवत्याः

(य) आसन्नः,—समीपवर्तीत्यर्थः, पक्षीन्द्रः,—गरुड़ः तस्य आसन्नपक्षीन्द्रस्य—आगतप्रायगरुड़स्य (कर्मधा०), पक्षपवनेन—गरुड़स्य पक्षवेगोत्थवायुना, आन्दोलितान्—आलोडितान् पक्षपवनान्दोलितान्—पक्षवाताऽऽलोड़ितान् (३या तत्पु०), निवारणपरान्—प्रतिषेधतत्परान्, माऽत्रागच्छ, भूमिमिमां जीवशोणितेन मा दूषय इति पवनान्दोलितशाखाप्रशाखादिरूपहस्ताद्यवयवसञ्चालनेन समुपागच्छन्तं गरुड़ं निषेधयत इव स्थितानित्यर्थः (विश०)। दातुमिच्छा दित्सा [दा+सन् "सनि मीमाघुरभलभ—" (७।४।५४ पा०) इति अच इस् "अत्र लोपोऽभ्यासस्य" (७।४।५८ पा०) इति अभ्यासलोपः "अ प्रत्ययात्" (३।३।१०२ पा०) इति स्त्रियामकारप्रत्ययः, ततः स्त्रियां टाप्], परार्थप्राणदित्सया—अन्यस्य जीवनरक्षार्थं निजप्राणदानेच्छया।

(र) जवात्—वेगात, स्रुता—क्षरिता, शोणितधारा—रक्तसन्ततिः यस्य तं स्रुतशोणितधारं—निर्गलितरक्तप्रवाहं (विश०। बहुव्री०), उत्खातम्—उत्पाटितम्, उत्पतितमिति यावत्, शिरोरत्नं—चूडामणिः यस्य तम् उत्खातशिरोरत्नं—प्रभ्रष्टमुकुटस्थप्रधानमणिविशिष्टं (विश०। बहुव्री०)।

(ल) जन्मनि जन्मनि प्रतिजन्म—प्रत्येकजन्मनि (वीप्सायामव्ययीभावः)। मा भूतां—न भवतां ["माङि लुङ्" (३।३।१७५ पा०) इति भू+लुङ्-तां "न माङ्योगे" (६।४।७४ पा०) इति अडागमप्रतिषेधः]। अनुध्यायतः,—चिन्तयतः (विश०। अनु+ध्यै+शतृ)।

पुरोऽपतत्। तत् चूडारत्नं दृष्ट्वा सुविह्वला (व) श्वशुरयो-रन्तिकमस्था सास्र ताभ्यामदर्शयत्। तौ च दम्पती सूनोस्तं चूडामणिं विलोक्य सहसा "किमेतत् ?" इति (श) सम्भ्रान्तौ बभूवतुः। ततः (ष) स्वविद्याऽनुभावात् यथावृत्तमवेत्य राजा जीमूतकेतुः राज्ञी च वध्वा मलयवत्या सह द्रुतं तत्र यावत् गन्तुं प्रावर्त्तेतां, तावत् स शङ्खचूडस्तं गोकर्णमिव प्रणम्य तत्राऽऽययौ, ददर्श च तत् शिलातलं रुधिरार्द्रम्। दृष्ट्वैव "हा हतोऽस्मि महापापः, ध्रुवं तेन महात्मना कृपालुना मत्कृते गरुडाय आत्मा दत्तः, तदन्वेषामि स महात्मा शत्रुणा क्व नीतः, तच्चेत् जीवन्तमाप्नुयां तदा अयशःपङ्के न (स) मज्जेयम्" इति उदश्रुर्वदन् स निरन्तरं सान्द्रां पतितां रक्तधारामनुसरन् ययौ।

अत्रान्तरे तं जीमूतवाहनं भक्षयन् गरुडस्तं हृष्टं विलोक्य व्यचिन्तयत्,—"अहो! (ह) अपूर्वः कोऽपि अयं महासत्त्वः

(व) श्वश्रूश्च श्वशुरश्च तयोः. श्वशुरयोः,—श्वश्रूश्वशुरयोः ["श्वशुरः श्वश्र्वा" (१।२।७१ पा०) इति एकशेषः]। अस्रम्—नेत्राम्बुना सह सास्र—सजलनेत्रं, सरोदनमिति यावत् ("अस्रु नेत्राम्बु रोदनञ्चास्रमश्रु च" इत्यमरः), तद्यथा तथा (क्रिया विश०)।

(श) सम्भ्रान्तौ—ससाध्वसौ, सम्भ्रमौ इत्यर्थः ("सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी)।

(ष) स्वविद्याऽनुभावात्—निजज्ञानप्रभावात्, विद्याधराणां देवयोनित्वात् भूतभविष्यद्वर्त्तमानज्ञानानुकूलशक्तिविशेषादित्यर्थः, वृत्तम्—अतीतम्, अतीतव्यापारमित्यर्थः, तदनतिक्रम्य इति यथावृत्त—सङ्घटितव्यापारमित्यर्थः (अनतिक्रमार्थे अव्ययीभावः)। प्रावर्त्तेतां—प्रारभेतां (प्र+वृत+लङ्-आताम्)।

(स) मज्जेयं—निमग्नीभवेयं (मस्ज+लिङ्-याम्)। उत्—उद्गतम्, अश्रु—नेत्रजलं यस्य सः उदश्रु,—सजलचक्षुरित्यर्थः (विश०। बहुव्री०)। सान्द्रां—घनाम्।

(ह) अपूर्वः,—अदृष्टपूर्वः, विस्मयजनकचरित्र इत्यर्थः। महासत्त्वः,—महात्मा।

मया भक्ष्यमाणोऽपि प्रहृष्यति, न तु प्राणैर्वियुज्यते, बिभर्त्ति च लुप्तशेषेऽपि गात्रे रोमाञ्चकञ्चुकम् । किञ्चास्य (क) उपकारिण्येव दृष्टिर्मयि प्रसीदति ; तदेष: न नाग:, कोऽप्येष महापुरुष:, तदेनं पृच्छामि, न पुनर्भक्षयामि" । इति ( ख ) विमृषन्तं तं तार्क्ष्यं जीमूतवाहन: प्राह,—"पक्षिराज ! किं निवृत्तोऽसि ? अद्यापि मे देहे मांसशोणितं वर्त्तते, न च ते तृप्तिं पश्यामि, तत् पुनर्भुङ्क्ष्व" । एतदतिविचित्रमाकर्ण्य स पक्षिराट् तं पप्रच्छ,—"महात्मन् ! नैव त्वं नाग:, तत् ब्रूहि, को भवान् ?" इति । "नाग एवास्मि, कोऽयं ते प्रश्न: ? (ग) प्रक्रान्तमनुसर, को हि बालिश: प्रस्तुतार्थविरुद्धमाचरेत् ?" ।

इत्थं जीमूतवाहने तार्क्ष्यं ( घ ) प्रेरयति, समुपेत्य स शङ्खचूड: दूरात् तमुवाच,—"विनतानन्दन ! मा महापापं साहसञ्च कृथा:, कोऽयं ते भ्रम: ? न ह्येष नाग:, नागोऽह-

---

अधिकं लुप्तं, किञ्चित् शेष: तस्मिन् लुप्तशेषे—नष्टावशिष्टे ( क्तान्तानामसवत स० ), लुप्तात् शेष:, लुप्तस्य शेष इति वा ( ५मी तत्पु० ६ष्ठी तत्पु० वा ) । कञ्चुकमिव रोमाञ्च रोमाञ्चकञ्चुक—परजीवनरक्षणामोदात् निर्म्मोकवत् प्रोद्भिन्नपुलकामित्यर्थ:, रोमाञ्चस्य कञ्चुकसाधर्म्यन्तु खरस्पर्शत्वरेखावत्त्वादिनाऽवगन्तव्यम् ।

( क ) उपकारिणि—उपकारकर्त्तरि, गरुड़स्योपकारकत्वन्तु निजजीवन-विसर्ज्जनेन परजीवनरक्षणरूपस्य कामस्य पूरकत्वादित्यवगन्तव्यम् ।

( ख ) विमृषन्त—विचारयन्तं ( वि+मृष+शतृ ) । तृप्ति—सौहित्यम्, उदर-पूर्त्तिमित्यर्थ:, उदरस्य अतिशयेन पूरणात् भक्षणेच्छातो विरतिमिति यावत् ( "सौहित्यं तर्पणं तृप्ति:" इत्यमर: ) ।

( ग ) प्रक्रान्त—प्रस्तुतम्, आरब्धमित्यर्थ:, अनुसर—अनुविधेहि, आरब्धं भोजनं निःशेषेण समापयेत्यर्थ: । बालिश:,—मूर्ख: ( "अज्ञे मूढ़यथाजातमूर्खवैधेय-बालिशा:" इत्यमर: ) ।

( घ ) प्रेरयति—चोदयति, भक्षणार्थं प्रवर्त्तयति इत्यर्थ: ( प्र+ईर+णिच् +शतृ ) । साहसम्—अविमृश्यकारित्वं दुष्करं कर्म्म वा ( "साहसन्तु दमं दुष्कर-

मस्मि"। इत्युक्त्वा द्रुतमेत्य (ङ) तयोर्मध्ये विभ्रान्तं तार्क्ष्यं पुनः शङ्खचूड़ोऽब्रवीत्,—"गरुत्मन्! कस्ते भ्रमः? मे फणां द्वे च जिह्वे न पश्यसि? किञ्चास्य सौम्यामाकृतिं न पश्यसि?" इत्थं शङ्खचूड़े वदति सा भार्य्या मलयवती पितरौ च सर्व्वेऽत्र सत्वरम् आययुः। तञ्च विलुप्ताङ्गं पुत्रं दृष्ट्वाऽस्य पितरौ,—"हा पुत्र! हा जीमूतवाहन! हा कारुणिक! हा वत्स! हा परार्थप्रदत्तजीवित! हा वैनतेय! त्वया कथमिदमविमृश्य समाचरितम्?" इति विलपन्तौ भृशं रुरुदतुः। तत् श्रुत्वा तार्क्ष्यो भृशमनुतप्तो व्यचिन्तयत्,—"हा! कथं बोधिसत्त्वांशसम्भवो मया मोहात् भक्षितः? सोऽयं जीमूतवाहनः परार्थप्राणदाता, यस्य कृत्स्नेऽत्र जगति कीर्त्तिघोषणा भ्रमति!! तदस्मिन् मृते पापस्य मे अग्निप्रवेशनं युक्तम्, अधर्मविषवृक्षस्य स्वादु

---

कर्म्मणि। "अविमृश्यकृती धार्ष्ट्ये" इति हैमः), मा कृथाः,—न कुरु [कृ+"माङि लुङ्" (३।३।१७५ पा०) इति लुङ्-थास् "न माङ्योगे" (६।४।७४ पा०) इत्यडागमप्रतिषेधः]।

(ङ) तयोः,—गरुड़जीमूतवाहनयोः। विभ्रान्तं—संशयं गतम्, अयं नागो वा अन्यो वा इति निर्णयाक्षमतया सान्देहमित्यर्थः (वि+भ्रम+क्तः। विण०। "अथ विभ्रमः। शोभायां संशये हावे" इति हैमः)। फणं—फणां, द्वे जिह्वे—द्विधा विभक्ता जिह्वा इत्यर्थः, सर्पाणां द्विजिह्वत्वात्, तथा च,—"अथ सर्पानुवाचेदं सर्व्वान् परमहृष्टवत्। इदमानीतममृतं निक्षिपामि कुशेषु वः॥ स्नाता मङ्गलसंयुक्तास्ततः प्राश्नीत पन्नगाः!। भवद्भिरिदमासीनैः यदुक्तं तद्वचस्तदा॥ अदासी चैव मातेयमद्य प्रभृति चास्तु मे। यथोक्तं भवतामेतत् वचो मे प्रतिपादितम्॥ ततः स्नातुं गताः सर्पाः प्रत्युक्त्वा तं तथेत्युत। शक्रोऽप्यमृतमाक्षिप्य जगाम त्रिदिवं पुनः॥ अथाऽऽगतास्तमुद्देशं सर्पाः सुधार्थिनस्तदा। स्नाताश्च कृतजप्याश्च प्रहृष्टाः कृतमङ्गलाः॥ यत्रैतदमृतञ्चापि स्थापितं कुशसंस्तरे। तद्विज्ञाय हृतं सर्पाः प्रतिमायाः कृतञ्च तत्॥ सोमस्थानमिदञ्चेति दर्भांस्ते लिलिहुस्तदा। ततो द्विधा कृता जिह्वा सर्पाणां तेन कर्म्मणा॥ अभवंश्चामृतस्पर्शात् दर्भास्तेऽथ पवित्रिणः। एवं तदमृतं तेन हृतमाहृतमेव च। द्विजिह्वाश्च कृताः सर्पाः गरुड़ेन महात्मना"॥ इति भा० आ० ३४ अ प०)।

फलं किं पच्यते ?" इत्येवं चिन्ताकुले तार्क्ष्ये स जीमूतवाहनः (च) बन्धून् समागतान् दृष्ट्वा निपत्य व्रणव्यथया पञ्चत्वमवाप।

ततस्तत्र शोकदीनयोस्तत्पित्रोः "हा हा" इति विलपतोः, शङ्खचूडे च आत्मानं निन्दति, सा मलयवती (छ) अश्रुगद्गदं नभो दृष्ट्वा पूर्वप्रसन्नां तां वरदां देवीमम्बिकामिति उपालभत,—"मातः! 'विद्याधरचक्रवर्त्ती ते पतिर्भविता' इत्यहं त्वया आदिष्टा, तन्मम भाग्येन त्वं मिथ्यावादिनी जाताऽसि"। इत्युक्तवत्यां तस्यां सा गौरी प्रत्यक्षीभूय,—"पुत्रि! न मे वचो (ज) मृषा" इत्युक्त्वा कमण्डलोरमृतेन तं जीमूतवाहनं सिषेच; तेन च सः अक्षतसर्वाङ्गः पूर्वाधिकतरद्युतिर्जीवन् सद्यः समुत्तस्थौ। अथ सा देवी सर्वेषु प्रणमत्सु, उत्थितं प्रणतं तं जीमूतवाहनं प्राब्रवीत्,—"पुत्र! तुष्टाऽस्मि ते अनेन देहदानेन, तदेषाऽहं निजेन पाणिना विद्याधरचक्रवर्त्तिपदे त्वामभिषिञ्चामि" एवं वदन्ती देवी कलसाम्बुभिः तं जीमूतवाहनमभ्यषिञ्चत्, (झ) तेन च पूजिता तत्क्षणात् तिरोदधे।

(च) बन्धून्—पित्रादिस्वजनान् ("सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः)। पञ्चत्वं—क्षित्यप्तेजोमरुद्व्योमरूपाणां पञ्चमहाभूतानां भावः तत् पञ्चत्वं—मृत्युम्।

(छ) अश्रुणा—अश्रुपरोधेन हेतुना, गद्गदम्—अस्पष्टाक्षरम् अश्रुगद्गदं—बाष्पावरुद्धकण्ठं यथा तथेत्यर्थः (क्रिया विश०), नभः,—अन्तरीक्षं, दृष्ट्वा—अवलोक्य, आकाशं लक्षीकृत्येत्यर्थः। इति—वक्ष्यमाणप्रकारेण, उपालभत—अदूषयत्, तिरस्कारेत्यर्थः (उप+आ+लभ+लङ्-त)।

(ज) मृषा—मिथ्या (अव्य०। "मृषा मिथ्या च वितथे" इत्यमरः)। अमृतेन—जलेन, अमृतवत् तज्जलस्य मृतसञ्जीवकत्वात् अमृतसदृशेनेति भावः ("सलिलं कमलं जलम्। पयः कीलालममृतम्" इत्यमरः)।

(झ) तेन—जीमूतवाहनेन। तिरोदधे—अन्तर्दधे, अन्तर्हितवतीत्यर्थः [तिरस्+धा+लिट्-ए "तिरोऽन्तर्धौ" (१।४।७१ पा०) इति समासः]।

अस्मिंश्च समये नभसः दिव्याः कुसुमवृष्टयः (ञ) पेतुः, नेदुश्च सहर्षं दिवि देवदुन्दुभयः।

अथ गरुत्मान् विनतस्तं जीमूतवाहनमुवाच,—"चक्रवर्त्तिन्! अहं (ट) पुरुषातिशये त्वयि अतिप्रीतोऽस्मि, येन अपूर्वोदारमतिना त्वया त्रिजगत्कौतुकावहं ब्रह्माण्डभित्तिलिखितम् इदं चित्रं कृतम्; तन्मामाज्ञापय, मत्तश्चाभिमतं वरं वृणीष्व"। इतिवादिनं गरुडं स महासत्त्वः प्रावदत्,—गरुत्मन्! सानुतापेन त्वया पुनर्नागा न भक्ष्याः, ये च (ठ) अस्थिशेषाः पूर्वं त्वया भक्षिताः, ते जीवन्तु" इति। "एवमस्तु, न भोक्ष्येऽहमतः परं नागान्, ये च प्राग्भुक्ताः, ते च जीवन्तु" इति तेन वरे दत्ते, ये नागा अस्थिशेषाः पूर्वभक्षिताः, ते च सर्वे सद्यः समुत्तस्थुः। ततः सर्वेषु सुरनागमुनिगणेषु सानन्देषु मिलितेषु स मलयाचलः (ड) लोकत्रयभूम्याख्यां लेभे। तस्मिंश्च काले गौर्य्याः प्रसादात् सर्वे विद्या-

(ञ) पेतुः,—अभ्रंशिरे [ पत+लिट्-उस् "अत एकहल्मध्ये—" (६।४।१२० पा०) इति अभ्यासलोपः अकारस्य च एकारः], नेदुः,—दध्वनुः (नद+लिट्-उस्, पूर्ववद्रूपसिद्धिः)।

(ट) पुरुषेषु अतिशयः,—उत्कर्षवान् तस्मिन् पुरुषातिशये—पुरुषश्रेष्ठे (७मी तत्पु०)। अपूर्वा—अदृष्टाश्रुतपूर्वेत्यर्थः, असमानेति यावत्, उदारा—महती, मतिः,—इच्छा ("उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत्"। "मतिः स्त्रीच्छाधियोः स्मृतौ" इत्युभयत्रापि मेदिनी) यस्य तेन अपूर्वोदारमतिना—अन्यदुर्लभमहदाशयेन (विश०। बहुव्री०)। ब्रह्माण्डं—जगत्त्रितयमेव, भित्तिः,—कुड्यं, चित्रविन्यासार्थं इति भावः, तत्र लिखितं—चित्रितं ब्रह्माण्डभित्तिलिखितं—जगत्पटे सुदृढमङ्कितं (विश०। ७मी तत्पु०), ब्रह्माण्डभित्तिलिखितत्वात् आकल्पस्थायि इति भावः। आज्ञापय—आदिश, किन्ते प्रियं करोमीति शेषः।

(ठ) अस्थिशेषाः,—अस्थिमात्रावशिष्टाः, मृता इति भावः।

(ड) लोकत्रयस्य—भुवनत्रयस्य, दिवनरनागलोकस्य स्वर्गमर्त्यरसातललोकस्येत्यर्थः,

धुरीश्वराः तमद्भुतं (ढ) जीमूतवाहनोदन्तं विविदुः। ततश्च ते सर्वे समेत्य चरणावनताः तं (ण) मुदितबन्धुसुहृत्समेतं गौरीस्वकरकृतमहाभिषेकं हिमाद्रिं निन्युः। तत्र गत्वा स जीमूतवाहनः पित्रा मात्रा भार्य्यया मलयवत्या मित्रावसुना लोकोत्तरचरितेन शङ्खचूडेन च समं बहुरत्नशोभितां विद्याधरचक्रवर्त्तितां भुञ्जानः सुखमध्युवास।

इति महतीं विचित्रां कथामाख्याय वेतालः पर्य्यपृच्छत्,—"राजन्! ब्रूहि, शङ्खचूड-जीमूतवाहनयोः कोऽधिकः (त) सत्त्वेन? यदि जानन्नपि न वदसि, तदा पूर्व्वमेव दत्तः शापः सम्भविता" इति। राजा अब्रवीत्,—(थ) "बहुजन्मसिद्धमेतत् जीमूतवाहनस्य न चित्रं, श्लाघ्यस्त्वत्र शङ्खचूडः, यो मरणादुत्तीर्णोऽपि अन्यं प्राप्य सुदूरं गताय शत्रवे तार्क्ष्याय पश्चात् धावन् स्वं देहमुपानयत्"। एतत्तस्य नृपस्य वचनं

---

भूमिः,—स्थानं, सम्मेलनस्थानमिति यावत्, सुरनागमुनीनामिकत्र मिलनादिति भावः ("भूमिः क्षितौ स्थानमात्रे" इति हेमः), लोकत्रयभूमिः इति आख्या—संज्ञा लोकत्रयभूम्याख्यः—त्रिजगदास्पदाभिधानम्।

(ढ) जीमूतवाहनस्य उदन्तं—वृत्तान्तं ("वार्त्ता प्रवृत्तिर्वृत्तान्तः उदन्तः स्यात्" इत्यमरः), विविदुः,—अवजग्मुः, ज्ञातवन्तः इत्यर्थः (विद + लिट्-उस्)।

(ण) मुदितैः,—पुनर्जीवनप्राप्त्या हृष्टैः, बन्धुभिः,—पित्रादिभिः स्वजनैः, सुहृद्भिः,—मित्रैश्च, समेतं—सङ्गतं मुदितबन्धुसुहृत्समेतम्—आनन्दितस्वजनसखिसहितम् (विश०। ३या तत्पु०)।

(त) सत्त्वेन—सत्त्वगुणेन, स्वभावेन वा, चित्तेन वा, असुभिर्वा, अधिकः,—श्रेष्ठः, अनयोर्मध्ये कः सत्त्वगुणाधिकः, उन्नतस्वभावो वा, उदारमना वा महाप्राणो वा इत्यर्थः।

(थ) बहुभिः जन्मभिः,—पूर्व्वपूर्व्वजन्मभिः, सिद्धं—निष्पन्नम्, आचरितमित्यर्थः, बहुजन्मसिद्धं—जन्मजन्मान्तरीयसंस्कारवशात् अधिगतमित्यर्थः, एतत्—सत्त्वमित्यर्थः। चित्रम्—आश्चर्य्यं, सहजसंस्कारत्वादिति भावः।

निशम्य वेतालः शिंशपाऽन्तिकमगात् । राजाऽपि तमानेतुं पुनः प्रययौ ।

---

## अथ सप्तदशकथा ।

अथ राजा पुनः शिंशपामूलमुपेत्य वेतालञ्च तं तथैव स्कन्धमारोप्य चलितुमुपचक्रमे । वेतालश्च तं पुनरब्रवीत्,— "राजन् ! श्रमविनोदाय पुनरहमेकामाख्यायिकां कथयामि, शृणु,—

पुरा गङ्गाकूले कनकपुरं नाम पुरमेकमासीत्, यस्मिन् (क) धर्मस्य एकोऽपि पादः कलिना न विहतः । तत्राभवत् यशोधराऽऽख्यो (ख) यथार्थनामा महीपतिः, यो हि धीरो वेलाऽद्रिरिव क्षितिं विप्लवात् ररक्ष । यश्च जगदाह्लादकः

---

(क) धर्मस्य—पूर्णचतुष्पादधर्मस्येत्यर्थः । पादः,—चरणः, चतुर्थांश इति यावत् ("पादस्तुरीयो भागः स्यात्" इत्यमर.), कलिना—तदाख्यचतुर्थयुगेन, विहतः,—विनाशितः, सत्ये चतुष्पादः, त्रेतायां त्रिपादः, द्वापरे द्विपाद्‌धर्मः तस्थौ, कलौ तु एकपादः धर्म अस्ति पादत्रयञ्चान्यत तेनैव पापेन भग्नं, कनकपुरे तु राज्ञो यशोधरस्य पुण्यशासनप्रभावात कलिना धर्मस्य एकोऽपि पादः नैव भङ्क्तुं शेके, सत्ययुगवत् पूर्णचतुष्पाद एव धर्मः विद्यते, राजाऽयं महाप्रभावः पुण्यवांश्च इति फलितम् ।

(ख) यथार्थनामा—यशोधर इति सार्थकनामा, महायशा इति यावत् । वेला—सीमा, सीमारूप इत्यर्थः ("वेला काले च सीमायामब्धेः कूलविकारयोः" इति मेदिनी), तादृशः अद्रिः वेलाऽद्रि,—मर्य्यादापर्वतः, मर्य्यादापर्वतास्तु ब्रह्माण्ड-पुराणे प्रदर्शिताः ; यथा,—"जाठरो देवकूटश्च पूर्वस्यान्दिशि पर्वतौ । तौ दक्षिणो-त्तरायामावानीलनिषधायतौ ॥ कैलासो हिमवांश्चैव दक्षिणे वर्षपर्वतौ । पूर्वपश्चा-यतावेतावर्णवान्तर्व्यवस्थितौ ॥ निषधः पारियात्रश्च पश्चिमौ वर्षपर्वतौ । तौ दक्षिणो-

(ग) चण्डप्रतापोऽखण्डमण्डलश्च विधिना चन्द्रार्कावेकीकृत्येव विनिर्मितः। (घ) जनता यं पापभीरुं यशोलुब्धं परस्त्रीषु षण्डं शौर्य्यौदार्य्यमयं विदन्ति। तस्य राज्ञः पुरे कश्चित् महावणिक् प्रतिवसति स्म, तस्य उन्मादिनी नाम कन्याऽभवत्। यस्या-मद्राक्षीत्, स मदनबाणाहतः उन्मादवानेवाभूत्। तस्यां (ङ) यौवनस्थायां स वणिक् नीतिविज्ञः तं यशोधरं राजान-मुपेत्य व्यजिज्ञपत्,—"प्रभो! त्रैलोक्यरत्नभूता मे कन्यैका प्रदेयाऽस्ति, तां देवस्य अनावेद्य अन्यस्मै न दातुमुत्सहे, अस्मिंश्च भूमण्डले देव एव सर्वरत्नानां प्रभुः, तत् तां स्वीकृत्य मामनुगृह्णातु देवः"।

इति तस्य वचनमाकर्ण्य स राजा निजान् ब्राह्मणान् तस्याः

---

न्तरायामावाणीमनिषधायती" ॥ इति। स च क्षितिसमुद्रयोरन्तरेऽवस्थितः जल-प्लावनात् पृथिवीं रक्षति। विप्लवात्—राष्ट्रविपर्य्ययात् जलप्लावनाच्च।

(ग) चण्डप्रतापः,—तीव्रप्रभावः, अवन्ध्यशासन इति यावत्, अखण्डमण्डलः,—अविभक्तदेशः, कृत्स्नदेशाधिपतिरित्यर्थः, एकातपत्रीकृतसमग्रदेशः सम्राट् इति यावत् ("मण्डलं देशबिम्बयोः। भुजङ्गभेदे परिधौ शुनि द्वादशराजके ॥ सङ्घाते देशभेदे च" इति हेमः), अखण्डमण्डलश्चन्द्रः जगदाह्लादकः, अखण्डमण्डलः सूर्य्यश्च चण्डप्रतापः, राजनि तस्मिन् जगदाह्लादकत्वचण्डप्रतापत्वाखण्डमण्डलत्वादि-गुणसद्भावात् चन्द्रार्कौ एकीभूतौ इवावस्थितौ इत्युत्प्रेक्षा।

(घ) जनता—जनसमूहः। परस्त्रीषु षण्डं—क्लीवं, परदारविमुखमित्यर्थः।

(ङ) यौवने—युवभावे तिष्ठतीति तस्यां यौवनस्थायां—प्राप्तयौवनायां कन्याया-मित्यर्थः (भावे ७मी०)। प्रदेया—कस्मैचिद्वराय विवाहविधिना समर्पणीया, परिणाययितव्या इत्यर्थः। अनावेद्य—अविज्ञाप्य [आ+विद+ल्यप्, न आवेद्य अनावेद्य "नलोपो नञः" (६।३।७३ पा०) इति नञो नस्य लोपे कृते "तस्मान्नुडचि" (६।३।७४ पा०) इति नुडागमः]। उत्सहे—शक्नोमि (उत्+सह+लट्-ए)। स्वीकृत्य—अङ्गीकृत्य, पत्नीत्वेन परिगृह्येत्यर्थः (अस्वं स्वं कृत्वा इति स्व+च्वि+कृ+ल्यप्)।

लक्षणानि परीक्षितुं व्यसृजत्। ते ब्राह्मणा गत्वा तां त्रिलोकसुन्दरीं दृष्ट्वा सद्यः (च) क्षोभमगमन्, व्यचिन्तयंश्च,—"यदि राजा इमां परिणयेत्, तदा राज्यमवसीदेत्, एतस्यामासक्तचित्तः स कदाऽपि न हि राज्यम् अवेक्षिष्यते, तस्मादेषा सुलक्षणेति राज्ञे नास्माभिः कथनीयम्" इति। इत्येवं मनसि सङ्कल्प्य ते राजान्तिकमाजग्मुः, ऊचुश्च,—"देव! सा कुलक्षणा" इति। तेन च स राजा तां वणिक्सुतां न स्वीचकार। ततः तदाज्ञया स वणिक् तां कन्यां बलधराऽऽख्याय सेनापतये प्रददौ। अथ सा भर्त्तृगृहे तेन भर्त्रा सुखेन (छ) अस्थात्।

इत्थं (ज) गच्छति काले हेमन्तहस्तिनं प्रफुल्लकुन्दलतादन्तं मथिताम्बुजिनीवनं हत्वा लसत्पुष्पमञ्जरीकेसरावलिः

(च) क्षोभं—चाञ्चल्यं, तस्यां राज्ञ. अत्यासक्तिभयेति भावः। परिणयेत्—उद्वहेत् (परि+नी+लिङ् यात्)। अवसीदेत्—नश्येत [अव+सद+लिङ्-यात् "पाघ्राध्मास्था—" (७।३।७८ पा०) इति सीदादेशः]।

(छ) अस्थात्—अवात्सीत् [स्था+लुङ् द "गातिस्था—" (२।४।७७ पा०) इत्यादिना सिचो लुक्]।

(ज) गच्छति—अतिवहति। हेमन्तः,—हिमर्त्तुः, स हस्तीव तं हेमन्तहस्तिनं—गजसदृशं हेमन्तर्त्तुं, हेमन्तकालस्य धूमसदृशकुज्झटिकाबहुलत्वेन पद्मिनीपङ्कविमर्द्दकत्वेन च धूमवर्णेन अम्बुजिनीकाननविमर्दकेन च गजेन साम्यमवगन्तव्यम्; प्रफुल्ला—विकचा, या कुन्दलता—कुसुमितकुन्दशाखा ("लता प्रततिराख्याता लता शाखा च शाखिनाम्" इति शाश्वतः), अत्र कुसुमानां विकाशेन तद्युक्तासु लतास्वपि विकाशितत्वोपचारः, सा दन्त इव यस्य तम्, अन्यत्र,—कुन्दलता इव दन्तः यस्य तं प्रफुल्लकुन्दलतादन्तं—पुष्पितकुन्दशाखारूपदन्तविशिष्टं, गजदन्तानां शुभ्रत्वाद्दीर्घत्वाच्च कुसुमितकुन्दशाखौपम्यम्, अन्यथा केवलस्य स्वल्पस्य कुन्दस्य चौपम्ये तु गजदन्तसादृश्यहानिदोषः स्यात् इति बोद्धव्यं (विश०। बहुव्री०), मथितं—विलोडितं, विनाशितमित्यर्थः, अम्बुजिनीवनं—पद्मिनीषण्डं येन तं मथिताम्बुजिनीवनम्, एकत्र,—हिमपातनेन, अपरत्र,—अवगाहनेनेति भावः, विदलितपद्मिनीषण्ड (विश०। बहुव्री०)। लसन्ती—दीप्यमाना, या पुष्पमञ्जरी—कुसुममञ्जरी, सा

चूताङ्कुरनखः कानने क्रीडन् मधुकेसरी समाजगाम। तस्मिंश्च काले वसन्तोत्सवं द्रष्टुं स राजा यशोधरः गजारूढः निर्जगाम। (झ) तद्रूपेण सम्भाव्यविप्लवाः कुलयोषितः अपसारयितुं तदा उद्घुष्य दत्तं डिण्डिमं श्रुत्वा सा उन्मादिनी परित्यागावमानिता हर्म्यपृष्ठतः तस्मै राज्ञे आत्मानमदर्शयत्। स च राजा (ञ) सन्धुक्षितस्य मधुना मलयानिलैः कामाग्नेः ज्वालामिवोन्नतां तां दृष्ट्वा चुक्षुभे ; तस्याश्च रूपं मनोभुवो जैत्रमस्त्रमिव हृदये गाढं प्रविष्टं निर्वर्णयन् क्षणात् मोहमगात्।

केशरावलिः,—सिंहस्य सटासंहतिरिव यस्य सः, अन्यत्र,—लसत्पुष्पमञ्जरीव केशरावलिः यस्य स लसत्पुष्पमञ्जरीकेशरावलिः,—प्रोद्भिन्नकुसुमवल्लरीरूपकेशरधारी (विण०। बहुव्री०), चूताङ्कुराः,—आम्रमुकुलाः, नखाः,—कररुहा इव, अन्यत्र,—चूताङ्कुरा इव नखा यस्य सः चूताङ्कुरनखः,—आम्रमुकुल इव नखधारी, नखरायुधा हि सिंहा तैरेव परान् दारयन्ति, वसन्तोऽपि चूताङ्कुरदर्पणाल्लेषु विरहिहृदयानि दारयन्ति इति तत्साम्यम्। मधुः,—वसन्तः, वसन्तर्तुरिति यावत्, केशरी—सिंह इव, अन्यत्र,—मधुरिव केशरी मधुकेशरी—वसन्तकालरूपः सिंहः।

(झ) तस्य—राज्ञः, रूपेण—सौन्दर्य्येण तद्रूपेण—राज्ञः सौन्दर्य्यसम्पत्त्या, सम्भाव्यः,—सम्भावनार्हः, विप्लवः,—चाञ्चल्यं यासां ताः सम्भाव्यविप्लवाः,—आशङ्काविकाराः, राज्ञः सौन्दर्य्यातिशयदर्शनेन शङ्कनीयमानसविकाराः इत्यर्थः (विण०। बहुव्री०)। उद्घुष्य—राजा बहिरागच्छति, सर्वा यूयं तद्गमनमार्गादपगच्छत इति उच्चैः वाद्यसहयोगेन घोषयित्वा (उत्+घुष+ल्यप्)। परित्यागेन—कुलक्षयोऽति विमृश्य अनादरात् प्रत्याख्यानेन, अवमानिता—अवज्ञाता परित्यागावमानिता—अप्रहृष्टपरिभूता, तत्तु योषितामतीव मन्युकारणमवगन्तव्यं (विण०। तृया तत्पु०), हर्म्यपृष्ठतः,—हर्म्यपृष्ठमारुह्य (ल्यब्लोपे पञ्चमी०)।

(ञ) सन्धुक्षितस्य—उद्दीपितस्य (विण०। सम+धुक्ष+क्तः), मधुना—वसन्तेन (कर्त्ता), मलयानिलैः,—दक्षिणस्थमलयपर्वतागतवायुभिः (करणे तृया०), तस्य कामोद्दीपकत्वात्। ज्वाला—शिखाम्, अतीव सन्तापकत्वादिति भावः। चुक्षुभे—विचकार, चलचित्तो बभूवेत्यर्थः (क्षुभ+लिट्-ए)। मनसः भूः,—उत्पत्तिः यस्य मनसो भवति इति वा, मनसि भवति इति वा तस्य मनोभुवः,—कामस्य (मनस्+

अथ स भृत्यैराश्वासितो राजधानीं प्रविश्य (ट) पृष्टेभ्यस्तेभ्यस्तां प्रागुपनतोज्झिताम् उन्मादिनीं बुबुधे। ततः स राजा तान् "कुलक्षणेयम्" इतिवादिनो विप्रान् देशान्निर्वास्य (ठ) अनुदिनं तामेव समुत्सुको दध्यौ,—"अहो! जगन्निष्कलङ्के तस्या मुखे सति निर्लज्जो जडात्मा अयं शशी नित्यमुदेति।

---

भू+क्विप्), जैत्रं—जेतृ, जयसाधनमित्यर्थः [ विशे० । जि+"तृन्" (३।२।१३५ पा०) इति तृन् "प्रज्ञादिभ्यश्च" (५।४।३८ पा०) इति स्वार्थे अणि कृते पूर्वपदवृद्धिः। "जैत्रस्तु जेता" इत्यमरः ]। निर्वर्णयन्—अवलोकयन् [ निर्+वर्ण+"सत्याप—" (३।१।२५ पा०) इति णिच्+लटः शत्रादेशः। "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः ]।

(ट) पृष्टेभ्यः—जिज्ञासितेभ्यः, राज्ञा इति शेषः, तेभ्यः—भृत्येभ्यः। आदौ उपनता—प्राप्ता, पित्रा दातुमिष्टत्वात् प्राप्तप्राया इत्यर्थः, पश्चात् उज्झिता—लक्षणज्ञानां ब्राह्मणानां मृषाभाषणदोषात् त्यक्ता ताम् उपनतोज्झिताम्—उपस्थितां परित्यक्ताञ्चेत्यर्थः (विशे०। स्नातानुलिप्तवत् स०)।

(ठ) दिने दिने अनुदिनं—प्रतिदिनं (वीप्सायामव्ययी०)। समुत्सुकः,—उत्कण्ठितः सन्, दध्यौ—चिन्तयामास (ध्यै+लिट्-णल्)। जगत्सु—भुवनत्रयेष्वित्यर्थः, निष्कलङ्के—कलङ्कशून्ये जगन्निष्कलङ्के—त्रिभुवने एकमात्रकलङ्कविरहिते, केवलम् अस्या मुखमन्तरा त्रिभुवने नैवंविधं किञ्चिद्वस्त्वस्ति, यत् स्वियताऽपि कलङ्केनासंसृष्टं दृश्यते इति तात्पर्य्यम्; यद्वा,—जगत् निष्कलङ्कं यस्मात् तादृशे जगन्निष्कलङ्के (मुखे इत्यस्य विशे०), पृथिव्यां सर्वथा रमणीयं नैव किञ्चिदस्ति, इत्यपवादप्रध्वंसके इत्यर्थः, अतुलनीये इति भावः। निर्लज्ज इति।—निर्लज्जत्वञ्च शशिन एवं यत्,—अकलङ्किनः तस्या मुखस्य विद्यमानत्वेऽपि कलङ्कमलिनस्य आत्मनः नित्यप्रकाशनम्; जडः,—हिममयः, आत्मा—स्वरूपं यस्य सः जडात्मा—शिशिरमयः, अथच जडात्मा—अप्राज्ञः, मूर्खस्वरूपः इत्यर्थः, मूर्खमन्तरा कोऽन्यः कलङ्कितमात्मानं प्रदर्शयति? इति भावः ("जडा स्त्रियाम्। मूकशिश्वोः हिमयक्षमूकाप्राज्ञेषु तु त्रिषु"॥ इति विश्वमेदिन्यौ), जडात्मा—जलमयमण्डल इत्यर्थश्च, डलयोरभेदात्, चन्द्रमण्डलस्य जलमयत्वे प्रमाणं यथा 'सिद्धान्तशिरोमणौ,—"चन्द्रस्य दर्शने त्वयं विवेकः,—चन्द्रो हि जलमयः, तत्र स्वतो दीप्तिर्नास्ति, तत्र दूरस्थितजलमयस्य

कठोरौ हेमकलसौ गजकुम्भौ च कर्कशौ अस्याः (ड) पीनयो-स्तुङ्गयोः पयोधरयोः सादृश्यं न लभेयाताम्। (ढ) काञ्ची-नक्षत्रमालया विराजितम् अस्या जघनस्थलं कन्दर्पमातङ्ग-मस्तकनिभं कं न विलोभयेत् ?"। इत्येव तामन्तश्चिन्तयन् राजा (ण) कामाग्निपुटपाकेन पच्यमानः दिवानिशं चीयते स्म। (त) ह्रिया निगूहमानश्च पृच्छद्भ्यः आप्तेभ्यः तत्

दृश्ययोग्यत्वात्, सूर्यकिरणप्रवेशेनैव दीप्ता दर्शनयोग्यता तन्मण्डलस्य सूर्याभ्यः-थितत्वेऽपि" इत्यादि। अनेन शशिनः परानुग्रहजीवित्व इयत्वचोक्तं, ततश्च य ईदृशः हेयः, स कथं निखिलादरभाजने तादृशे मुखे सत्यपि नित्यमुद्गच्छति ? इत्येव तस्य उदयनम् इति प्रतीयते।

(ड) पीनयोः,—स्थूलयोः, तुङ्गयोः,—उन्नतयोः।

(ढ) काञ्ची—कटिभूषणविशेषे ("स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा" इत्यमरः), या नक्षत्रमाला—नक्षत्राणां मालेव सप्तविंशतिमौक्तिकैः कृता रचना, यद्यपि "एकावल्येकयष्टिका। सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः"॥ इत्यमरोक्तेः सप्तविंशतिमौक्तिकग्रथिता एकयष्टिका एकावली एव नक्षत्रमाला-शब्दवाच्या, तथाऽपि "एका यष्टिर्भवेत् काञ्ची" इत्यनेन काञ्च्या अपि एकयष्टिक-त्वात् सप्तविंशतिमौक्तिकग्रथितायां तस्यां सादृश्यनिबन्धनः नक्षत्रमालाशब्दोपचारः; तया काञ्चीनक्षत्रमालया—सप्तविंशतिमौक्तिकघटितरसनया। जघनस्थलं—स्त्रियाः कटीपुरोभागः ("पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं पुरः" इत्यमरः), कन्दर्पश्च मातङ्गमस्तकश्च—गजकुम्भश्चेत्यर्थः, ते कन्दर्पमातङ्गमस्तके, तन्निभं कन्दर्पमातङ्ग-मस्तकनिभं—कन्दर्पसदृशम् उन्मादकं करिकुम्भसदृशं विशालञ्चेत्यर्थः, एतेनास्या जघनप्रदेशस्य अतीव रमणीयत्वमुद्दीपकत्वञ्च गम्यते।

(ण) कामः अग्निरिव, सन्तापकत्वादिति भावः, तत्र यः पुटपाकः,—अन्तर्निगूढः पाकविशेषः तेन कामाग्निपुटपाकेन—पञ्चशरानलजन्याभ्यन्तरिकपाक-विशेषेणेत्यर्थः (कर्त्रा)। चीयते स्म—कृशीभूयते स्म [चि+कर्मकर्त्तरि लट्—ते "चीयते इति कर्मकर्त्तरि" (का० सू० ३० ५ अधि० २ अ० ५ सू०)]।

(त) ह्रिया—लज्जया, निगूहमानः,—गोपायन् [नि+गुह+शानच् "ऊदुपधाया गोहः" (६।४।८९ पा०) इति उपधायाः ऊत्], चीयताकारणमिति शेषः, पृच्छद्भ्यः,—जिज्ञासमानेभ्यः [प्रच्छ+शतृ "ग्रहिज्या—" (६।१।१६ पा०)

पीड़ाकारणं प्रकाशयामास । (थ) "अलं सन्तापेन, स्वाधीनां तां किं न भजसे ?" इति तैरभिहितः स धार्मिकः नरपतिः नैव तदनुमेने ।

ततो बलधरो नाम सेनापतिः तत् विदित्वा उपेत्य च चरणाऽऽनतः प्रभुम् ( द ) अभ्यर्थयामास,—"देव ! दासस्त्री सा तव दास्येव, न पराङ्गना ; अहञ्च स्वयं प्रयच्छामि, तदेनां मे भार्य्यां गृहाण । (ध) अथवाऽहं ताम् इह देवकुले त्यजामि, तर्हि तस्या ग्रहणे न दोषः" । इति सेनापतिना निर्बन्धेन अभ्यर्थ्यमानोऽपि सान्तःकोपं तमुवाच,—"अहं राजा भूत्वा कथमीदृशमधर्मं कुर्य्याम् ? मयि धर्मम् ( न ) अतिक्रामति कः स्ववर्त्मनि तिष्ठेत् ? भक्तोऽपि त्वं कथं मां पापे परलोकमहा-

इति सम्प्रसारणम् ], आप्तेभ्यः,—स्वेभ्यः, स्वजनेभ्य इत्यर्थः ( "आप्तौ लब्धे स्वसत्ययोः." इति मेदिनी ), यद्वा,—आप्तेभ्य,—प्रत्यायितेभ्य., विश्वस्तसुहृद्भ्य इत्यर्थः ( "आप्तः प्रत्ययितस्त्रिषु" इत्यमरः ) ।

( थ ) अल—निषेधार्थकमव्ययम्, अलं सन्तापेन—सन्तापं मा कुरु इत्यर्थः ( "गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका" इति नियमात् गम्यमानक्रिया-ऽपेक्षया साधकत्वेन करणे ३या०), स्वाधीना—निजाऽऽयत्ता, निजसभापतेः पत्नीत्वात् तस्याः स्वाधीनत्वम् । अनुमेने—अनुसस्रुते, स्वीकृतवानित्यर्थः [ अनु+मन+लिट्-ए "अत एकहल्मध्ये—" ( ६।४।१२० पा० ) इत्यभ्यासलोपः, अकारस्य च एकारः ] ।

( द ) अभ्यर्थयामास—ययाचे ( अभि+अर्थ+णिच्+लिट्-णल् ) । पराङ्गना —परस्त्री, दासस्वामिके वस्तुनि प्रभोरेव स्वाम्यत्वात, यदाह कात्यायनः,— "दासेनोढा त्वदासी या साऽपि दासीत्वमाप्नुयात् । यस्मादभर्त्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः." ॥ इति । "दासस्य तु धनं यत् स्यात स्वामी तस्य प्रभुः स्मृत." ॥ इति ।

( ध ) अथवा—पक्षान्तरे, परस्त्रीति मत्वा यदि न गृह्णासि तदा इति भावः । देवकुले—देवगृहे, देवता साक्षीकृत्य इति भावः । तस्याः ग्रहणे न दोषः,—मया परित्यक्तायाः तस्या अस्वामिकत्वात्, अस्वामिकधनस्य च राजाधिकृतत्वात् अदोष इति भावः ।

( न ) अतिक्रामति—उल्लङ्घयति ( अति+क्रम+लट् । भावे ७मी० ) । स्ववर्त्मनि

दुःखहेतौ अपमुखावहे नियोजयसि ? यदि त्वं धर्मपत्नीं विहास्यसि, तदा त्वां न क्षमिष्ये । मादृशः को हि तादृशं धर्मविप्लवं सहेत ? तत् (प) वरं मृत्युः" इति उक्त्वा स राजा तं निषिषेध । (फ) उत्तमसत्त्वा हि प्राणानपि त्यजन्ति, न सत्पथम् । (ब) तथैवार्थ्यमानान् सर्वानपि पौरजानपदान् मिलितानपि स राजा सुदृढनिश्चयो निराचकार । ततः क्रमेण तेनैव (भ) स्मरज्वरभवोष्मणा अभीक्ष्णं प्रक्षीणदेहः स राजा यशोधरः यशःशेषतां प्रययौ ; सेनापतिश्च प्रभोस्तथा विलयमसहिष्णुः अग्निं विवेश, अनिर्वचनीयं हि भक्तचेष्टितम्" ।

इति कथामाख्याय स्कन्धस्थितो वेतालः तं पप्रच्छ,—

—निजकर्तव्यपथे । धर्माय—सह धर्माचरणाय, पत्नी ता धर्मपत्नीं—सहधर्मिणीं (४र्थी तत्पु०), विहास्यसि—त्यक्ष्यसि (वि+हा+लृट्-स्यसि) ।

(प) वरं—मनाक्प्रियः, ईदृगधर्मं कृत्वा जीवनरक्षणापेक्षया मृत्युरपि प्रियः इत्यर्थः ("देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये" इत्यमरः) ।

(फ) उत्तमसत्त्वाः,—सत्स्वभावाः ।

(ब) तथैव—उक्तप्रकारेणैव, सेनापतिप्रदर्शितरीत्यैवेत्यर्थः, अर्थ्यमानान्—याचमानान् (अर्थ+णिच्+शानच्) । पौराः,—पुरवासिनः, नागरिका इत्यर्थः, जानपदाः,—जनपदवासिनः, नगरादन्यत्र देशवासिन इत्यर्थः ("भवेज्जनपदो जानपदोऽपि जनदेशयोः" इति मेदिनी), पौराश्च जानपदाश्च ते तान् पौरजानपदान्—नगरवासिनः देशवासिनश्चेत्यर्थः, यद्वा,—पौराः,—पुरवासिनः, ये जानपदाः,—जनाः तान् पौरजानपदान्—पुरवासिजनान् (कर्मधा०), पौराः,—पुरवासिनः जनाः, जानपदाः,—नगरवासिनश्च जनाः तानिति वा । निराचकार—प्रत्याचख्यौ, निवारयामासेत्यर्थः (निर्+आ+कृ+लिट् णल्) ।

(भ) स्मरज्वरात्—कामज्वरात्, भवः,—उत्पात्तर्यस्य तादृशेन ऊष्मणा—सन्तापेन स्मरज्वरभवोष्मणा—कामज्वरसन्तापेन (कर्मधा०), अभीक्ष्णं—निरन्तरम् । यश एव शेषः तस्य भावस्तत्ताम् यशःशेषता—कीर्तिमात्रावशिष्टतां, मृत्युमिति यावत् । विलयं—मृत्युमित्यर्थः । भक्तचेष्टितम्—प्रभुरक्तसेवकव्यवहारः ।

"राजन्! एतयोः सेनापतिमहीभृतोः कोऽधिको मतः? त्वया पूर्वदत्तशापम् अनुस्मृत्य वक्तव्यम्"। राजा अवदत्,—"अहं राजानमधिकं मन्ये"। तदाकर्ण्य वेतालः (म) साक्षेपमब्रवीत्,—"राजन्! सेनापतिः कथं नाभ्यधिकः? यः स्वामिने तथाविधां स्वभार्य्यां सुचिरेण ज्ञाततद्भोगसुखास्वादोऽपि समुपानयत्, प्रभौ च पञ्चत्वमागते तद्भक्त्या आत्मानमग्निसादकरोच्च; राजा तु अनास्वादिततद्भोगस्तस्य भार्य्यां जहौ"।

वेतालेनैवमुक्तः स राजा विहस्य पुनरब्रवीत्,—"यद्यपि एतत्, तथाऽपि (य) नातिचित्रं तत्, कुलपुत्रो हि सेनापतिः, स भक्त्या तथाऽकरोत्, प्राणैरपि भृत्यानां स्वामिरक्षणं व्रतम्। राजानस्तु (र) मदाध्माता गजा इव निरङ्कुशा विषयोन्मुखा धर्ममर्य्यादाशृङ्खलां छिन्दन्ति। तेषां हि

(म) साक्षेपं—सभर्त्सनं, किञ्चिन्निर्भर्त्सय इवेत्यर्थः। तया सह भोगः तद्भोगः, तत्र यत् सुखम्—आनन्दः, तस्य आस्वादः,—रसः, ज्ञातः,—अनुभूतः, तद्भोगसुखास्वादः,—तत्सम्भोगानन्दरसः येन सः ज्ञाततद्भोगसुखास्वादः,—विदित-तत्सुरतसुखमाधुर्य्यः (विश०। बहुव्री०), समुपानयत्—समुपाहरत्, उपायनी-कर्त्तुमैच्छदित्यर्थः (सम्+उप+आ+नी+लङ् द)।

(य) नातिचित्र—नातिविस्मयकरमित्यर्थः। कुलपुत्रः,—सत्कुलोत्पन्नः इत्यर्थः। व्रतं—नियमः, अवश्यमनुष्ठेयमित्यर्थः।

(र) मदेन—दान-वारिणा, गर्वेण च ("मदो रेतसि कस्तूर्य्यां गर्वे हर्षेभ-दानयोः" इति विश्वः), आध्माताः,—परिपूर्णा इत्यर्थः, मदाध्माताः,—मदमत्ताः, गर्विताश्च। निरङ्कुशाः,—अङ्कुशो नाम गजताडनविशेषः, तदनायत्ताः, अङ्कुशताडने-नापि वशीकर्त्तुमक्षमा इत्यर्थः, अन्यत्र,—निर्बाधा इत्यर्थः, अतिक्रान्तशासना इति यावत्, विषयेषु—कारण्वादिषु भोग्यद्रव्येषु, अन्यत्र,—स्रक्चन्दनवनितादिषु भोग्यद्रव्येषु, उन्मुखाः,—प्रवणाः विषयोन्मुखाः,—भोग्यद्रव्याभिमुखाः (विश०। उभो तत्पु०)। धर्मस्य मर्य्यादा—स्थितिः ("मर्य्यादा सीमनि स्थितौ" इति मेदिनी), शृङ्खला—निगड इव, नियामकत्वादिति भावः, ताम्, अन्यत्र,—धर्ममर्य्यादा इव

(ल) उद्रिक्तचित्तानाम् अभिषेकाम्बुभिः समं विवेको विगलति। (व) चलच्चामरमारुतैरुद्धूय तेषां वृद्धोपदिष्टशास्त्रार्थरजांसि उत्क्षिप्यन्त इव। (श) आतपत्रेण च सत्यं सूर्य्यालोक इव निवार्य्यते। (ष) विभूतिवात्यया चोपहता दृष्टिः मार्गं नेक्षते।

---

शृङ्खला तां धर्म्ममर्य्यादाशृङ्खलां—धर्म्मस्थितिरूपं निगड़मित्यर्थः, छिन्दन्ति—कृन्तन्ति, उल्लङ्घयन्तीत्यर्थः ( छिद+लट् अन्ति )।

(ल) उद्रिक्तचित्तानां—विषयप्रसक्तमनसामित्यर्थः, अभिषेकाय—राज्याधिकारप्राप्त्यर्थं यथाविधि स्नानाय, यत् अम्बु—बहुतीर्थाहृतं जलं तैः अभिषेकाम्बुभिः,—राज्याभिषेकजलैः। विवेकः,—विचारः, इदं सत् इदमसत् इति विवेचना इत्यर्थः, विगलति—नश्यति, यदैव अभिषेकार्थं शिरसि निषिक्तमम्बु भूमौ गलति, तदैव विवेकोऽपि पलायते इत्यर्थः।

(व) चलन्तः,—आन्दोलयन्तः, ये चामराः,—बालव्यजनानि, तेषां मारुतैः,—वायुभिः चलच्चामरमारुतैः—व्यजनानिलैः, उद्धूय—उड्डीयेत्यर्थः ( उत्+धू+ल्यप् )। वृद्धैः,—प्रवयोभिः, आचार्य्यादिभिरिति यावत्, उपदिष्टाः,—अनुशिष्टाः, ये शास्त्रार्थाः,—शास्त्रप्रतिपादितविषयाः, ते रजांसि—पांशव इव, मर्म्मानभिज्ञतया अकिञ्चित्करत्वेन आसत्त्वभावादिति भावः, तानि वृद्धोपदिष्टशास्त्रार्थरजांसि—धूलिराशिवत् अकिञ्चित्कराणि शास्त्रशासनानीत्यर्थः. अत्र "मारुतः" "उत्क्षेप" इति वाक्यद्वयबलात शास्त्रार्थे रजस्त्वारोपः बोध्यः, उत्क्षिप्यन्ते—उत्पत्यन्ते ( उत्+क्षिप+कर्म्मणि लट्-अन्ते ), वृद्धेभ्यः यत् किञ्चित् शास्त्रज्ञानमर्जितं, तत् सर्वं वायुवेगेन धूलिराशिवत् चामरानिलसेवनगर्व्वभरेण विलीयते इति भावः।

(श) आतपत्रेण—छत्रेण, छत्रचामरादीनां राजलक्षणत्वात इति भावः, सत्यं—तथ्य, राज्ञां कूटव्यवहारपरायणत्वादिति भावः, छत्रेण यथा सूर्य्यालोको निवार्य्यते, तथा राजच्छत्रमातपत्रमपि शिरसि धारणमात्रमेव सत्यव्यवहारात् राजानं विमुखीकरोतीति भावः।

(ष) विभूतिः,—ऐश्वर्य्यं, वात्या—वातसमूहः इव, प्रकृतिविपर्य्यासकत्वादिति भावः, तया विभूतिवात्यया—सम्पद्रूपप्रबलवायुना। मार्गं—सत्पथं, पन्थानञ्च, प्रबलवातोद्धूतधूलिराशिरुद्धा दृष्टिर्यथा मार्गदर्शनेऽसमर्था भवति, तथा ऐश्वर्य्यराशिना चाकचक्येन कलुषिता दृष्टिः सदिदमसदिदमिति विवेक्तुं नैव शक्नोतीति तात्पर्य्यम्।

जगद्विजयिनोऽपि ते ते नहुषादयो राजानः (ख) मारमोहित-चेतसः तां तां विपदं प्राप्तवन्तः। एष राजा पृथिव्याम् एकच्छत्रोऽपि यस्तया उन्मादिन्या चपलया लक्ष्म्या इव विमोहितोऽपि प्राणानपि तत्याज, न पुनः अमार्गे पदं निदधे, तेनासौ वीरः मे अधिको (ग) मतः"।

इत्याकर्ण्य नृपतेर्वाक्यं स वेतालः स्कन्धवर्त्ती पुनः स्वमेव पदं मायया प्रायात्। राजाऽपि अचलचित्तस्तं तथैवानुससार; आरब्धे सुदुष्करेऽपि महतां मध्ये विरामः कुत एव इति।

---

## अथ अष्टादशकथा।

ततः स राजा (क) क्रव्याद्भिः परिवृते, ज्वालाविलोल-रसनैर्भूतैरिव चिताग्निभिः समन्तादतिरौद्रे तस्मिन् पितृवने तस्यां क्षपायां तं शिंशपातरुमुपेत्य तत्र वेतालविकृतान् सदृशाकृतीन् तस्मिन् तरौ लम्बमानान् सुबहून् प्रेतकायान्

---

(ख) मारेण—मदनेन ("मदनो मन्मथो मारः" इत्यमरः), मोहितं—मोहं गतं, चेतः,—चित्तं येषां ते मारमोहितचेतसः,—कामविमुग्धचित्ताः (विश०। बहुव्री०), तां तां—सर्पयोन्यादिप्राप्तिरूपामित्यर्थः।

(ग) मतः,—स्वीकृतः, विवेचितः इत्यर्थः।

---

(क) क्रव्यं—मांसम् अदन्तीति तैः क्रव्याद्भिः,—मांसाशिभिः प्राणिभिः ("क्रव्यात् रक्षसि पुंसि स्यात् मांसाशिन्यभिलिङ्गकः" इति मेदिनी)। ज्वाला—शिखा, विलोला—चञ्चला, रसना—जिह्वा इव येषां तैः, अथवा,—ज्वाला इव विलोला रसना येषां तैः ज्वालाविलोलरसनैः,—लोलजिह्वावत् परिदृश्यमान-शिखावद्भिः, अथवा,—प्रज्वलिताग्निशिखावत् परिदृश्यमानजिह्वैः (विश०। बहुव्री०)। अतिरौद्रे—अतिभीषणे। पितृवने—श्मशाने ("श्मशानं स्यात् पितृवनम्" इत्यमरः)। क्षपायां—रात्रौ। वेतालेन विकृतान्—विकारं प्रापितान् (विश०। तृया तत्पु०)।

अर्धाङ्कितमद्राक्षीत्,—"अहो! किमेतत्? किंवा अयं मायी वेतालो मे कालं क्षिपति, यया इह भूयसाम् एषां कं ग्राह्यं न वेद्मि। यदि (ख) अनिष्पन्नार्थस्य मे रात्रिरियं गच्छति, ततोऽहं वह्निं प्रवेक्ष्यामि, न तु हास्यतां सहिष्ये" इति चिन्तयतस्तस्य राज्ञो निश्चयं ज्ञात्वा सत्त्वतुष्टः स वेतालः तां मायां संजहार। ततोऽसौ एकमेव नरकलेवरे स्थितं वेतालं दृष्ट्वा तथैवावतार्य्य अंसेन गृहीत्वा पुनः प्रतस्थे। प्रस्थितञ्च तं स वेतालः प्राब्रवीत्,—"राजन् न (ग) विरज्यसि चेत्, तदिमां कथां कथयामि, शृणु,—

अस्ति (घ) गौर्य्या तपसा परितुष्टहृतेन शम्भुना असामान्यगुणोत्कर्षलुब्धेनेव स्वयं निर्मिता भोगवत्यमरावत्यो-

---

क्षिपति—अतिवाहयतीत्यर्थः, यया—मायया (करणे ३या०)। भूयसां—बहूनाम्, एषां—शवानां (निर्द्धारे ६ष्ठी०)।

(ख) अनिष्पन्नार्थस्य—असम्पन्नप्रयोजनस्य, निष्फलप्रयत्नस्य इत्यर्थः (विश०। बहुव्री०)। प्रवेक्ष्यामि—अन्तर्गमिष्यामि (प्र+विश+लृट् स्यामि)। हास्यताम्—अकृतकार्य्यतया जनानामुपहासास्पदतामित्यर्थं। सत्त्वेन—व्यवसायेन, निश्चयेनेत्यर्थः ("द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः), तुष्टः,—प्रीतः सत्त्वतुष्टः,—सङ्कल्पदार्ढ्यदर्शनेन हृष्ट इत्यर्थः (विश०। ३या तत्पु०)। संजहार—संवव्रे, संहृतवानित्यर्थः (सम्+हृ+लिट्-णल्)।

(ग) विरज्यसि—विरक्तोऽभवसि [वि+रन्ज+लट्-सिप् "अनिदिताम्—" (६।४।२४ पा०) इति उपधाया नकारलोपः]।

(घ) गौर्य्या (कर्त्तरि ३या०), तपसा (करणे ३या०), आदौ परितुष्टः, पश्चात् हृतः,—मत्प्रीत्यर्थम् ईदृशोभनिका पुरी निर्म्माहि इत्येवंरूपेण दुर्गया प्रार्थितः, नियुक्तो वा, तेन परितुष्टहृतेन—पार्वत्यास्तपस्यया सन्तुष्टेन अत एव स्वेच्छया तत्प्रार्थनापूरणाय प्रवृत्तेनेत्यर्थः (विश०। कर्म्मधा०)। न सामान्यः,—इतरसुलभः, यः गुणोत्कर्षः,—गुणातिशयः, तत्र लुब्धेन—लोलुपेन असामान्यगुणोत्कर्षलुब्धेन—गुणानां विशिष्टतया उत्कर्षसम्पादनचतुरेणेत्यर्थः, गुणज्ञेन स्वयमपि गुणिना इति भावः; स्वयं निर्म्मिता इति उभयत्रान्वयः: महाकालाख्यमविद्धलिङ्गमूर्त्यधि-

तृतीया उज्जयिनी नाम पुरी। यस्याम् (ङ) उदारसुकृतिनः नानाभोगेन उपबृंहिताः स्वर्गमपि न कामयन्ते; यस्यां वरयोषितां कुचेषु कार्कश्यं, लोचनेषु चापलं, भ्रूषु भङ्गिः। यस्याञ्च निशासु (च) तमः, कविवक्रोक्तिषु वक्रत्वं, दन्तिषु मदः, मुक्ताचन्दनशशाङ्केषु जाड्यमासीत्। तस्याञ्च चन्द्रप्रभो नाम राजा अभवत्। (छ) देवस्वामीति विश्रुतो बहुधन-

---

स्थानत्वात् गौरीतपसा तुष्टो हरः तत्प्रार्थनापूरणाय गुणोत्कर्षभूयिष्ठां सर्वपुरी-ललामभूतां पुरीमुज्जयिनीं स्वयमेव निर्मितवानिव इत्यभिप्रायः; भोगवती—पातालस्था नागराजपुरी ("मदीनगर्योर्नागानां भोगवती" इत्यमरः)। तृतीया—तृतीयसङ्ख्यापूरणकारिणी, भोगवत्यमरावतीस्पर्द्धिनीत्यर्थः।

(ङ) उदाराः,—महान्तः, सुकृतयः,—पुण्यानि एषां सन्तीति तादृशाः उदारसुकृतिनः,—महापुण्यवन्तः (विश्व०)। उपबृंहिताः,—वर्द्धिताः (उप+बृन्ह+क्तः)। वरयोषिताम्—उत्तमाङ्गनानाम्। कार्कश्य—काठिन्यं, कुचेषु एव कार्कश्यं स्थित, न लोकव्यवहारेषु कार्कश्यमित्यर्थः, तत्रत्याः सर्वे जना अतीव कोमलप्रकृतय आसन् इति भावः! "लोचनेषु" "भ्रूषु" इत्युभयत्रापि वरयोषिता-मित्यनुषङ्ग, चापल—चाञ्चल्य, लोचनेषु एव चापल्य, न लोकव्यवहारेषु इत्यर्थः, सर्वे तत्रत्या धीरा विवेकिनश्च इति भावः। भङ्गिः,—कौटिल्य, वक्रता इत्यर्थः, अत्रापि पूर्ववत व्याख्या, सरलप्रकृतयः सर्वे तत्रत्या इति भावः।

(च) तमः,—अन्धकारः तमोगुणश्च, निशासु एव तमः,—अन्धकारः परन्तु न जनेषु तमः,—तमोगुणः इत्यर्थः, सर्वे जनाः सात्त्विकाः राजसा वा तत्रत्या इति भावः, एवमुत्तरत्रापि व्याख्यामनुरूपं सङ्गमनीयम्; कवीनां वक्रोक्तिषु—काव्याङ्गभेदेषु, तदाख्यालङ्कारेषु वा, काकुवचनेषु वा कविवक्रोक्तिषु—काव्येषु इति भावः, वक्रत्वम्—असुबोधार्थं, क्रूरत्वञ्च, काव्यविशेषेषु एव वक्रत्वं परन्तु जनेषु न वक्रत्व—क्रूरत्वमिति, सर्वे तत्र उदारा इति भावः, दन्तिषु—गजेषु, मदः,—दान-वारि, गर्वश्च, सर्वे विनीताः तत्र आसन्निति भावः, जाड्य—शीतत्व मूर्खत्वञ्च ("शीते गुणे तद्वदर्थाः सुषीमः शिशिरो जडः" इत्यमरः "जडो मूर्खे हिमार्त्ते" इति विश्वः) भावः जाड्य—शैत्यं, मूर्खता च, सर्वे विद्वांसः तत्र इति भावः।

(छ) देवस्वामी इति, नाम्ना इति शेषः, विश्रुतः,—विख्यातः।

अन्यत्र: बहुयज्ञ: बहुश्रुतश्च कश्चिद्विप्र: तस्य अमात्य आसीत्। तस्य तनयश्चन्द्रस्वामी नाम कदाचित् (ञ) कामपि विक्षिप्तैः कणमाराभैर्नेत्रैरिवाक्षैर्निरन्तरम् 'अत्र त्वाम् आश्रिष्याम:' इति विपद्भिरिव वीक्षितां, 'कोऽसौ अस्ति, यस्य अलकापतेरपि श्रियं न हरामि' इति द्यूतकृतां कलहस्वनैश्चैवंवदन्तीमिव द्यूतकारमहागोष्ठीं द्यूतेन क्रीडितुं ययौ।

तां प्रविश्य स क्रमात् तैः (झ) कितवैरक्षैर्दीव्यन् वस्त्रादिकं हारयित्वाऽपि अन्यत् धनमहारयत्। यदा तु तद्धनं

बहवः,—अनेके, यज्ञाः,—यागाः अनुष्ठिततया सन्ति यस्य सः बहुयज्ञः,—सम्पादितबहुयाग इत्यर्थः (विश०। बहुव्री०), बहूनि श्रुतानि—शास्त्राणि ("श्रुतं शास्त्रावधृतयोः." इत्यमरः) अधीतत्वेन सन्ति यस्य सः बहुश्रुतः,—अधीतविविधशास्त्रः (विश०। बहुव्री०)।

(ञ) कामपि—अनिर्द्दिष्टामित्यर्थः, विक्षिप्तैः,—पातितैः, एकत्र,—कटाक्षार्थम्, अन्यत्र,—क्रीडार्थमिति भावः, पदद्वयस्य निरन्तरमित्यनेन सम्बन्धः, निरन्तरं विक्षिप्तैरित्यर्थः, कणमाराभैः,—कणमाराख्यनगरविशेषजनेत्रसदृशैरित्यर्थः, मनोहारिभिरिति भावः, आकर्णविश्रान्ततया मुग्धतया च कणमाराजनेत्रं यथा मनोहारि, अक्षोऽपि स प्रति आकर्षकत्वात् तथा मनोहारकः इति कणमाराभैरित्यनेन गम्यते। अक्षैः,—पाशकैः (करणे ३या०। "अक्षास्तु देवना पाशकाश्च ते" इत्यमरः)। विपद्भिः,—विपत्तिभिः (कर्तृभिः), अक्षक्रीडकानां विपदः अवश्यम्भाव्यत्वात् तत्स्थानस्य विपत्प्रचुरतया नेत्रसदृशपाशकद्वारा विपत्कर्तृकतत्स्थानस्य दर्शनोत्प्रेक्षणत्वं बोद्धव्यम्। अलकापतेरपि—कुबेरस्यापि, श्रियं—सम्पदं, धनाधिपोऽपि यदि द्यूतासक्तो भवति, तदा तमपि निःशेषितसर्वधनं करोमि द्यूतस्य धननाशकत्वात् इति भावः। द्यूतकृतां—द्यूतक्रीडकानां, कलहस्वनैः,—विवादकोलाहलध्वनिभिः। द्यूतकाराणाम्—अक्षधूर्त्तानां, महती—विशाला, गोष्ठी—सभा ("गोष्ठी सभासंलापयोः स्त्रियाम्" इति मेदिनी) तां द्यूतकारमहागोष्ठीम्—अक्षक्रीडकानां महतीं समितिम्।

(झ) कितवैः,—द्यूतकृद्भिः ("धूर्त्तोऽक्षदेवी कितवोऽक्षधूर्त्तो द्यूतकृत्समाः" इत्यमरः), प्रयोजककर्तृभिरित्यर्थः। दीव्यन्—क्रीडन् [दिव + शतृ: अत्र "हलि च" (८।२।७७ पा०) इति दीर्घः]।

तैर्याच्यमानं नादात्, तदा (ञ) सभिकेन साऽवष्टभ्य लगुडैः अताड्यत । लगुडाहतसर्वाङ्गः स विप्रसुतः पाषाणमिव निश्चलम् आत्मानं मृतमिव कृत्वा तस्थौ । तथैव च (ट) द्वित्रान् दिवसान् तस्मिन् तत्र अवस्थिते, क्रूरः स सभिकः तान् कितवान् अभाषत,—"अनेन पाषाणकं श्रितं, तदेनं क्वचित् अन्धकूपे नीत्वा क्षिपत, अहं युष्माकम् एतद्देयं धनं दास्यामि"। इति तेनोक्ताः कितवास्तं चन्द्रस्वामिनम् उत्क्षिप्य (ठ) कूपगवेषिणः दूरम् अरण्यं निन्युः। तत्राऽऽगत्य कश्चित् वृद्धः कितवस्तान् अन्यान् एवमब्रवीत्,—"अयं तावत् प्रायशो मृतः, तत् किमनेनाधुना कूपे क्षिप्तेन? तदिहैव एनमुज्झित्वा गत्वा कूपे उज्झितं वक्ष्यामः"। इति तस्य वचस्ते सर्वे "तथा" इति प्रतिपद्य तथैव तं त्यक्त्वा गताः ।

अथ गतेषु तेषु कितवेषु स चन्द्रस्वामी समुत्थितः तत्र शून्यमेकं शिवमन्दिरं विवेश। तत्र किञ्चित् समाश्वस्य सुदुःखितश्चिन्तयामास,—(ड) "हा कष्टं! विश्वस्तोऽहं धूर्त्तैः

(ञ) सभिकेन—द्यूतकारकेण, धूर्त्ताध्यक्षेणेत्यर्थः ("सभिकाः द्यूतकारकाः" इत्यमरः)। अवष्टभ्य—आक्रम्य, प्रतिरुध्य इत्यर्थः [अव+स्तम्भ+ल्यप् "अनिदिताम्—" (६।४।२४ पा०) इति उपधाया नलोपः "अवाच्चा—" (८।३।६८ पा०) इति षत्वम्। "अवष्टम्भोऽविदूरे स्यादाक्रान्ते चावलम्बिते" इति मेदिनी]। अताड्यत—प्राह्रियत (ताड़+णिच्+कर्मणि लङ् तम्)।

(ट) द्वौ वा त्रयो वा सङ्ख्या येषां तान् द्वित्रान्—द्वौ वा त्रीन् वेत्यर्थः [विशे०। बहुव्री०। "बहुव्रीहौ सङ्ख्येये डजबहुगणात्" (५।४।७३ पा०) इति डच्]। तस्मिन्—चन्द्रस्वामिनि। पाषाण एव पाषाणकः (स्वार्थे कप्रत्ययः) तत् पाषाणकं—पाषाणत्वं, श्रितम्—आश्रितम्।

(ठ) कूपम्—अन्धकूपमित्यर्थः, गवेषयन्ति—अन्विष्यन्ति इति तान् कूपगवेषिणः,—कूपान्वेषिणः [विशे०। बहुव्री०। "बहुलमाभीक्ष्ण्ये" (३।२।८१ पा०) इति णिनिः]।

(ड) हा कष्टम्! इति खेदसूचकमव्ययम्, विश्वस्तः,—जातविश्वासः, तैश्च:

कितवैः मायया मुषितः, तदीदृशः नग्नः पांशुधूसराङ्गः क्व यामि ? पिता बन्धुः सुहृद्वाऽपि दृष्ट्वा किं मां वदेत् ? तदिहैव साम्प्रतं स्थितोऽस्मि, नक्तञ्च क्षुत्प्रशान्तये निर्गत्य कथमपि भोजनं प्रति यतिष्ये" इत्यालोचयतस्तस्य क्लान्तस्य दिगम्बरस्य मन्दीकृताऽऽतपो रविस्त्यक्ताम्बरः अस्ताचलमगात्। तावच्च (ढ) भूतिलिप्ताङ्गः महाव्रती शूलधरो हर इवापरः कश्चित्तापसः तत्राऽऽजगाम। स चन्द्रस्वामिनं दृष्ट्वा,—"कोऽसि ?" इति पृष्ट्वा, तस्मात् वृत्तान्तं श्रुत्वा च प्रणतं तमवादीत्,—"भद्र ! त्वं ममाऽऽश्रमं प्राप्तः क्षुत्क्लान्तोऽतिथिः, तदुत्तिष्ठ, कृतस्नानो मम (ण) भिक्षाभागमाहर"। इति तेनोक्तश्चन्द्रस्वामी तमब्रवीत्,—"भगवन् ! विप्रोऽहं कथं तव भिक्षाभागं भोक्ष्ये ?"। तदाकर्ण्य सः (त) सिद्धस्तापसः निजां

व्यक्तविश्वास इत्यर्थः। पांशुना—धूल्या, धूसराणि—धूम्रवर्णानि, अङ्गानि यस्य सः पांशुधूसराङ्ग,—धूलिधूसरितावयव (विश०। बहुव्री०)। साम्प्रतम—अधुना, दिवाभागे इत्यर्थः। नक्तं—रात्रौ (अव्य०)। दिगेव अम्बरं—वस्त्रं यस्य स तस्य दिगम्बरस्य—विवस्त्रस्य, मन्दीकृत,—स्वल्पीकृत, आतप,—प्रकाश ("प्रकाशो द्योत आतप" इत्यमर) येन स मन्दीकृतातप,—ह्रस्वीकृतद्योत, निजतेजः मृदुतरम् इत्यर्थः। त्यक्त—विसृष्टम, अम्बर—व्योम, आकाशमिति यावत् ("अम्बरं न द्वयोर्व्योम्नि सुगन्ध्यन्तरवस्त्रयोः" इति मेदिनी), येन स त्यक्ताम्बरः,—परिहृतनभोदेशः, गगनमण्डलं विहाय इत्यर्थः।

(ढ) भूत्या—भस्मना ("भूतिर्भस्मनि सम्पदि" इत्यमरः), लिप्तम् अङ्गं यस्य स भूतिलिप्ताङ्ग,—भस्मचर्च्चितावयव (विश०। बहुव्री०), महत—उत्कृष्टं, व्रत—नियमः अस्य अस्तीति महाव्रती—उत्कटतपस्वी ["आन्महतः समानाधिकरणजातीययोः" (६।३।४६ पा०) इति महतस्य आकार]।

(ण) भिक्षायाः,—भिक्षितवस्तुनः, भिक्षालब्धद्रव्यस्येत्यर्थः ("भिक्षा भृतौ च याच्ञायां सेवाभिक्षितवस्तुनोः" इति विश्व.), भागम्—अंशं भिक्षाभागं—भिक्षितद्रव्यांशम्, आहर—स्वीकुरु, भक्षयेत्यर्थः (आ+हृ+लोट् हि)।

(त) सिद्धः,—योगसिद्ध इत्यर्थः (विश०)। निजाम्—आत्मीयां, निज-

मठिकां प्रविश्य अतिथिवात्सल्येन इष्टसम्पादिनीं विद्यां सस्मार। (थ) स्मृतोपस्थिताञ्च तां, "किं करोमि?" इतिवादिनीम्,—"अमुष्य अतिथेरातिथ्यं कुरुष्व" इति शशास।

तया "तथा" इत्युक्ते, सहसा तत्र सोपवनम् अङ्गनाजन-सहितं सौवर्णं पुरमुत्पन्नं स चन्द्रस्वामी ददर्श। (द) विस्मितं तञ्चाभ्येत्य तस्मात् पुरात् विलासिन्यः,—"भद्र! उत्तिष्ठ, एहि, स्नाहि, भुङ्क्ष्व, भज नः स्वामिनीम्" इति उक्त्वा अभ्यन्तरं नीत्वा स्नापयित्वा अनुलिप्य परिधाप्य च अन्यत् वासमन्दिरं निन्युः। तत्र च प्रविश्य स युवा एकां सर्वाङ्गसुन्दरीं (ध) धात्रा कौतुकादिव निर्मितां कामपि वरारोहां ददर्श; तया च समुत्थाय अर्द्धासनोपवेशितः दिव्यमाहारं विविधानि फलानि भुक्त्वा गृहीतताम्बूलः पर्य्यङ्कशय्यायां तत्सम्भोगसुखेन निशाम् अनयत्। प्रातः प्रबुद्धश्च तत्र तमेव शिवाऽऽलयं ददर्श, न तां

अमतिमित्यर्थः, क्षुद्रो मठः मठिका तां मठिकां—पर्णशालामित्यर्थः [ मठ+"अल्पे" (५।३।८५पा०) इति कन्, स्त्रियां टाप्, अकारस्य च इकारः]।

(थ) आदौ स्मृता, पश्चात् उपस्थिता तां स्मृतोपस्थितां—स्मरणानन्तरसमागतां (विश०। स्नातानुलिप्तवत् स०), ताम्—इष्टसम्पादिनीं विद्याम्। शशास—आज्ञापयामास (शास+लिट्-णल्। "शासनं राजदत्तोर्व्यां लेखाऽऽज्ञाशास्त्रशास्तिषु" इति मेदिनी)।

(द) विस्मितं—सहसा सोपवनं साङ्गनाजनञ्च सौवर्णपुरं दृष्ट्वा आश्चर्य्यान्वितम्। अभ्येत्य—समागत्य (अभि+आ+इ+ल्यप्)। विलासिन्यः,—शृङ्गारभावभाविता-ङ्गनाः। भज—सन्तोषय, रमस्व इति यावत् (भज+लोट्-हि), नः,—अस्माकम्। अनुलिप्य—सुगन्धिचन्दनकुङ्कुमादिना गात्रं चर्च्चयित्वा (अनु+लिप+ल्यप्), परिधाप्य, वस्त्राणिति शेषः (परि+धा+णिच्+ल्यप्)।

(ध) धात्रा—विधिना, कौतुकादिव—सौन्दर्य्यसृष्टिविषये कीदृशी मे दक्षता सञ्जाता इति परीक्षितुं कौतूहलादिवेत्यर्थः। वरः,—श्रेष्ठः, आरोहः,—नितम्बः

दिव्याङ्गनां, नापि पुरं तत् (न) तथाविधपरिच्छदयुतम्। ततः स समुद्विग्नो निर्गत्य मठिकायां म्लानाननं (प) पृष्टरात्रिवृत्तान्तं तं तापसं व्यजिज्ञपत्,—"भगवन्! त्वत्प्रसादात् रजन्यामहं सुखमुषितः, किन्तु तया दिव्याङ्गनया विना मे प्राणा यास्यन्ति" इति। तदाकर्ण्य स तापसो हसन्नब्रवीत्,—"इहैव तिष्ठ, पुनर्नक्तं तथैव ते सुखं भविष्यति"।

इति तेन व्रतिना अभिहिते स चन्द्रस्वामी तस्य तापसस्य प्रसादात् (फ) प्रतिक्षपं तान् तान् भोगान् अभुङ्क्त। अनेन तस्य तं विद्याप्रभावं विदित्वा (ब) विधिचोदितः स चन्द्रस्वामी तं तापसं प्रसाद्य एकदा ययाचे,—"भगवन्! यदि सत्यं शरणागते मयि ते कृपा जाता, तदेतां विद्यां मे देहि, यस्या अयम् ईदृशः प्रभावः"। इति निर्बन्धात् प्रार्थयमानं तं स तापसः

---

अस्यास्तां वरारोहाम्—उत्तमां स्त्रियम् ("वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्यमरः)।

(न) तथाविधैः,—तादृशैः, परिच्छदैः,—वसनभूषणादिभिरुपभोग्यैः द्रव्यैरित्यर्थः, युतम्—संयुक्तम्; तथाविधपरिच्छदयुतम्—तादृशद्रव्यादिसमन्वितमित्यर्थः।

(प) पृष्टः,—जिज्ञासितः, रात्रिवृत्तान्तः,—रात्रौ व्यापारः येन तं पृष्टरात्रिवृत्तान्तम्—जिज्ञासितरजनीवार्त्तं (विश०। बहुव्री०)। उषितः,—अवास्थितः [वस + "गत्यर्थाकर्मक—" (३।४।७२ पा०) इति कर्त्तरि क्त "वसतिक्षुधोरिट्" (७।२।५२ पा०) इतीट्, "शासिवसि—" (८।३।६० पा०) इति षत्वम्]।

(फ) क्षपायां क्षपायां प्रतिक्षपं—प्रत्येकरात्रौ (वीप्सायामव्ययी०)। अभुङ्क्त—असेवत, अनुभूतवानित्यर्थः [भुज + लङ् त "भुजोऽनवने" (१।३।६६ पा०) इत्यात्मनेपदम्]।

(ब) विधिना—दैवेन ("विधिर्विधाने दैवे च" इत्यमरः), चोदितः,—प्रेरितः विधिचोदितः,—दुरदृष्टेनाभिभूत इति यावत्। प्रसाद्य—अनुयाच्य, सेवादिना प्रसन्नं कृत्वा इत्यर्थः (प्र + सद + णिच् + ल्यप)। शरणं—गृहं, रक्षितारं वा ("शरणं गृहरक्षित्रोः" इत्यमरः), आगतः—प्राप्ते शरणागते—भवद्गृहोपस्थिते, रक्षितारं त्वां प्राप्ते वा, तवाश्रिते इत्यर्थः (विश०। २या तत्पु०)।

प्रत्यवादीत्,—"भद्र! एषा विद्या (भ) तव असाध्या, असौ जलगर्भे साध्यते, तत्र चैषा जपतः साधकस्य विमोहाय तथा मायाजालं सृजति, यथा स सिद्धिं न लभेत। स हि (म) जापकस्तत्र पुनर्जातं बालकमात्मानम् ईक्षते, ततो युवानं कृतदारं जातात्मजम्; ततः सुहृदयं मे, शत्रुरयं मम इति मिथ्या प्रपश्यति; न च इदं जन्म, नापि विद्यासाधने प्रवृत्तिं स्मरति। यस्तु चतुर्विंशतिवर्षं तथा जपन्, जन्म स्वं स्मृत्वा, तत्तत् (य) मायाविजृम्भितं विदित्वा तद्वशो वह्निप्रवेशं कुरुते, स एव परमार्थतो जलोत्तीर्णः सिद्धविद्यां पश्यति, एषा च सुशिष्यस्यैव सिध्यति, अस्थानार्पणात् गुरोरपि विनश्यति। मत्सिद्धैव ते फले सिद्धे किं ते अमुना (र) आग्रहेण? मम सिद्धिहानौ एषा तदैव विनङ्क्ष्यति"। एवं तपस्विनोक्तोऽपि स

(भ) तव—त्वया (कृद्योगात् कर्त्तरि षष्ठी०), न साधयितुं शक्या असाध्या—अनिष्पादनीया, दुर्लभा इत्यर्थः [न+सिध+णिच् "सिध्यतेरपारलौकिके" (६।१।४९ पा०) इति एच आत्वम् "अर्हे कृत्यतृचश्च" (३।३।१६९ पा०) इति यत्]। जलगर्भे—जलान्तः, जलमध्ये अवस्थायेत्यर्थः, साध्यते—सम्पाद्यते, आयत्तीक्रियते इत्यर्थः, जनैरिति शेषः (साध+कर्मणि लट् ते)। जपतः,—जपं कुर्वतः (जप+शतृ. ङस्)।

(म) जापकः,—जपकर्त्ता (जप+ण्वुल्)। कृताः,—सम्पादिताः, गृहीता इति यावत्, दाराः,—स्त्री येन तं कृतदारं—परिणीतम्।

(य) मायया—कपटेन, विजृम्भितं—प्रकाशितं मायाविजृम्भितं—मिथ्याप्रपञ्चितम्। तद्वशः,—मायिकमिदं सर्वमिति ज्ञात्वा विद्यालाभेच्छाधीन सन् इत्यर्थः, वह्निप्रवेशं—मायिके एव अग्नौ प्रवेशमित्यर्थः। परमार्थतः,—तत्त्वतः, यथार्थतः इत्यर्थः। अस्थाने—अपात्रे, अयोग्यशिष्ये इत्यर्थः, अर्पणात्—दानात् अस्थानार्पणात्—कुशिष्ये समर्पणात्।

(र) आग्रहेण—आसक्त्या ("आग्रहोऽनुग्रहाऽऽक्रमणयोराक्रमे पक्षेऽपि च" इति मेदिनी)। सिद्धिहानौ—सिद्धिक्षये सति, तपस्यायाः फलभोगकालातिक्रमे जातेत्यर्थः, सर्वस्यैव आत्मकार्यस्य, अनिष्पन्नत्वादिति भावः। विनङ्क्ष्यति—विलोपिष्यति,

चन्द्रस्वामी,—"प्रक्ष्यामि सर्वं, (ख) मा तावदत्र भगवन्! चिन्ताभूः" इति तं तापसम् अब्रवीत्। ततः स तापसः तस्मै तां विद्यां दातुं प्रतिपेदे। आश्रितानुरोधेन किं हि न कुर्वन्ति साधवः?।

ततो नदीतीरं गत्वा स तापसस्तमब्रवीत्,—"वत्स! विद्यां जपन् यदा तां मायां द्रक्ष्यसि, तदा मम (ग) विद्यया बोधितो मायाग्निमेव प्रविशेः, अहं हि तवैव जपतो नदीतटे स्थास्यामि तावत्" इत्युक्त्वा शुचिस्तमाचान्तं शुचिं चन्द्रस्वामिनं तां विद्यामध्यापयामास। ततस्तस्मिन् गुरौ तीरस्थिते स चन्द्रस्वामी तं मूर्ध्ना प्रणम्य (घ) सरभसं तां नदीमवततार। अवतीर्णश्च तस्यामन्तर्जले तां विद्यां जपन् सहसैव तन्मायया विमोहितो मिथ्या सर्वं जन्मवृत्तान्तं विस्मृत्य, अन्यस्यां पुरि

---

अपयास्यतीत्यर्थ. [वि+नश+लृट् स्यति "मस्जिनशोर्झलि" (७।१।६० पा०) इति नुम्]।

(ख) मा—न, नास्तीत्यर्थः (निषेधार्थकमव्य०। "मा वारणे विकल्पे च" इति मेदिनी)। चिन्ताया भूः,—स्थान ("भू स्थानमात्रे कथिता धरण्यामपि यामिति" इति मेदिनी) चिन्ताभूः,—चिन्तास्थानं, चिन्तोत्पत्तिकारणमिति यावत्।

(ग) विद्यया—विद्याप्रभावेणेत्यर्थः, बोधितः,—निजवर्त्तमानावस्थां स्मारितः इत्यर्थः (बुध+णिच्+क्त), मायया दृष्टमपि मायाग्नि—कृत्याग्नि (शाक पार्थि०), प्रविशेः (प्र+विश+विधौ लिङ्-यास्)। तव (अपे ६ष्ठी०)। आचान्तं—कृताचमनम् [आ+चम+णिच्+क्त "युक्ते विभाषा" (७।२।१५ पा०) इत्यनेन इट्-निषेधः "अनुनासिकस्य—" (६।४।१५ पा०) इति उपधाया दीर्घः "णेरनिटि" (६।४।५१ पा०) इति णिचो लोपः "न ल्यपिमित्" (ग०) इति मित्त्वाभावात् न ह्रस्वः]। अध्यापयामास—पाठयामास [अधि+इ+णिच्+"क्रीङ्जीनां णौ" (६।१।४८ पा०) इति एत्वः आत्वे "अर्त्तिह्रीव्ली—" (७।३।३६ पा०) इति पुगागमे "कास्प्रत्ययादाम—" (३।१।३५ पा०) इति आम्, ततः "कृञ्चानु—" (३।१।४० पा०) इति अस्तेरनुप्रयोगे लिट्-णल्]।

(घ) सरभसं—सवेगं सहर्षं वा ("रभसो वेगहर्षयोः" इति मेदिनी)।

कस्यापि विप्रस्य पुत्रत्वेनोत्पन्नः शनकैर्वृद्धिं गतः, (ध) कृतोपनयनोऽधीतविद्यः कृतदारश्च दुःखसुखसम्भिन्नः क्रमात् सञ्जातापत्यः समभवत्। ततश्चाऽत्र पुत्रदारक्लेशाऽऽसक्तस्तदाचरन् (स) बहुरतिः पितृभ्यां बान्धवैश्च सह कियन्तं कालं तस्थौ।

इत्थं मिथ्याजन्मान्तरक्लेशमनुभवतस्तस्य (ह) कालप्रबोधिनीं विद्यां कारुणिको गुरुरसौ प्रायुङ्क्त। स चन्द्रस्वामी जन्मान्तरगतः तद्विद्याप्रयोगेण सद्यः प्रबोधितः आत्मानं तञ्च गुरुं स्मृत्वा तच्च मायाजालमवेत्य (क) विद्यासाध्यफलमाप्तुम् अग्निप्रवेशाय उद्यतस्तैर्निषेधद्भिर्वृद्धदारगुरुबन्धुभिः पर्य्यवारि। तैश्च बहुधा वार्य्यमाणोऽपि दिव्यसुखलोलुपः स सबान्धवः

---

(ध) कृतं—सम्पादितं, पित्रादिनेति शेषः, उपनयनं—यज्ञसूत्रधारणार्थं संस्कारविशेषः यस्य तादृशः कृतोपनयनः,—दत्तोपवीतः (विश०। बहुव्री०), अधीता—सम्यक्पठिता, विद्या—शास्त्रं येन सः अधीतविद्यः,—शास्त्रेऽधीती। दुःखसुखाभ्यां सम्भिन्नः,—संसक्तः, ऐक्यं गत इत्यर्थः, ("सम्भेदः स्फुटने सङ्गे" इति मेदिनी), दुःखसुखसम्भिन्नः,—कदाचिद्दुःखेन कदाचिद्वा सुखेन वाहितः सांस्त्ययः।

(स) बहुरतिः,—पुत्रादिषु दृढानुरागः (विश०। बहुव्री०)। बान्धवैः,—ज्ञातिभिः।

(ह) काले—उपयुक्तसमये, प्रबोधिनीं—ज्ञापिका, यद्वा,—कालस्य—समयस्य, कोऽयं समयः, यदाऽहमीदृक्तया वर्त्तमानोऽस्मि इत्येवंरूपस्य इत्यर्थः, प्रबोधिनीं कालप्रबोधिनीं—निशावस्थाविशेषज्ञापिकामित्यर्थः। करुणा शीलमस्य कारुणिकः,—दयालुः [करुणा+"शीलम्" (४।४।६१ पा०) इति ठक्]। प्रायुङ्क्त—व्ययोजयत् (प्र+युज+लङ्-त)।

(क) विद्यया—आराधितया इष्टसम्पादनयोग्यविद्ययेत्यर्थः, साध्यं—साधनीयं, प्राप्यमिति यावत्, यत् फलम्—इष्टसम्पादनशक्तिरूपमित्यर्थः, विद्यासाध्यफलं—विद्यासाध्येष्टसम्पादनसामर्थ्यमित्यर्थः। निषेधद्भिः,—निवारयद्भिः (नि+षिध+शतृ; शस्, तैः)। पर्य्यवारि—पर्य्यवेष्टि [परि+वृ+कर्मणि लुङ्-तम् "चिण् भावकर्मणोः" (३।१।६६ पा०) इति त-शब्दे परे चिण् "चिणो लुक्" (६।४।१०४ पा०) इति तस्य लुक्]।

(ख) सज्जितचितं नदीतीरमगात्। तत्राऽऽगत्य च वृद्धौ पितरौ भार्य्यां बालापत्यानि च (ग) रुदन्ति दृष्ट्वा मोहात् पुनरचिन्तयत्,—"कष्टम्! अनलं विशतो मे सर्वे इमे स्वजना म्रियन्ते, न च गुरोस्तद्वचनं सत्यं वा मृषा जानामि, तत् किम् अग्निं प्रविशामि? उत नेदम्? अथवा गुरोस्तद्वचः कथं मिथ्या तादृशप्रभावशालिनः? तदग्निमेव प्रविशामि कामम्" इति पर्य्यालोच्य स चन्द्रस्वामी अग्निमेव प्राविशत्; प्रविश्य च अनुभूतहिमस्पर्शो विस्मितः वह्नेः शान्तभयः तस्मात् नदीतीरात् उत्थाय तटमवाप। तत्रोत्थाय स्थितं तं गुरुं दृष्ट्वा पादयोर्निपत्य पृच्छन्तं तम् अग्निशैत्यान्तं सर्वं वृत्तान्तमवर्णयत्।

ततः स गुरुस्तमुवाच,—"वत्स! मन्ये त्वया कश्चिदत्र (घ) अपचारः कृतः, अन्यथा अग्निः कथं ते शीतो जातः? एतस्या विद्यायाः साधने एतद्धि अदृष्टम्"। तदाकर्ण्य स चन्द्रस्वामी प्रावदत्,—"भगवन्! नात्र कश्चिन्मयाऽपचारः कृतः स्मर्य्यते"। ततः स तद्गुरुः जिज्ञासुस्तां विद्यां सस्मार, न च सा तस्य वा तच्छिष्यस्य (ङ) आविरभूत्। अथ तौ नष्टविद्यौ विषण्णौ ततो जग्मतुः"।

---

(ख) सज्जिता—कल्पिता, चिता—मृतशय्या यत्र तं सज्जितचितं—प्रस्तुतीकृतचितिकं (विश०। बहुव्री०)।

(ग) रुदन्ति—क्रन्दन्ति (विश०। रुद+शतृ, तानि)। कष्टं—खेदसूचकमव्ययम्। कामम्—अनिच्छया स्वीकारार्थकमव्ययम् ("कामं प्रकामानुमतौ कामम्" इत्यमरः)। वह्नेः,—अग्नेः ["भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इत्यपादाने पञ्चमी०]।

(घ) अपचारः,—निषिद्धाचरणमित्यर्थः, अदृष्ट—दुर्भाग्यमित्यर्थः।

(ङ) आविरभूत्—प्रकाशिताऽभूत् [आविस्+भू+लुङ्-द "कृभ्वस्ति-

इति कथामाख्याय वेतालस्तं भूपं पप्रच्छ,—"राजन्! संशयमेतं मे (च) छिन्धि, केन हेतुना विहितेऽपि यथोद्दिष्टे कर्मणि विद्या तयोर्नष्टा?"। एतदाकर्ण्य स राजा तं वेतालं प्रत्यवोचत्,—"योगीश्वर! जाने, भवान् मे कालम् एवं (छ) क्षिपति, तदपि ते ब्रवीमि, दुष्करेणापि कर्मणैव पुरुषस्य न सिद्धिर्लभ्या, शुद्धेनैव कर्मणा। तत्रास्य (ज) मन्दस्य विप्रयूनश्चित्तं प्रबोधितमपि यत् विकल्पते स्म, तेनास्य विद्या सिद्धिं न गता, अस्थानदानाच्च गुरोर्विनष्टा"। इति तस्य नृपस्य वाचं निशम्य स वेतालः पुनः स्वं निलयं प्रत्यपद्यत। राजाऽपि अशिथिलयत्नः तमन्वेष्टुं धावति स्म।

## अथ एकोनविंशकथा।

अथ राजा पुनः शिंशपातलं गत्वा वेतालं स्कन्धे आरोप्य

---

ऊरीचत्" (१।४।६१ पा०) इत्यनेन आविःशब्दस्य ऊर्य्यादिगणे पठितस्य गतिसञ्ज्ञायां सत्यां "ते प्राग्धातोः" (१।४।८० पा०) इति पूर्वनिपातः। "प्राकाश्ये प्रादुराविः स्यात्" इत्यमरः]।

(च) छिन्धि—खण्डय, अपनोदयेत्यर्थः (छिद+लोट्-हि)। विहिते—अनुष्ठिते, यथोद्दिष्टे—यथोपदिष्टे, उपदेशानुसारिणि इत्यर्थः।

(छ) क्षिपति—प्रेरयति, अतिवाहयति इत्यर्थः (क्षिप+लट्-तिप्)। पुरुषस्य—पुरुषेणेत्यर्थः (तद्योगात् कर्त्तरि षष्ठी०)।

(ज) मन्दस्य—मूढस्य, अभाग्यस्य वा ("मन्दाः स्वैराल्परोगार्त्तमूढाभाग्यशनैश्चराः" इति शाश्वतः)। विकल्पते स्म—भ्राम्यति स्म, गुरुवाक्यं सत्यं भवति नवा वा इति सन्दिग्धे स्म इत्यर्थः (वि+क्लृप+लट्-ते। "विकल्पः पुंसि भ्रान्तौ च कल्पने" इति मेदिनी)।

तथैव प्रातिष्ठत, वेतालोऽपि तं गच्छन्तं (क) न्यगादीत्,— "राजन्! अपरां हृद्यां कथां ते आख्यामि, श्रूयताम्,—

अस्ति वक्रोलकं नाम सुरपुरोपमं पुरम्। तस्मिन् सूर्य्यप्रभो नाम इन्द्रसमः भूपतिरासीत्, यः (ख) सौकर्य्योद्यतया मूर्त्त्या दत्तानन्दो हरिरिव वसुन्धरामिमां समुद्धृत्य चिरं

(क) न्यगादीत्—अवादीत (नि+गद+लुङ्-द)।

(ख) सुकर एव सौकर्य्यं (स्वार्थे ष्यञ्) तस्मिन् सौकर्य्ये—प्रजानां सुखसम्पादके कर्म्मणीत्यर्थः, उद्यतया—प्रवृत्तया, यद्वा,—सूकरस्य—आदिवराहस्य कर्म्म सौकर्य्यं—पृथ्वीभारवहनरूपमित्यर्थः, तस्मिन् उद्यतया—पृथ्वीभारवहने कृतोद्योगयेत्यर्थ, यद्वा,—सूकरस्य इयं सौकरी तया सौकर्य्या—सूकरसम्बन्धिन्या, आदिवराहसम्बन्धिन्या इत्यर्थः, द्विषद्वारिधिनिमग्नपृथ्वीसमुद्धरणक्षमत्वादिति भावः, अस्मिन् पक्षे इव-शब्दो लुप्तो द्रष्टव्यः, तया इव, उद्यतया—उन्नतया इत्यर्थः, विष्णुपक्षे,—सूकरस्य इयं सौकरी (सूकरशब्दः दन्त्योऽपि दृश्यते, तथा च,—"तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः" इति श-भेदः) तया सौकर्य्या—वाराह्या, वराहसम्बन्धिन्या इत्यर्थः, तथा उद्यतया—क्रमवर्द्धनेन अत्युच्छ्रितयेत्यर्थः। हरिरिवेति।—हरिर्यथा जलधिजलनिमग्नां वसुधामिमां दन्तेन समुद्धृत्य चिरं बभार, तथा अयं राजाऽपि द्विषद्वारिधिमग्नां पृथ्वीं स्वभुजबलेन समुद्धृत्य चिरं बभार इत्यर्थः। वराहरूपिणो हरेः पृथिव्युद्धरणकथा हरिवंशे यथा,—"ततो महात्मा मनसा दिव्यं रूपमचिन्तयत। किं नु रूपमहं कृत्वा उद्धरेयं वसुन्धराम्॥ जले निमग्नां धरणीं येनाहं वै समुद्धरे। इति सञ्चिन्त्य मनसा हरिर्नारायणः प्रभुः॥ जलक्रीडारुचिस्तस्मात् वाराहं रूपमस्मरत। हरिकद्धरणे युक्तस्तदाऽभूद्धव्य भूमिष्ठक"॥ इत्यारभ्य—"रूपमास्थाय विपुलं वाराहममितं हरिः। पृथिव्युद्धरणार्थाय प्रविवेश रसातलम्॥ * * *। भूत्वा यज्ञवराहोऽसौ द्रागधः प्राविशत् गुरुः। अद्भिः सञ्छादितामुर्वीं स तामार्च्छत् प्रजापतिः॥ रसातलजले मग्नां रसातलतलं गतः। प्रभुर्लोकहितार्थाय दंष्ट्राग्रेणोज्जहार ताम्॥ ततः स्वस्थानमानीय पृथिवीं पृथिवीधरः। मुमोच पूर्वं सहसा धारयित्वा धराधरः॥ ततो जगाम निर्वाणं मेदिनी तस्य धारणात्। चकार च नमस्कारं तस्मै देवाय विष्णवे॥ एवं यज्ञवराहेण भूत्वा लोकहितार्थिना। उद्धृता पृथिवी देवी सागराम्बुधरा पुरा"॥ इत्यन्तेन।

भुजे बभार। यस्य च (ग) प्रभोः धूमासङ्गेषु अश्रुपातः, शृङ्गारे मारसंलापः, द्वाःस्थेषु हेमदण्डाः राष्ट्रेषु आसन्। इत्थं सर्वसम्पदाधारस्य तस्यैका (घ) अनिर्वृतिरासीत् यत् अन्तःपुरिकासु स्थितास्वपि पुत्रो नोदपद्यत।

अत्रान्तरे ताम्रलिप्त्यां पुरि धनपालो नाम धनवतामग्रणीर्महावणिक् प्रतिवसति स्म। तस्य धनवती नाम एका कन्या विद्याधरीव शापात् सुरलोकाद्विच्युता समजनि। तस्यां यौवनस्थायां स वणिक् पञ्चतामवाप। तद्धनं सर्वं

(ग) प्रभोः,—अधिपस्य, राज्ञ इत्यर्थः, धूमासङ्गेषु—धूमसम्पर्केषु, नेत्रादौ इति शेषः, धूमासङ्गेषु अश्रुपातः, न तु शोकपीड़ादितः, एतेनास्य राज्ञः महाप्रभाववत्त्वं पुण्यवत्त्वञ्च सूचितम्, एवमुत्तरत्रापि उन्नेयम्। मारसंलापः,—स्मरविषयकोऽन्योन्याऽऽलापः, परस्परं कामसम्बन्धिनी कथा इत्यर्थः, न तु शृङ्गारादन्यत्र विषये मारसंलापः,—परस्परं मृत्युविषयिणी सङ्कथा ("मारो मृत्यौ स्मरे विघ्ने" इति मेदिनी। "संलापो भाषणं मिथः" इत्यमरश्च), द्वारि तिष्ठन्तीति तेषु द्वाःस्थेषु—द्वारपालेषु ["प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः" इत्यमरः। द्वार् + स्था + "सुपि—" (३।२।४ पा०) इति कः], हेमदण्डाः,—सौवर्णयष्टिविशेषाः, तेषां तद्ग्रहणस्य आचारत्वादिति भावः, न तु प्रजासु कासुचित् हेमदण्डाः,—परस्त्रीगमनादिदोषेण कर्षपरिमितसुवर्णप्रदानरूपदण्डाः इत्यर्थः, "कर्षं सुवर्णस्य सुवर्णसंज्ञम्" इत्युक्तेः। सुवर्णदण्डविधानार्हः अपराधो यथा मनौ,—"न सम्भाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत्। निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति" इति॥ अग्निपुराणेऽप्युक्तं यथा,—"प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेत् नृपः"। दद्यात् धेनुं न यः पालो गृहीत्वा भक्तवेतनम्। स तु दण्ड्यः शतं राज्ञा सुवर्णं वाऽप्यरक्षिता॥ दत्त्वानु विफलं कृत्वा सुवर्णं दण्डमर्हति"॥ इति। अनेन तस्य राज्ये न केऽपि लङ्घितमर्यादाः आसन् इति व्यञ्जितम्।

(घ) निर्वृतिः,—सुखं ("निर्वृतिः स्वस्थितावस्तं गमने च सुखे स्त्रियाम्" इति मेदिनी), सा न भवतीति अनिर्वृतिः,—असुखम्। अन्तःपुरस्य इमाः अन्तःपुरिकाः तासु अन्तःपुरिकासु—अवरोधवर्त्तिनीषु पत्नीषु इत्यर्थः। न उदपद्यत—न समजायत, बह्वीषु पत्नीषु वर्त्तमानास्वपि एकोऽपि पुत्रः तस्य नाभवदित्येव असुखकारणमिति निष्कर्षः।

(ङ) राजसाहाय्यात् तद्गोत्रजैराक्रान्तम्। ततो हिरण्यवती नाम तस्य वणिजो गेहिनी (च) अप्रकटस्थितानि रत्नाभरणानि गृहीत्वा तया दुहित्रा धनवत्या साकं दायादभयात् पलाय्य गुप्तं निशि गृहात् निर्ययौ। सा (छ) बहिरन्तश्च ध्वान्तेनान्धकारिता सुताहस्तावलम्बिनी कृच्छ्रात् पुरात् बहिः प्रायात्।

तत्र (ज) सन्तमसे यान्ती विधियोगात् अलक्षितं शूलाग्रारोपितस्थितं चौरम् अंसेन अताडयत्। स चौरः,—"मम जीवः (झ) त्वदंसाग्रघट्टनया अधिकपीडितः, हा! क्षते क्षारमेतन्मे केन दत्तम्?" इत्यभाषत। ततः सा वणिग्वधूः,—"कोऽसि?" इति भयात् पप्रच्छ। तांश्च चौरः

---

(ङ) राजसाहाय्यात्—तद्देशीयराज्ञ आनुकूल्यात्, तस्य—धनपालस्य, गोत्रजैः,—वंशजैः ("सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानः" इत्यमरः) तद्गोत्रजैः,—धनपालस्य ज्ञातिभिः, आक्रान्तम्—अधिकृतम्, बलाद्गृहीतमिति यावत्।

(च) अप्रकटम्—अप्रकाशं यथा तथा, अप्रकटे—अप्रकाशे स्थाने इति वा, स्थितानि—रक्षितानि अप्रकटस्थितानि—अन्येषामज्ञाततया स्थापितानि, गुप्तानीति यावत्। गुप्तम्—अप्रकाशम्, अन्यैरलक्षितं यथा तथेत्यर्थः।

(छ) बहिरन्तश्च ध्वान्तेन बहिर्ध्वान्तेन—बाह्यान्धकारेण, नैशान्धकारेणेत्यर्थः, अन्तर्ध्वान्तेन—आन्तरान्धकारेण, चिन्ताप्रमादरूपेणेत्यर्थः, अन्धकारिता—कृतान्धकारा, आच्छन्ना इत्यर्थः, बाह्यान्धकारेणाच्छन्ना सती अदृष्टा, आन्तरान्धकारेण आक्रान्ता सती अप्रसन्नाचिभा इति भावः।

(ज) सन्तमसे—विष्वक्तमसि, सर्वदिग्व्यापिन्यन्धकारे इत्यर्थः [सम्+तमस्+"अवसमन्धेभ्यस्तमसः" (५।४।७९ पा०) इति समासान्तः अ-प्रत्ययः। "तमः। विष्वक् सन्तमसम्" इत्यमरः]। विधियोगात्—दैववशात्। शूलाग्रे—शूलोपरि, आरोपितम्—उत्तोलितश्चेति तत् स्थितश्चेति शूलाग्रारोपितस्थितं—राजपुरुषैः शूलशिखराधिष्ठापितावस्थितम् (विशेषणसमासः)।

(झ) तव अंसाग्रेण—स्कन्धप्रान्तेन, स्कन्धदेशेनेति यावत्, घट्टना—ताडना तया अंसाग्रघट्टनया—स्कन्धाघातेन। क्षते क्षारमित्यत्र इव-शब्दः लुप्तो द्रष्टव्यः, क्षतस्थाने लवणप्रयोग इवेत्यर्थः, एतत्—घट्टनमित्यर्थः।

प्रत्युवाच,—"अहं चौरः इति (ञ) शूचितः, अद्यापि शूले स्थितस्यापि पापस्य मे असवः नोत्क्रामन्ति। भवतु आर्य्ये! ब्रूहि मे, का त्वम्? क्व च प्रयासि?" इति। तदाकर्ण्य सा वणिक्पत्नी सर्वं (ट) स्वोदन्तं तमाह स्म, तावच्च भगवान् श्वेतभानुः प्राचीमुखमुदभासयत्। ततो दिक्षु (ठ) प्रकाशासु स चौरस्तां वणिक्सुतां धनवतीं दृष्ट्वा तां तन्मातरमुवाच,—"आर्य्ये! शृणु मे एकां प्रार्थनां, काञ्चनसहस्रं ते दास्यामि, त्वमिमां ते सुतां मह्यं देहि"। "किमेतया दत्तया ते?" इति सस्मितं तया अभिहितः स चौरः पुनरब्रवीत्,—"नास्ति मे गतायुषः पुत्रः, न चापुत्रो (ड) लोकानश्नुते, तदेषा मदाज्ञया कुतश्चित् पुत्रं जनयेत्, स मे क्षेत्रजः पुत्रो

(ञ) शूचितः,—विद्धः, छिद्रित इत्यर्थः ("सूचना व्यधने दृष्टौ गन्धनेऽभिनयेऽपि च" इति मेदिनी), राजपुरुषैरिति शेषः। असवः,—प्राणाः (असुप्राणशब्दौ नित्यबहुवचनौ, "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः), उत्क्रामन्ति—अपगच्छन्ति, बहिर्निर्गच्छन्तीत्यर्थः [उत्+क्रम+लट्-अन्ति "क्रमः परस्मैपदेषु" (७।३।७६ पा०) इति दीर्घः]।

(ट) स्वोदन्तं—निजवृत्तान्तं ("वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः)। आह स्म—उवाच [ब्रू+लट् तिप् "ब्रुवः पञ्चानां—" (३।४।८४ पा०) इति तिपो णल्, ब्रुव आहादेशः]। श्वेताः,—शुभ्राः, भानवः,—किरणा यस्य सः श्वेतभानुः,—सितांशुः, चन्द्र इत्यर्थः, प्राच्याः,—पूर्वस्याः दिशः, मुखम्—अंशविशेषमित्यर्थः, तत् प्राचीमुखं—पूर्वदिगङ्गनाऽऽननम्, उदभासयत्—उद्दीपयत् (उत्+भास+णिच्+लङ् द), व्यदर्शयेति भावः।

(ठ) प्रकाशासु—स्फुटासु, चन्द्रोदयेनान्धकारापगमात् प्रव्यक्तासु सतीषु इत्यर्थः ("प्रकाशोऽतिप्रसिद्धे स्यात् प्रहासातपयोः स्फुटे" इति विश्वः)।

(ड) लोकान्—स्वर्गादिलोकानित्यर्थः, अश्नुते—प्राप्नोतीत्यर्थः (अश+लट्-ते)। कुतश्चित—कस्माच्चित् पुरुषान्तरात्। क्षेत्रे—कलत्रे, मृतस्य क्लीबस्य पीडितस्य वा स्त्रियां इति यावत्, जायते—पुरुषान्तरेण यथाशास्त्रनियोजितेन उत्पद्यते यः सः क्षेत्रजः,—क्षैत्रियः, "यस्तल्पजः प्रमृतस्य क्लीबस्य व्याधितस्य वा। स्वधर्म्मेण नियुक्तायां स पुत्रः

भविता, इत्यहमेतां प्रार्थये, तन्मे मातः! सफलयाभीप्सितम्"। तदाकर्ण्य सा वणिग्योषित् लोभात्,—"तथा" इति प्रतिपद्य कुतोऽपि (ढ) सलिलमानीय चौरस्य तस्य पाणौ,—"सुतेयं मे तुभ्यं दत्ता" इति अपातयत्।

अथ स तद्दुहितरि यथाम्नामाम्नां दत्त्वा तां वणिग्योषित-मवादीत्,—"गच्छ मातः! अमुष्य वटस्य अधः खनित्वा तन्मे रक्षितं स्वर्णसहस्रं गृहाण। (ण) गतासोश्च मे देहं युक्त्या दाहयित्वा, अस्थीनि तीर्थे निक्षिप्य च, ससुता वक्रोलकं पुरं व्रज, तत्र सूर्य्यप्रभे राजनि सौराज्यसुखिते जने निरुप-द्रवनिश्चिन्ता यथेच्छं स्थास्यसि" इत्युक्त्वा तृषितः तयोपाहृतं जलं पीत्वा शूलव्यथया समुत्क्रान्तजीवितः समभवत्। ततः सा वणिक्पत्नी गत्वा तस्मात् वटवृक्षतलात् स्वर्णं गृहीत्वा

क्षेत्रजो मतः" ॥ इत्युक्तलक्षणकः द्वादशविधपुत्रमध्ये पुत्रभेद इत्यर्थः [ क्षेत्र+जन+ "सप्तम्यां जनेर्डः" (३।२।९७ पा०) इति डः। "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति मेदिनी ]। इति—समाप्तौ: (अव्य०)। सफलय—पूरय इत्यर्थः (सफलशब्दात् करोत्यर्थे णिचि लोट्-हि)।

(ढ) सलिलमिति।—दानकाले हस्ते जलप्रदानस्य शास्त्रसम्मतत्वात्, तथा च विष्णुधर्मोत्तरे,—"द्रव्यस्य नाम गृह्णीयात् ददानीति ततो वदेत्। तोयं दद्यात् तथा दाता दाने विधिरयं स्मृतः" ॥ इति। आपस्तम्बेऽप्युक्तं,—"सर्वाण्युदकपूर्वाणि दानानि यथाश्रुति वीहारे" इति।

(ण) गतासोः,—गतप्राणस्य, मृतस्येत्यर्थः। युक्त्या—न्यायेन, यथाविधि इत्यर्थः, यद्वा,—युक्त्या—योगेन, केनचिदुपायेनेत्यर्थः ("युक्तिः स्त्री न्याययोगयोः" इति मेदिनी)। सौराज्येन—सुराजत्वेन हेतुना, सुखिते—सञ्जातसुखे सौराज्यसुखिते—राज्ञः सुशासनगुणेन प्राप्तसुखे इत्यर्थः। निरुपद्रवेण—उपद्रवराहित्येन हेतुना, निश्चिन्ता—निर्भावना निरुपद्रवनिश्चिन्ता—निर्विघ्ननिर्भावना सती (विश०। ३या तत्पु०)। उपाहृतम्—आनीतम् (उप+आ+हृ+क्तः)। समुत्क्रान्तम्—अपगतं, जीवितं—जीवनं यस्य तादृशः समुत्क्रान्तजीवितः,—विगतप्राण इत्यर्थः (विश०। बहुव्री०)।

प्रसुता सुगुप्तं भर्त्तुः सुहृदो गृहमगात्। तत्र स्थित्वा च युक्त्या तच्चौरकलेवरं दाहयित्वा तदस्थीनि च तीर्थेषु क्षेपयामास।

अथान्येद्युर्गृहीतगुप्तार्था प्रसुता प्रयान्ती क्रमेण वक्रोलकं पुरम् आससाद। तत्र वसुदत्तनाम्नो वणिजः सकाशात् गृहमेकं क्रीत्वा तया धनवत्या सुतया सह तस्मिन्नुवास। तस्मिंश्चावसरे विष्णुस्वामीति कश्चित् (त) उपाध्यायस्तत्र वसति स्म; तस्य मनःस्वामी नाम अतिरूपवान् कश्चित् विप्रः शिष्योऽभवत्। स (थ) विद्याभिजनसम्पन्नोऽपि यौवनमत्तः तत्रत्यां हंसावलीं नाम विलासिनीं चकमे। सा च (द) सौवर्णदीनारशतपञ्चकं भाटिम् अन्वहमग्रहीत्, तावन्ति च धनानि अप्राप्य असौ विप्रयुवा नितरां क्षामवपुश्चिन्ताऽऽकुलोऽभवत्। एकदा सा वणिक्सुता हर्म्यस्था तादृशं क्षामकलेवरमपि (ध) अभिरामं तं युवानं दृष्ट्वा तद्रूपेणाऽऽकृष्टचित्ता भर्त्तुश्चौरस्य आदेशं स्मरन्ती मातरमुवाच,—"अम्ब! विप्रसुतस्यास्य रूपयौवनं विश्वस्य नयनामृतवर्षिणी पश्य"। एतदाकर्ण्य तस्मिन्

(त) उपाध्यायः,—"एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते"॥ इत्युक्तलक्षणः अध्यापकः ("उपाध्यायोऽध्यापकः" इत्यमरः)।

(थ) विद्या—ज्ञानम्, अभिजनः,—कुलं, सद्वंशजातत्वमित्यर्थः, यद्वा,—अभिजनः,—ख्यातिः ("भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे। कुलेऽपि च पुमान्" इति मेदिनी), ताभ्यां सम्पन्नः,—युक्तः विद्याऽभिजनसम्पन्नः,—विद्याकुलसमन्वितः विद्याख्यातिसमन्वितो वा (द्विप०। ३या तत्पु०)। विलासिनीं—भोगिनीं, वारविलासिनीमिति यावत्, चकमे—कामयामास (कम+लिट्-ए)।

(द) सौवर्णदीनारशतपञ्चकं—पञ्चशतसुवर्णमुद्रां, भाटिं—शुल्कमित्यर्थः। क्षामं—क्षीणं, वपुः,—शरीरं यस्य सः क्षामवपुः,—क्रशाङ्गः।

(ध) अभिरामं—मनोहरम्। आदेशम्—आज्ञां, कुतश्चित् पुरुषान्तरात् क्षेत्रज-पुत्रसञ्जननरूपामिति भावः। पथस्य—मार्गे परिदृश्यमानस्येत्यर्थः। नयनयोः,—चक्षुषोः,

(न) बद्धभावां तामवेत्य सा वणिक्पत्नी अचिन्तयत्,—"दुहिता मे भर्त्तुराज्ञया कश्चित् सुतार्थं वरणीयः, तस्मादेष एव किं नाश्रयते ?" इत्यालोच्य कामपि चेटीं तमानेतुं व्यसृजत्। सा च चेटी विजने गत्वा तस्मै (प) तत्सन्देशं शशंस। स च द्विजयुवा (फ) व्यसनी तदाकर्ण्य तामभाषत, —"यदि हंसावलीहितैः दीनारशतपञ्चकं मह्यं दीयते, तदा एकां यामिनीं गच्छामि"। इति तेनोक्तया चेट्या आगत्य तथैवोक्ता वणिक्स्त्री तस्या हस्तेन तस्मै तद्धनं प्राहिणोत्। तदादाय मनःस्वामी तस्या दुहितुरावासं ययौ, आगत्य च स (ब) चकोर इव ज्योत्स्नां तां ददर्श ननन्द च। तया समं (भ) सम्भोगलीलया तां रात्रिं नीत्वा प्रातः सुगुप्तं निर्गत्य यथाऽऽगतमगात्। साऽपि वणिक्सुता तस्मात् सगर्भाऽभूत्।

---

अमृतं—सुधामिव, वर्षन्,—विसृजन् इति तादृशं नयनामृतवर्षिणी—नेत्रसुधास्राविणी, नयनतर्पणकरी इत्यर्थः (विण०। वृष + ग्रहादित्वात् णिनिः)।

(न) बद्धः,—असुक्तः, सुदृढं सञ्जात इत्यर्थ., भावः,—अभिप्रायः, चित्तविकार इति यावत्, यस्याः सा तां बद्धभावां—जातानुरागामित्यर्थः (विण०। बहुव्री०)। वरणीयः,—सत्कारपूर्वकं नियोजनीयः, भर्तृस्थाने इति शेषः। चेटीं—दासीम्। व्यसृजत्—प्रेरयदित्यर्थः (वि + सृज + लङ्-द)।

(प) तस्याः,—हिरण्यवत्याः धनवत्या वा, सन्देशं—वाचिकं, वाक्येन यत् कथितं तदित्यर्थः ("सन्देशवाक् वाचिकं स्यात्" इत्यमरः), तत्सन्देशं—तस्या वचनमित्यर्थः, शशंस—कथयामास (शन्स + लिट्-णल्)।

(फ) व्यसनी—स्त्र्यासक्तः, कामासक्त इति यावत्, यद्वा,—व्यसनी—पापी, अशुभाचारी वा, सर्वथैव वेश्याऽऽसक्तत्वादिति भावः, हंसावलीलाभे निष्फलोद्यमी वा ("व्यसनन्त्वशुभे सक्तौ पानस्त्रीमृगयादिषु। दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे" इति मेदिनी)।

(ब) चकोर इव ज्योत्स्नां—चकोरो यथा ज्योत्स्नां दृष्ट्वा नन्दति, तथा सोऽपि तां दृष्ट्वा ननन्देत्यर्थः।

(भ) सम्भोगलीलया—सुरतक्रीडया।

अथ कालेन सा सुलक्षणं पुत्रमसूत। तां सुतोत्पत्त्या परितुष्टां समातृकां निशि हरः स्वप्ने (म) प्रदर्शितवपुरादिदेश,—"हेमसहस्रेण युक्तम् इमं शिशुं राज्ञः सूर्य्यप्रभस्य द्वारि नीत्वा मञ्चस्थं कृत्वा त्यज, एवं ते क्षेमं भविता" इति समादिष्टा हरेण सा वणिक्सुता तन्माता च प्रबुध्य अन्योन्यमूचतुः, तत्यजतुश्च भगवत्प्रत्ययात् तं राजद्वारं नीत्वा बालकम्। (य) तावच्च तमपि सूर्य्यप्रभं पुत्रचिन्तासमुत्सुकं नृपं स्वप्ने भगवान् वृषध्वजस्तथैव समादिशत्,—"राजन्! उत्तिष्ठ, सिंहद्वारि सकाञ्चनो बालकः तिष्ठति केनापि स्थापितोऽतिसुलक्षणः मञ्चस्थितः, तं द्रुतं गृहाण"। इति शम्भुनाऽऽदिष्टः स राजा प्रातः प्रबुध्य तथैव द्वाःस्थैः प्रविश्य विस्मितः स्वयं निर्ययौ। दृष्ट्वा सिंहद्वारे सहेमचयं मञ्चस्थं शिशुं (र) रेखाच्छत्रध्वजाङ्कपाणिपादं शुभाऽऽकृतिं,—"शम्भुना दत्तोऽयं

(म) प्रदर्शितं वपुः,—निजविग्रहः येन तादृशः प्रदर्शितवपुः,—निजमूर्त्तिं दर्शयित्वेत्यर्थः (विशे०। बहुव्री०)। मञ्चे—खट्वायां ("मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समाः" इत्यमरः), तिष्ठति इति तादृशं मञ्चस्थं—पर्य्यङ्कशायिनमित्यर्थः [ मञ्च + स्था + "सुपि स्थः" (३।२।४ पा०) इति कः ]। क्षेमं—कुशलम्। प्रबुध्य—जागरित्वा। भगवति—हरे, प्रत्ययात्—विश्वासात् भगवत्प्रत्ययात्—शिववाक्ये विश्वासातिशया-दित्यर्थः (७मी तत्पु०)।

(य) तावत्—तदा, यदा धनवतीं समातृकां स्वप्ने प्रत्यादिदेश, तदैवेत्यर्थः। वृषः ध्वजः,—चिह्नं यस्य सः वृषध्वजः,—शङ्करः, तस्य वृषवाहनत्वादिति भावः।

(र) रेखा—दण्डाकारचिह्नविशेषः, छत्रं—छत्राकारचिह्नविशेषः, ध्वजः,—पताकाकारचिह्नविशेषः, तेषाम् अङ्कः,—चिह्नं, रेखा वा, तदाकृतिरेखा इत्यर्थः, यद्वा,—तेषाम् अङ्कः,—स्थानम्, अवस्थानमित्यर्थः ("अङ्को रूपक-भेदाङ्कचिह्नरेखाऽऽभिभूषणे। रूपकांशान्तिकोत्सङ्गे स्थाने" इति मेदिनी), पाणिपादे—करचरणे यस्य तं रेखाच्छत्रध्वजाङ्कपाणिपादं—दण्डच्छत्रपताका-चिह्नितकरचरणं, रेखादीनां राजचिह्नत्वात् राजलक्षणान्वितमिति भावः, शुभाऽऽकृतिं

समुचितः पुत्रः” इति सानन्दं ब्रुवन्, स्वयं बाहुभ्यां गृहीत्वा अन्तःपुरं विवेश; महोत्सवं कृत्वा च द्वादशेऽहनि पुत्रं नाम्ना चन्द्रप्रभमकरोत्। इत्थं स राजपुत्रश्चन्द्रप्रभः क्रमेण (ख) वपुषेव गुणौघेनापि आश्रितानन्ददायिना सर्वान् समनुरञ्जयन्, शनैर्युवा सन् शौर्य्यौदार्य्यश्रुतादिभिरावर्जितप्रकृतिमण्डलः पृथिवीभारवहनक्षमः समजायत।

अथ सूर्य्यप्रभः पिता तादृशं तं दृष्ट्वा राज्ये अभिषिच्यैव वृद्धो वाराणसीं ययौ। ततश्च तस्मिन् (ग) नयशालिनि तनये पृथ्वीं शासति स राजा तत्र वाराणस्यां तीव्रतपसा तनुमजहात्। ततः स धार्मिको नरपतिः चन्द्रप्रभः पितृनिधनं श्रुत्वा (घ) अनुशोच्य कृतक्रियः सर्वान् सचिवान् अभ्यधात्,—

—सुन्दराकारमित्यर्थः। समुचितः,—सुयोग्यः इत्यर्थः। द्वादशेऽहनि—द्वादशदिवसे, तत्रैव नामकरणस्य श्रुतिविहितत्वात्, यदुक्तम्,—“एकादशे द्वादशे वा पिताऽस्य नाम कुर्य्यात्” इति श्रुतिः।

(ख) वपुषेव—शरीरेणेव, गुणौघेनापि—गुणसमूहेनापि, रमणीयमूर्त्तिर्यथा आश्रितजनानामानन्ददायिनी अभूत, तस्य गुणराशिरपि तथैव आनन्ददायकः अभूत, रूपवान् गुणवांश्च स आसीत् इति भावः। समनुरञ्जयन्—प्रीणयन् (सम्+अनु+रञ्ज+णिच्+शतृ)। शौर्य्य—शूरत्वम्, औदार्य्यम्—उदारता, दानशीलता इत्यर्थः, श्रुतं—शास्त्रज्ञानं तदादिभिः शौर्य्यौदार्य्यश्रुतादिभिः,—वीरत्वदातृत्वविद्यावत्त्वादिभिः, आवर्जित—वशीकृत, प्रकृतिमण्डलं—पौरवर्गः (“प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गे” इति मेदिनी) येन सः आवर्ज्जितप्रकृतिमण्डलः,—वशीकृतप्रजासमूहः (विशे०। बहुव्री०)।

(ग) नयेन—नीत्या, नीतिशास्त्रानुमोदितव्यवहारेणेत्यर्थः, शालते—शोभते, सर्वोत्कर्षेण वर्त्तते इति तादृशि नयशालिनि—राजनीत्यभिज्ञे [नय+शाल+“बहुलमाभीक्ष्ण्ये” (३।२।८१ पा०) इति णिनिः]। अजहात्—अत्यजत् (हा+लङ् द)।

(घ) अनुशोच्य—शोकं कृत्वा (अनु+शुच+णिच्+ल्यप्), पितरमिति शेषः, कृता—सम्पादिता, क्रिया—कर्म्म, श्राद्धादिकर्म्म इत्यर्थः, यथा,—क्रिया—

"तातस्य केनापि नाहमनृणो भवितुं क्षमः, तथापि स्वहस्तेन अस्य एकां निष्कृतिं ददामि, गङ्गायामस्य अस्थीनि नीत्वा क्षिपामि, गयाञ्च गत्वा सर्वपितृभ्यः पिण्डं ददामि, एतत्प्रसङ्गेन च मे तीर्थयात्रा भविष्यति"। इत्युक्तवन्तं राजानं मन्त्रिणो व्यजिज्ञपन्,—"देव! न तावदिदं ते कर्त्तुं युक्तं, राज्यं हि (ष) बहुच्छिद्रं, पितुरुपक्रिया च ते पुरोहितेनापि सम्पद्यते। (स) स्वधर्मपालनात् तीर्थयात्रा न ते साधीयसी, बहुपापं क्व पान्थत्वम्? नित्यगुप्तः पार्थिवश्च क्व?"। इति मन्त्रिणां वचः समाकर्ण्य चन्द्रप्रभोऽब्रवीत्,—"अलं (ह) विकल्पेन, पित्रर्थे अवश्यमेव मया गन्तव्यम्; तीर्थानि च मया गन्तव्यानि यावत् अहं शक्नोमि, पश्चात् क्षणविनश्वरे शरीरे का वित्ति

निष्कृति, श्राद्धतर्पणादिना पितृऋणात् मुक्तिरित्यर्थः ("क्रिया तूपायचेष्टयोः। आरम्भे निष्कृतौ पूजासम्प्रधारणकर्म्मसु" ॥ इति मेदिनी), येन सः कृतक्रियः,—निर्वाहितौर्द्धदेहिककर्म्म इत्यर्थः (विण०। बहुव्री०)। अभ्यधात्—अवोचत [अभि+धा+लुङ्-द "गातिस्था—"(२।४।७७पा०) इति सिचो लुक्]। निष्कृतिम्—ऋणशुद्धिरूपां निर्मुक्तिं, यद्वा,—निष्कृतिम्—उद्धार, गयायाञ्चैव पिण्डदानेन प्रेतत्वमुक्तिरूपामिति यावत्।

(ष) बहूनि छिद्राणि—दूषणानि, रिपुप्रयुक्तभेदादिदोषाः इत्यर्थः ("छिद्रं विवररन्ध्रवत्। गर्त्ते दोषे"। "छिद्रं दूषणरन्ध्रयोः" इति हैममेदिन्यौ), यस्य यत्र वा तत् बहुच्छिद्रं—प्रभूतदोषाऽऽकरमित्यर्थः, राजानुपस्थितौ अमात्यादीन्यङ्गानि भेदयित्वा रिपुभिरात्मसात्करणादिति भावः, पितुरुपक्रिया—तीर्थश्राद्धादिना पितुरुपकारसाधनमित्यर्थः।

(स) स्वधर्म्मपालनात्—प्रजापालन-राज्यरक्षणरूपराजधर्म्मानुष्ठानादित्यर्थः। इयमनयोरतिशयेन साध्वी इति साधीयसी—प्रशस्यतरा [साधु+"द्विवचनविभज्यो—" (५।३।५७ पा०) इति ईयसुनि कृते "टेः" (६।४।१५ पा०) इति भस्य टिलोपः, ततः उगित्वात् ङीप्], बहुपाप—बहुपापफलमित्यर्थः, अनशनक्लेशादिबहुदुःखकरत्वादिति भावः। नित्यगुप्तः,—नित्यं सुरक्षितः; क्वद्वयम् उभयोर्महदैषम्यसूचनार्थं, पान्थत्वपार्थिवत्वयोः तुलनैव न जायते इति भावः।

(ह) विकल्पेन,—विरुद्धकल्पनेन, वैमत्येनेत्यर्थः, पित्रर्थे—पितुः परलोके

किं भावि? यावदहमागच्छामि तावत् युष्माभिः राज्यं रक्ष्यम्” इति। इत्थं राज्ञो निश्चयं श्रुत्वा मन्त्रिणस्तूष्णीमासन्। ततः स भूपतिः सर्वं (क) प्रयाणसञ्चारं सज्जं चक्रे।

अथ शुभेऽहनि स राजा स्नातो (ख) हुताग्निः ब्राह्मणानर्चयित्वा, सज्जितं रथमास्थाय प्रयतः शान्तवेगः सामन्तान् राजपुत्रान् पौरजानपदानपि आसीमान्तानुयायिनः सन्निवर्त्य सम्भाष्य च, ब्राह्मणैर्वाहनारूढैः पुरोहितेन च सह प्रतस्थे। गच्छंश्च पथि विचित्रदेशभाषादिविलोकनविनोदितः क्रमात् बहून् देशान् (ग) क्रामन् जाह्नवीं प्राप, ददर्श च तां जलकल्लोलपङ्क्तिभिः जीवानां त्रिदिवारोहसोपानपद्धतिं सृजन्ती-

---

सुखभागार्थम इत्यर्थः। भावि—भविष्यतीत्यर्थः [भू+“भविष्यति गम्यादयः” (३।३।३ पा०) इति भविष्यदर्थे णिनिः]।

(क) सञ्चरति अनेन इति सञ्चारः तं सञ्चारं—गोऽश्वशकटादिकं, प्रयाणाय—गमनाय, प्रयाणे—गमनकाले इति वा, सञ्चारं प्रयाणसञ्चारं—यात्रोपयोगियानवाहनादिकमित्यर्थः, यद्वा,—सञ्चार्यते—स्थानान्तरं नीयते यत् तत् सञ्चारम—आवश्यकीयद्रव्यादिकं, प्रयाणाय प्रयाणे वा सञ्चारं प्रयाणसञ्चारं—यात्रोपयोगिद्रव्यजातमित्यर्थः (४र्थी ७मी वा तत्पु०), सज्जं—सम्भृतं, सङ्गृहीतमित्यर्थः ("सज्जः स्यात् सन्नद्धे सम्भृते त्रिषु" इति मेदिनी)।

(ख) हुतः,—होमेनार्चितः, अग्निर्येन तादृशः हुताग्निः,—अनुष्ठितहोमविधिः (विश०। बहुव्री०)। प्रयतः,—पवित्रः, बाह्यशुद्धिसम्पन्न इत्यर्थः ("पवित्रः प्रयतः पूतः" इत्यमरः), शान्तः,—निवृत्तः, वेगः,—कामादीनां मनोदोषाणां प्रसरः यस्य सः शान्तवेगः,—नियतेन्द्रिय इत्यर्थः (विश०। बहुव्री०), सामन्तान्—स्वराज्यानन्तरवर्त्तिदेशाधिपान्, करदानिति यावत्। आसीमान्तं—राज्यसीमान्तपर्य्यन्तम्, अनुयान्ति ये ते तान् आसीमान्तानुयायिनः,—सीमान्तपर्य्यन्तमनुगमनशीलान् [अनु+या+ग्रहादित्वात् णिनिः, "आतो युक्—" (७।३।३३ पा०) इति युक्]।

(ग) क्रामन्—अतिगच्छन् [क्रम+लटः शतृ: "क्रमः परस्मैपदेषु" (७।३।७६ पा०) इति दीर्घः]। जलस्य कल्लोलपङ्क्तिभिः,—महत्तरङ्गराजिभिः, सोपानवत् उत्तरोत्तरमुच्छ्रायवतीभिरिति भावः ("अथोर्मिषु। महत्सूल्लोलकल्लोलौ"

मिव, हिमवत्प्रभवां गौरीं प्रतीर्ष्यया शम्भोः क्रीड़या कृतकेशग्रहां देवर्षिगणवन्दिताम्। ततश्च राजा रथादवरुह्य यथाविधि कृतस्नानविधिः पितुः सूर्य्यप्रभस्य अस्थीनि गङ्गाऽम्भसि निचिक्षेप। तत्र च यथाविधि दानानि दत्त्वा कृतश्राद्धो रथमारुह्य प्रस्थितः क्रमेण प्रयागं तीर्थमवाप। तत्र चोपोष्य कृतस्नानः श्राद्धदानादिकञ्च यथाविधि कृत्वा वाराणसीं जगाम। तस्याञ्च त्रीणि दिनानि उपोष्य वृषभध्वजमर्च्चयित्वा गयां प्रति प्रययौ।

क्रमेण नानाविधानि वनानि गिरीन् नदीश्चातिक्रम्य (घ) गयाशिरः प्राप। तत्र विधिवत् (ङ) भूरिदक्षिणं श्राद्धं

---

इत्यमरः)। त्रिदिवारोहाय—स्वर्गाधिरोहणाय, सोपानपङ्क्तिम्—अधिरोहणीपङ्क्तिं ("पद्धतिः पङ्क्तिवर्त्मनोः" इति मेदिनी) त्रिदिवाऽऽरोहसोपानपद्धतिं—स्वर्गोत्थानाऽऽरोहणश्रेणिं, कश्चित् शिरोगृहादिकमारुरुक्षुः यथा सोपानश्रेणिसाधनेन उत्सर्पति, तद्वत् स्वर्गाऽऽरोढ़कामानां गङ्गायामवगाहमानानां सोपानवदुत्तरोत्तरमुन्नतायमानाभिः महोर्म्मिराजीभिः गमनमार्गे निर्मितेव गङ्गा इति निष्कर्षः। हिमवत्प्रभवां—हिमालयनन्दिनीं, गौरीं—सपत्नीं, शम्भुत्सङ्गवर्त्तिनीमिति भावः, ईर्ष्यया—सपत्नीसुलभया इति भावः, शम्भोः,—हरस्य, पत्युरिति यावत्, क्रीडया—अवज्ञयेत्यर्थः ("क्रीडा केलिप्रकारे स्यात् खेलाऽवज्ञानयोरपि" इति मेदिनी), सपत्नीविद्वेषजनितयेति भावः, कृतः केशानां ग्रहः,—ग्रहणं यया तां कृतकेशग्रहां—मुष्टिधृतकेशामित्यर्थः, सपत्नीसमादरासहिष्णुतया इति सपत्नीसन्निधौ स्वस्या अपि स्वामिवाल्लभ्यविख्यापयिषया इति वा भावः, जाह्नव्याः शिवशिरोनिवासत्वादेवमुत्प्रेक्षेति मन्तव्यम्।

(घ) गयाशिरः,—पञ्चक्रोशव्यापिगयाक्षेत्रमध्ये क्रोशमितं गयासुरस्य शिरोनिधानस्थानं, तथा च,—"मुण्डपृष्ठाच्च पूर्वांशम् पश्चिमे दक्षिणोत्तरे। सार्द्धं क्रोशद्वयं मानं गयेति ब्रह्मणेरितम्॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः। तन्मध्ये सर्वतीर्थानि त्रैलोक्ये यानि सन्ति वै॥ श्राद्धकृद्यो गयाक्षेत्रे पितॄणामनृणो हि सः। शिरसि श्राद्धकृद्यस्तु कुलानां शतमुद्धरेत्"॥ (वायु पु० गयामा० १म अ०) इति।

(ङ) भूरयः,—प्रभूताः, दक्षिणाः,—यज्ञान्ते तत्कर्म्मणः साङ्गतार्थं यथाविधि

विधाय गयाकूपे पिण्डं ददतोऽस्य पिण्डमादातुं त्रयो मानुषपाणयः समुत्तस्थुः । तदवलोक्य स राजा (च) विभ्रान्तः, —"किमेतत् ?" इति विमूढमतिः "कस्मिन् पाणौ पिण्डं क्षिपामि" इति निजान् ब्राह्मणानुवाच । "देव ! अयं तावदेकश्चौरस्य पाणिर्निश्चितं, यस्मिन् लौहमयः (छ) शङ्कुर्दृश्यते, द्वितीयश्च करोऽयं ब्राह्मणस्य, यतो धृतपवित्रो दृश्यते, तृतीयश्चायं पाणिर्महाराजस्य साङ्गुलीयः सुलक्षणो विभाव्यते ; तत्र विज्ञा वय, क्वायं पिण्डो निक्षेप्यः, किमिदं भवेत्" इति । इति तैर्द्विजैरुक्तो राजा निश्चयं कर्त्तुं नाशकत्" ।

इति विचित्रां कथामाख्याय वेतालः स्कन्धस्थित एव पप्रच्छ,—"राजन् ! कस्मिन् हस्ते स पिण्डो देय इति संशयं छिन्धि, स्मर्य्यतां त्वया (ज) प्राक्तनः समयः" इति । राजाऽब्रवीत्,—"वेताल ! यतोऽसौ राजा चन्द्रप्रभः क्षेत्रजः चौरस्यैव पुत्रः, नान्यस्य, तस्मात् चौरहस्त एव स पिण्डो

---

दानविशेषाः यत्र तं भूरिदक्षिणं—प्रचुरदक्षिणायुक्तं ( विश० । बहुव्री० ) । गयाकूपे —गयास्थे कूपभेदे, तत्र पिण्डदानस्य विधानात्, यदुक्तं वायवीये,—"आत्मजो वाऽन्यजो वाऽपि गयाकूपे यदा तदा । यन्नाम्ना पातयेत् पिण्डं तं नयेत् ब्रह्म शाश्वतम्" ॥ इति ।

(च) विभ्रान्तः,—संशयाकुलः इत्यर्थः ।

(छ) शङ्कुः,—अस्त्रविशेषः, सन्धिखननसाधनं इति यावत ("शङ्कुः पत्रशिराजाले शस्त्रे कीलकशम्भुषु । यादोऽस्त्रभेदयोर्मेढ्रे" इति हैमः ) । धृतपवित्रः,—गृहीतकुशः ( "पवित्रं तु मध्ये ताम्रे कुशे जले । अर्घोपकरणे चापि पवित्रा तु नदीभिदि" इति हैमः ) ।

(ज) प्राक्तनः,—पूर्वतनः, प्रथमकृत इति यावत, समयः,—शपथः, जानन्नपि मिथ्याकथने शिरसः शतधा स्फुटनरूपः, सत्यकथने च वेतालस्य पुनः शिंशपावृक्षारोहणरूप इति यावत् ( "समयः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः ) ।

देयः। विप्रस्य (झ) जनकस्यापि स पुत्रो न भवितुमर्हति, तेन हि धनेन एकां रजनीम् आत्मा विक्रीतः। राज्ञः सूर्य्यप्रभस्यापि (ञ) संस्कारदानवर्द्धनादिभिः असौ पुत्रो भवेत्, यदि तत्कृते मञ्जूषस्यास्य स्वर्णसञ्चयो न प्राप्येत; राजा सूर्य्यप्रभो न्यस्तधनेनास्य वर्द्धनादिकमकरोत्, तन्माता यस्य हस्ते समर्पिता, यस्याऽऽज्ञया राज्ञस्तस्य चन्द्रप्रभस्य जननं, यस्य च तत् निखिलं धनं तन्मात्रा समासादितं, तेनैव विप्रसुतात् वीजं क्रीतं, तस्यैव चौरस्य स क्षेत्रजः पुत्रः, तस्मात् तस्यैव हस्ते पिण्डो देय इति मे मतिः"।

इत्याकर्ण्य स वेतालः पुनरलक्षितः नृपस्कन्धात् तमेव शिंशपातरुमाश्रयत्। राजाऽपि तथैव निश्चलप्रतिज्ञस्तमन्वसरत्।

---

## अथ विंशकथा।

ततः स राजा शिंशपान्तिकं गत्वा पुनस्तं वेतालं स्कन्धे आरोप्य मौनी तथैव चचाल। वेतालोऽपि स्कन्धवर्त्ती तं

---

(झ) जनकस्यापि—उत्पादकस्यापि।

(ञ) संस्कारः,—चौडोपनयनादिकर्म्मविशेषः, दानम्—अन्नवस्त्रविद्यादिरूपं, वर्द्धनं—वृद्धिप्रापणं, तदादिभिः संस्कारदानवर्द्धनादिभिः,—पोषणादिभिरिति यावत्। तत्कृते—तस्य निमित्तं, बालकार्थमित्यर्थः। यस्य—चौरस्य इत्यर्थः। समासादितं—प्राप्तम्। तेनैव—धनेनैव। वीजं—शुक्रम्।

मौनिनमवलोक्य प्रोवाच,—"राजन्! कस्तेऽयं (क) निर्बन्धः? गृहं गच्छ, रात्रिसुखं सेवस्व, कुभिक्षास्तस्यान्तिकं मां नेतुं न ते युक्तम्, आग्रहातिशयश्चेत् तव, तदा पुनरिमां कथामाख्यामि, शृणु,—

अस्ति चित्रकूटं नाम नगरम्; तत्राऽऽसीत् (ख) प्रणयिचक्षुषाममृताऽऽसारवर्षी राजशिरोमणिश्चन्द्रालोको नाम। विद्वांसः यं (ग) शौर्य्यकरिणः आलानं, दानस्योत्पत्तिनिकेतनं, रूपस्य च विलासभवनं वदन्ति स्म। सर्वसम्पत्पूर्णस्यापि सदृशीं भार्य्यामप्राप्तवतस्तस्य हृदि महानुद्वेगः समभवत्।

एकदाऽसौ राजा उद्वेगविनोदाय (घ) अश्वीयसैनिकपरि-

(क) निर्बन्धः,—आभिनिवेशः। रात्रिसुख—नैशविहारविश्रामादिकम्। कुभिक्षोः,—भक्तुर्योगिनः।

(ख) प्रणयिचक्षुषा—प्रणयः,—प्रेम याञ्चा वा*("प्रणयः प्रश्रये प्रेम्णि याञ्चाविस्रम्भयोरपि" इति मेदिनी), स एषामस्तीति प्रणयिनः तेषां प्रणयिनां—स्निग्धानां, सुहृदामित्यर्थः, याचकानां वा, चक्षुषां प्रणयिचक्षुषां—सुहृन्नयनानां याचकनयनानां वा, अमृताऽऽसार—पीयूषधारा, वर्षतीति तादृशः अमृताऽऽसारवर्षी—सुधाधारास्रावी, चन्द्रालोको यथा अमृतमयांशुकरणेन स्वप्रणयिनां द्रष्टॄणां याचकानां चकोराणां वा नेत्रतर्पको भवति, तथाऽयं राजा निजसुहृदां स्नेहप्रदानेन याचकानां धनदानेन वा नेत्रानन्ददायकः सञ्जातः इति भावः, बन्धुवत्सलः दाता वा अयं राजा इति निष्कर्षः।

(ग) शौर्य्य—शूरत्वं, करिरिव—हस्तीव तस्य शौर्य्यकरिणः,—विक्रमनागस्य, आलानं—बन्धनस्तम्भम्, आलाननिबद्धाः करिणो यथा नान्यत्र गन्तुं शक्नुवन्ति, शौर्य्यमपि तथा तमेव राजानमेकं हित्वा नान्यत्र गन्तुं शशाक इत्यर्थः, एकवीरः स इति भावः, दानस्य उत्पत्तिनिकेतनं—जन्मस्थानं, स एव एको दाता इति भावः, रूपस्य च विलासभवनं—क्रीड़ागारम्, अतीव रूपवानिति भावः।

(घ) अश्वानामिमे अश्वीयाः,—अश्वसम्बन्धिनः, ये सैनिकाः, तैः परिवृतः,

वृतो मृगयाऽर्थं महाऽटवीं जगाम। तत्र (ङ) निरन्तरैः शरैः वराहवृन्दानि श्यामलानि तमांसीव रविः करैः भिन्दन् समरदुर्मदान् सिंहान् शरशय्यासु शाययन्, शरभांश्च पर्वतोपमान् कुलिशकर्कशप्रासपातैः पातयन् विचचार। इत्थं मृगानन्विष्यन् (च) तीव्रपार्ष्णिप्रहारेण वाजिनं भृशं ताड़यामास, स च वाजी कशाघातेन पार्ष्णिघातेन च गाढ़ं ताड़ितो विषमं समञ्चागणयन् क्षणात् वाताधिकजवेन तं भूपं वनान्तरं नयन् दश योजनानि अतिक्रमयामास।

इत्थं (छ) वाहे चलिते राजा दिङ्मोहमुपेत्य भ्रमन् श्रान्तः आरात् एकं विपुलं सरो ददर्श। तत्र गत्वा च तुरगं (ज) विपर्य्याणं कृत्वा, स्नातपीतं तरुच्छायासु कतिपयानि

—वेष्टितः अश्वीयसैनिकपरिवृतः,—अश्वारोहिसैन्यसमूहपरिवेष्टितः (विश०। ३या तत्पु०)।

(ङ) निरन्तरैः,—अविरलैः, मुहुर्मुहुर्निक्षिप्तैरित्यर्थः। तमांसीव—अन्धकाराणीव। करैः,—किरणैः, सहस्रसङ्ख्यकैरिति यावत, भिन्दन्—विध्यन, अन्यत्र,—दूरीकुर्वन् इत्यर्थः (भिद+लटः शतृ), सूर्य्यो यथा उदितः किरणजालैः श्यामवर्णानि अन्धकाराणि विदारयति, तथा राजा श्यामलानि वराहवृन्दानि प्रभूतैः शरैर्विदारयामास इति निष्कर्षः; समरदुर्मदान्—रणदुर्द्धर्षान् (विश०। ७मी तत्पु०)। शरभान्—"अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टयः" इत्युक्तलक्षणमृगविशेषान्। कुलिशकर्कशप्रासपातैः,—वज्रवत्कठोरकुन्ताख्यास्त्रप्रहारैः।

(च) तीव्रः,—प्रचण्डः, पार्ष्णिप्रहारः,—गुल्फाधोभागाघातः ("तद्ग्रन्थिघुटिके गुल्फौ पुमान् पार्ष्णिस्तयोरधः" इत्यमरः) तेन तीव्रपार्ष्णिप्रहारेण—पादयोः पश्चाद्भागस्य गुल्फाधोदेशस्य दारुणताडनेनेत्यर्थः। वाताधिकजवेन—वायोरप्यधिकवेगेन।

(छ) वाहे—अश्वे ("तुरङ्गाश्वतुरङ्गमाः। वाजिवाहार्वगन्धर्व—" इत्यमरः)। दिङ्मोहं—दिग्भ्रान्तिम्। आरात्—समीपे (अव्य०। "आराद्दूरसमीपयोः" इत्यमरः)।

(ज) विपर्य्याणं—विगतपल्ययनं, पृष्ठादपनीतचर्म्मासनादिकमित्यर्थः। स्नातपीतमिति अन्तर्भूतण्यर्थप्रयोगो ज्ञेयः, स्नापितपायितमित्यर्थः (स्नाताश्च-

यवसानि तस्मै दत्त्वा च, स्वयं कृतस्नानः सलिलं पिबन् विगतश्रमो रम्येषु तत्तत्प्रदेशेषु दृष्टिं निक्षिपन् कस्यचित् अशोकतरोरधस्तात् कामपि आमुक्तपुष्पाऽऽभरणां वल्कलांशुक-शोभिनीं बद्धमुग्धजटाजूटसविशेषमनोरमां सखीद्वितीयाम् आश्चर्य्यरूपां मुनिकन्यां ददर्श, चिन्तयामास च कामशराहतः,—"केयम्? किंस्वित् सावित्री सरसीषु स्नातुमागता? आहो-स्वित् स्वामिविभ्रष्टा गौरी पुनस्तपः कर्त्तुं प्रवृत्ता? तदेनामुपसृत्य वार्त्तामुपलप्स्ये" इत्यालोच्य शनैस्तस्याः समीप-माययौ। साऽपि तमायान्तं दृष्ट्वा तद्रूपेण समाकृष्टचित्ता (क) प्रारब्धपुष्पस्रक्सन्नहस्ता व्यचिन्तयत्,—"कोऽयमीदृक् अस्मिन्नरण्ये? विद्याधरः कोऽपि वा? चरितार्थे ममाद्य दृशौ" इत्थं वितर्क्य त्रपया तिर्य्यक् पश्यन्ती उत्थाय सोत्कम्पाऽपि

---

लिप्सवत स०)। यवसानि—घासान् ("घासो यवसम्" इत्यमरः)। आमुक्तानि—विनद्धानि, परिहितानीत्यर्थः, पुष्पाभरणानि—कुसुमभूषणानि यथा ताम् आमुक्तपुष्पाभरणां—धृतकुसुमालङ्कारां (विष०। बहुव्री०), वल्कलं—वृक्षत्वक्, तदेव अंशुकं—वस्त्रं (वस्त्रमाच्छादनं वासश्चेल वसनमंशुकम्" इत्यमरः), तेन शोभते इति तादृशीं वल्कलांशुकशोभिनीं—वृक्षत्वगुपवसनपरिहितां (विष०। बहुव्री०), बद्धेन—संयतेन, मुग्धेन—सुन्दरेण ("मुग्धस्तु सुन्दरे मूढे" इति मेदिनी), जटाजूटेन—जटाकलापेन, सविशेषं मनोरमा—मनोहारिणी ता बद्धमुग्धजटाजूट-सविशेषमनोरमां—जटाकलापेनापि चित्तहारिणीमित्यर्थः (विष०। ३या तत्पु०), सखी एव द्वितीया यस्याः तां सखीद्वितीयाम्—एकमात्रसहचरीसहिता (विष०। बहुव्री०)। किंस्वित् आहोस्विदित्यव्ययद्वयं वितर्कार्थकम्। उपलप्स्ये—ज्ञास्यामि (उप+लभ+लृट् स्ये)।

(क) प्रारब्धायां—गुम्फितुं प्रवृत्तायां, पुष्पस्रजि—कुसुममाल्ये, सन्नौ—निवृत्तौ, निर्व्यापारस्थितौ इत्यर्थः, हस्तौ यस्याः सा प्रारब्धपुष्पस्रक्सन्नहस्ता—विरतमाल्यग्रथनव्यापारा (विष०। बहुव्री०)। चरितार्थे—सम्पन्नप्रयोजने, सफले इत्यर्थः, चक्षुषी हि रूपदर्शनप्रयोजनके, अद्य लोकातीतरूपदर्शनेन तयोः कृतार्थता

गन्तुं प्रावर्त्तत। अथ राजा तामुपेत्याब्रवीत्,—"सुन्दरि! प्रथमदृष्टस्य दर्शनमात्रार्थिनः दूराऽऽगतस्य जनस्य (ञ) स्वागतादिकमास्तां, कोऽयमाश्रमिधर्मः यदेतस्मात् पलाय्यते?"। इति तेन राज्ञाऽभिहिते विचक्षणा तदीया सखी तत्र राजानमुपवेश्य अतिथिसत्क्रियामकरोत्।

अथ राजा तां सविनयम् (ट) अप्राक्षीत्,—"भद्रे! अनया तव सख्या कः पुण्यवान् वंशः अलङ्क्रियते? कानि वाऽस्याः कर्णरसायनानि नामाक्षराणि? कथं वा अनया कुसुमसुकुमारमिदं वपुः ईदृशे वयसि तापस्या वृत्त्या विजने कदर्थीक्रियते?"। एतत् राजवचनमाकर्ण्य सखी तं प्रत्यभाषत,—"महाभाग! एषा महर्षेः कण्वस्य कन्यका मेनकासम्भवा आश्रम एव वर्द्धिता इन्दीवरप्रभा नाम। अस्मिन् सरसि पितुरनुज्ञया स्नातुमागता। इतो नातिदूरे अस्याः पितुराश्रमः"।

इत्यभिहितो राजा सम्प्रहृष्टः तुरङ्गममारुह्य तां कन्यां याचितुं महर्षेः कण्वस्याऽऽश्रममगात्, प्राविशच्च (ठ) विनीतवेशः तमाश्रमं वहिःस्थापितवाहः। प्रविश्य च राजा

सञ्जाता इति तात्पर्य्यम्। तिर्य्यक्—वक्रदृष्ट्या, कटाक्षेणेत्यर्थः। सोरुस्तम्भाऽपि—सात्त्विकभावोदयात् ऊरुस्तम्भवत्यपि, ऊर्वोः स्तब्धत्वात् गन्तुमक्षमा सत्यपि इत्यर्थः।

(ञ) स्वागतादिकं—सुखेनागमनं सञ्जातम्? इत्यादिकं प्रश्नं, सर्वाश्रमिणामाचारविशेषमित्यर्थः। पलाय्यते, भवत्या इति शेषः।

(ट) अप्राक्षीत—जिज्ञासितवान् (प्रच्छ+लुङ्-द)! कर्णरसायनानि—रसायनाख्यौषधविशेषवत् कर्णसन्तर्पणानि। तापस्या—तपःसम्बन्धिन्या, वृत्त्या—आचारेण, तपश्चरणेनेत्यर्थः। अकदर्थं कदर्थं क्रियते कदर्थीक्रियते?—क्लिश्यते (कदर्थ+कृ+अभूततद्भावे च्विः, ततः कर्म्मणि लट्-ते)।

(ठ) विनीतवेशः,—अनुद्धतपरिच्छदः, मृगयावेशं परिहृत्य शान्तभाव-

(ड) जटावल्कलधरैः पादपैरिव तापसैः परिवृतं तेजसा चन्द्रमिव आह्लादिनं तम् ऋषिं कण्वमद्राक्षीत्, दृष्ट्वैवोपेत्य तं पादयोर्ववन्दे। सोऽपि शान्तो मुनिः कृताऽऽतिथ्यं विश्रान्तं तमभाषत,—"वत्स! चन्द्रालोक! शृणु यदहं वच्मि ते हितं, संसारेऽस्मिन् प्राणिनां मृत्युभयं यादृक्, तदहं जानामि, तत् निरर्थकं कथमिमान् मृगादीन् (ढ) हंसि? भीतरक्षार्थमेव धात्रा क्षत्रस्य शस्त्रं सृष्टं, तत् धर्मेण प्रजा रक्ष, कण्टकान् समुन्मूलय; हस्त्यश्वादिभिः साधनैः चलां लक्ष्मीं साधयितुं यतस्व, राज्यसुखं भुङ्क्ष्व, दानं देहि, दिक्षु यशांसि विकिर, कृतान्तक्रीडितं मृगयाव्यसनं परित्यज; यत्र हन्तुर्हन्यमानस्य च तुल्यप्रमादिताऽस्ति, तेन बह्वनर्थेन अनेन व्यापारेण किम्?

मवलम्ब्योऽति भावः। बहिः,—आश्रमबहिर्देशे, स्थापितः,—रक्षितः, वाहः,—अश्वः येन सः बहिःस्थापितवाहः,—बहिःपरित्यक्ततुरङ्गः (विशे०। बहुव्री०)।

(ड) जटाः,—लग्नकचाः, परस्परलिप्तकेशा इत्यर्थः, अथवा,—मूलानि ("जटा लग्नकचे मूले मांस्याम्" इति मेदिनी), वल्कलानि—वृक्षत्वचः, एतान्,—परिधेयतया, अथवा,—साहजिकतया इति ज्ञातव्यम्, धारयन्तीति तैः जटावल्कलधरैः,—जटावल्कलवसानैः, जटावल्कलसंयुक्तैश्च। पादयोः (शेषे ६ष्ठी०)।

(ढ) हंसि—मारयसि (हन+लट्-सिप्)। क्षतात् त्रायते इति क्षत्त्रः तस्य क्षत्त्रस्य—भूमिपातुः क्षत्रियस्येत्यर्थः, भीताभयदानमेव क्षत्त्रशब्दस्य यौगिकोऽर्थः इति तात्पर्य्यम्। कण्टकान्—दोषान्, क्षुद्रशत्रून् वा ("कण्टकः क्षुद्रशत्रौ च कर्म्मस्थानकदोषयोः। रोमाञ्चे च द्रुमाङ्गे च कण्टको मस्करेऽपि च" इति विश्वः)। साधनैः,—उपायैः, यद्वा,—साधनैः,—सैन्यैः ("हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरात् सेनाङ्गानां हस्त्यश्वादीनां सैन्यपर्य्यायकसाधनशब्देन व्यपदेशो ज्ञातव्यः। "साधनं मृतसंस्कारे सैन्ये सिद्धौषधौ गतौ। निवर्त्तनोपायमेढ्रे दापनेऽनुगमे धने" इति मेदिनी)। साधयितुं—वशीकर्त्तुमित्यर्थः (साध+णिच्+तुमुन्)। विकिर—विस्तारय इत्यर्थः (वि+कॄ+लोट्-हि), कृतान्तक्रीडितं—यमविलसितं, कृतान्तस्य मृत्युदैवतत्वात् कृतान्ताचारवत् आचरणमित्यर्थः। तुल्यप्रमादिता—समानविपत्तिमत्त्वा,

पाण्डोर्नृपस्य वृत्तं त्वया किं न श्रुतम् ?"। एतदाकर्ण्य मुनिवचनं कार्य्यज्ञो नृपः (ण) समभिनन्द्य प्रत्यभाषत,—"भगवन् ! अनुशिष्टोऽस्मि, महान् अनुग्रहो मे कृतः अनेन अनुशासनेन। अद्य प्रभृति मृगयानिवृत्तोऽभवं, प्राणिनो निर्भयाः सन्तु"। तदाकर्ण्य मुनिरब्रवीत्,—"तुष्टोऽस्मि तवामुना प्राणिष्वभयदानेन, तदीप्सितं वरं वृणीष्व" इति। ततः स (त) कालज्ञो नृपतिरब्रवीत्,—"भगवन् ! प्रसन्नोऽसि चेत्, सुतामिन्दीवरप्रभां मह्यं देहि"। इत्यर्थितः स मुनिस्तस्मै स्नाताऽऽगतां तामप्सरःसम्भवां कन्यां प्रददौ। ततः कृतविवाहः (थ) मङ्गलालङ्कृतः तां मुनिपत्नीकृतप्रसाधनाम् उदाश्रुभिस्तापसैरानिजाश्रमात् कृतानुयात्रामिन्दीवरप्रभां भार्य्यामादाय वाजिनमारुह्य राजधानीं प्रतस्थे।

एतस्मिन्नन्तरे दूराध्वगमनक्लान्तं तं नृपं वीक्ष्य भगवान्

---

किञ्चित्स्खलने जाते एकेनान्यस्य अवश्यविनाशसम्भावनतर्येति भावः। पाण्डोर्नृपस्य—पाण्डुराजस्य, वृत्तं—चरितमित्यर्थः, पाण्डुसंज्ञाराजः सर्वदा मृगयाव्यसनी मृग्या रममाणं मृगरूपिणं कमपि मुनिं मृगबुद्धा शरेण निजघान, स च मुनिः अपूर्वरमणसुखः "एव तवापि मृत्युर्भावी" इति तं शशाप इति वार्त्ता।

(ण) समभिनन्द्य—प्रशस्य, मुनिवचनमिति शेषः। अनुशिष्टः,—उपदिष्टः [अनु+शास+क्तः "शास इदङ्हलोः" (६।४।३४ पा०) इत्युपधाया इत, "शासिवसिघसीनां—" (८।३।६० पा०) इति षत्वम्]। अनुशासनेन—उपदेशेन।

(त) कालज्ञः,—अवसरवित्, यदा यादृशं वस्तु युज्यते तदभिज्ञः।

(थ) मङ्गले—विवाहरूपमङ्गलकर्म्मणि, मङ्गलाय—विवाहरूपमङ्गलकर्म्मणे इति वा, अलङ्कृतः,—भूषितः, कृतप्रसाधन इत्यर्थः, यद्वा,—मङ्गलेन—अभीष्टपूर्त्तिजनितश्रियसा हेतुना, अलङ्कृतः,—जातशोभः मङ्गलालङ्कृतः,—कल्याणभाजितः (विण०। ७मी ४र्थी ३या तत्पु०वा)। उदाश्रुभिः,—उदस्राभः, निर्गतनेत्रोदकैरित्यर्थः; (विण०। बहुव्री०)। निजाश्रमात्—निजतपोवनात्, आ—प्रभृति आनिजाश्रमात्—तपोवनसीमापर्य्यन्तम्।

सहस्ररश्मिः खिन्नः इव अस्ताचलशिरसि समुपाविशत्। दृष्टा च (द) रात्र्यभिसारिका मृगनेत्रा क्रमादुद्रिक्तमन्मथा ध्वान्तनीलपटप्रावृता। तस्मिंश्चावसरे राजा जलाशयतीरवर्त्मनि (ध) शाखापल्लवसंछन्नशाद्वलश्यामलस्थलम् अश्वत्थपादपं दृष्ट्वा “इह रात्रिं वसामि” इति मनसि अकरोत्। ततस्तुरगादवतीर्य तस्मै वाजिने तृणोदकं दत्त्वा वाप्यास्तस्याः सलिलानि पीत्वा प्रियया सह विशश्राम। तत्कालञ्च (न) शशलाञ्छनः सरागः

(द) रात्रिः अभिसारिका इव इति रात्र्यभिसारिका—कान्तार्थं सङ्केतस्थानानुयायिनी रजनी, अन्यत्र,—रात्रिरिव अभिसारिका रात्र्यभिसारिका—कान्तार्थिनी सती सङ्केतस्थानं गच्छन्ती काचिदङ्गना, मृगः,—मृगशिरो नक्षत्रं, नेत्रं—नेत्रमिव प्रकाशकमित्यर्थः, यस्यां रात्रौ सा मृगनेत्रा—रात्रिविशेषः, मार्गशीर्षस्य त्रयोविंशदिनानन्तरं सङ्क्रान्तेः पूर्वपर्य्यन्ता काचित् रात्रिरित्यर्थः, अग्रहायणस्यान्त्यसप्ताहेषु काचित् रात्रिरिति यावत्, अन्यत्र,—मृगस्य नेत्रे इव नेत्रे यस्याः सा मृगनेत्रा—हरिणलोचना काचित् नायिका (“मृगनेत्रा रात्रिभेदे विशेषे योषितस्तथा” इति मेदिनी)। उद्रिक्तः,—प्रवृद्धः, मन्मथः,—कामचिन्ता यस्याः सा उद्रिक्तमन्मथा—उद्बुद्धकामाभिलाषा इत्यर्थः, अन्यत्र,—उद्रिक्तः,—आविर्भूतः, मन्मथः,—कामः, स्मरवाञ्छा इत्यर्थः, यस्याः सा उद्रिक्तमन्मथा—कामवेगिनी (विश०। बहुव्री०। “मन्मथः कामचिन्तायां कपित्थे कुसुमायुधे” इति मेदिनी), ध्वान्तम्—अन्धकारः, नीलपट इव—कृष्णवस्त्रमिव, अन्यत्र,—ध्वान्तमिव नीलपटः, तेन प्रावृता—अवगुण्ठिता ध्वान्तनीलपटप्रावृता—तिमिररूपकृष्णवसनावृता, कृष्णपक्षनिशासु अभिसारिकाणां कृष्णवसनावरणेन अभिसरणनियमात् तथात्वमिति मन्तव्यम्।

(ध) शाखापल्लवसंछन्नं—लताकिसलयावृतं, तच्च तत् शाद्वलश्यामलञ्च—शादहरितश्यामवर्णञ्च, नवतृणप्रचुरतया नयनाभिराममित्यर्थः (“शाद्वलः शादहरिते” इत्यमरः), स्थलं—भूः यत्र तादृशं शाखापल्लवसंछन्नशाद्वलश्यामलस्थलं—लताकिसलयाकीर्णनवतृणप्रचुरहरितभूमिकमित्यर्थः (विश०। बहुव्री०)। रात्रिम्—[“अकर्मकधातुभि—” (वा०) इति कालस्य कर्मत्वम्]।

(न) शशः,—मृगः, लाञ्छनं—चिह्नं, यस्य सः शशलाञ्छनः,—मृगाङ्कः, चन्द्र इत्यर्थः, कामी कश्चित् पुरुषश्च इति व्यज्यते; सरागः,—रक्तवर्णः, उद्गमन-

तिमिरांशुकहारी समाक्रम्य प्राच्या मुखं चुचुम्बे। (प) चन्द्रकिरणैः समाश्लिष्य प्रसाधिता वीतमानावकाशाः अशेषाश्च दिशो विरेजुः। अत्रान्तरे (फ) लतागुल्मविवरप्रसृतैरैन्दवैः रक्ताटोपाभैः करैस्तरुमूले अवभासिते स राजा तामिन्दीवरप्रभां नवसङ्गमरसोल्लासामाश्लिष्य सुरतोत्सवं सिषेवे, विस्रंसयामास च तस्यास्त्रपामिव नीवीं, खण्डयामास च दशनैस्तस्या मुग्धभावमिवाधरं, रचयामास च यौवन-

---

वेलाया चन्द्रस्य रक्तवर्णतायाः प्राकृतिकत्वात्, सानुरागश्च ("रागस्तु मात्सर्ये लोहितादिषु। क्लेशादावनुरागे च गान्धारादौ नृपेऽपि च" इति मेदिनी), तिमिरम्—अन्धकारम्, अंशुकं—वस्त्रमिव, अन्यत्र,—तिमिरमिव अंशुकम्, उभयत्रापि आवरकत्वसाधर्म्यादिति द्रष्टव्यम्; तत् हर्तुम्—अपसारयितुं शीलमस्य इति तिमिरांशुकहारी—तिमिररूपवस्त्रापसरणशीलः। प्राच्याः,—पूर्वाशायाः, कस्याश्चिन् नायिकायाश्च इति ध्वन्यते।

(प) चन्द्रकिरणैः, हस्तैश्च इति ध्वन्यते। प्रसाधिताः,—अलङ्कृताः, चन्द्रेण, केनचित् नायकेन चेति शेषः, अत एव वीतः,—विगतः, मानस्य—अभिमानस्य, एकत्र,—प्राच्याः दिशः मुखचुम्बनजनितस्य, अन्यत्र,—कान्तान्तरमुखचुम्बनजनितस्येति भावः, अवकाशः,—अवसरः यासां ताः वीतमानावकाशाः,—अपगतमानप्रसराः इत्यर्थः (विशे०। बहुव्री०)।

(फ) लतागुल्मविवरप्रसृतैः,—लतागुल्मान्तरालनिर्गतैः, इन्दोरिमे ऐन्दवाः तैः ऐन्दवैः,—चान्द्रैः, चन्द्रसम्बन्धिभिरित्यर्थः। करैः,—किरणैः। अवभासिते—उद्दीपिते, आलोकिते इत्यर्थः। नवसङ्गमस्य—अपूर्वपतिसहवासस्य, यो रसः,—आस्वादः, यद्वा,—नवसङ्गमे यो रसः,—रागः, अनुराग इत्यर्थः ("शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः। देहधातुप्रभेदे च पारदस्वादयोः पुमान्" इति मेदिनी), तेन उल्लासः,—आनन्दः यस्याः ता नवसङ्गमरसोल्लासा—प्रथमसुरतसुखानुभवामोदिता (विशे०। बहुव्री०)। विस्रंसयामास—शिथिलयामास (वि+स्रंस+णिच्+लिट्-णल्)। नीवी—कटीवस्त्रबन्धनं, कटीस्थवस्त्रग्रन्थिमित्यर्थः ("स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च" इत्यमरः)। मुग्धभावं—मूढभावम्, अज्ञतामित्यर्थः, सारल्यमिति यावत्। यौवनं—तारुण्यमेव, द्विपः,—हस्ती, तस्य कुम्भयोः,—शिरःस्थमांसपिण्डयोः ("कुम्भो राश्यन्तरे हस्तिमूर्धांशे राक्षसान्तरे" इति

द्विपकुम्भयोः तस्याः कुचयोः सद्रत्ननवनक्षत्रमाला इव नखक्षतानि, चुचुम्ब च मुहुः सर्वतो लावण्यामृतनिस्यन्द-मिव पिबन् मुखं कपोलौ नयने च। इत्थं तया सह (व) निधुवनक्रीड़या तत्र तां निशां क्षणमिवानयत्।

अथ प्रातः समुत्थाय कृतसान्ध्यविधिः स्वसैन्यानुसन्धानाय तया कान्तया सह प्रयातुमुत्सुकोऽभवत्। तावच्च रजन्यां (भ) विलुप्तकमलिनीशोभं भियेव अस्ताचलकुहरप्रलीनं ध्वस्ततेजसं निशापतिं हन्तुकाम इव क्रोधादाताम्र-तररोचिषि प्रसारितकरैरुत्क्षिप्तचन्द्रमण्डले विवस्वति,

---

मेदिनी)। यौवनाद्द्विपकुम्भयोः,—तारुण्यगजकुम्भसदृशयोरित्यर्थः। सन्ति—प्रशस्तानि, यानि रत्नानि—मणयः, तैः नवाः,—प्रत्यग्राः, नक्षत्रमालाः,—सप्तविंशतिमौक्तिकैः ग्रथिताः एकावलीविशेषाः ("एकावल्येकयष्टिका। सैव नक्षत्रमाला स्यात् सप्त-विंशतिमौक्तिकैः" इत्यमरः) ता इव सद्रत्ननवनक्षत्रमाला इव—सप्तविंशतिमौक्तिक-खचितमहार्घैकावलीमाला इव इत्यर्थः। लावण्यं—"मुक्ताफलेषु छायायास्तरल-त्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते" इत्युक्तलक्षणः कान्तिविशेषः, तदेव अमृतनिस्यन्दः,—सुधाद्रवः तं लावण्यामृतनिस्यन्दं—सौन्दर्यसुधारसम्।

(व) निधुवनक्रीडया—सुरतलीलया ("व्यवायो निधुवनं कम्पे सुरते च नपुंसकम्" इति मेदिनी)।

(भ) विलुप्ता—विध्वस्ता, कमलिनीनां—पद्मिनीनां, शोभा—सौन्दर्यं येन तं विलुप्तकमलिनीशोभं—विनष्टनलिनीप्रमोद, निशायां पद्मिनीनां मुद्रितोभवनस्वभावा-दिति भावः (विश०। बहुव्री०), भियेव—कमलिनीशोभाहरणजनितभयेनेवेत्यर्थः, सूर्यादिति शेषः, अस्ताचलकुहरप्रलीनम्—अस्तगिरिगह्वरलुक्कायितं, ध्वस्तम्—ऊषाऽऽगमनात् च्यवितं, तेजः,—प्रभा यस्य तं ध्वस्ततेजसं—क्षीणप्रभं (विश०। बहुव्री०)। आताम्रतरम्—ईषत्ताम्रवर्णम् (अत्र स्वार्थकतरप्), रोचिः,—प्रभा ("स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः। रोचिः शोचिरुभे क्लीवे" इत्यमरः) यस्य तस्मिन् आताम्रतररोचिषि—अरुणाभे इत्यर्थः, दृश्यते च लोके क्रुद्धः अरुणाभो भवतीति; प्रसारितकरैः,—विस्तारितकिरणैः, विस्तारितहस्तैश्च, उत्क्षिप्तम्—उत्पाटितं, चन्द्रमण्डलं येन तस्मिन् उत्क्षिप्तचन्द्रमण्डले—दूरापसारितचन्द्रबिम्बे,

अकस्मात् विद्युत्पिङ्गजटः कज्जलश्यामलः कालमेघ इव कश्चित् अन्त्रमालाकृतोत्तंसः केशयज्ञोपवीती ब्रह्मराक्षसः नरशिरोमांसं खादन् कपालेन शोणितं पिबंश्च समाजगाम । सः अट्टहासं विमुच्य क्रुधा अग्निं वर्षन्निव (म) दंष्ट्राकरालो राजानं तं निर्भर्त्सयन्नब्रवीत्,—"पाप ! ज्वालामुखं नाम मां ब्रह्मराक्षसं विद्धि, एष चाश्वत्थो मे निवासः देवैरपि न लङ्घ्यते, सोऽयं त्वया स्त्रिया सह समाक्रम्य परिभुक्तः, तदविनयमिदानीं भुङ्क्ष्व, दुराचार ! एषोऽहं कामोपहतचेतसः ते हृदयमुत्पाट्य भोक्ष्ये, शोणितञ्च पास्यामि"। तदाकर्ण्य तस्य घोरं राक्षसमवध्यमवेक्ष्य, दृष्ट्वा च कान्तां भयविह्वलां, भयात् राजा सविनयमवादीत्,—"अजानता मया ते (य) अपराद्धं, तत् क्षमस्व । तवाऽऽश्रमेऽहमतिथिस्त्वां शरणं

चन्द्रमण्डलमपसार्य्य उदिते सति इत्यर्थः । विद्युदिव—तडिदिव, पिङ्गा—पिङ्गलवर्णा, जटा—जटाकेशः यस्य सः विद्युत्पिङ्गजटः,—पिङ्गलवर्णजटाधारी, अथवा,—विद्युत् पिङ्गा जटा इव यस्य तादृशः विद्युत्पिङ्गजटः,—तडित्वान् । अन्त्राणां—नराणामुदरस्थनाडीविशेषाणां, मालाभिः कृतः उत्तंसः,—कर्णपूरः, कर्णभूषणमित्यर्थः, शेखरो वा, शिरोभूषणमित्यर्थः ("उत्तंसः कर्णपूरेऽपि शेखरे चावतंसवत्" इति विश्वः), येन सः अन्त्रमालाकृतोत्तंसः,—कर्णाभरणीकृतान्त्रमालः शिरोभूषणीकृतान्त्रमालो वा (विशे० । बहुव्री०), केशयज्ञोपवीती—केशकृतयज्ञोपवीतधारी (आकृपा०)। कपालेन—शिरोऽस्थ्ना ("कपालोऽस्त्री शिरोऽस्थ्नि स्यात् घटादेः शकले व्रजे" इति मेदिनी)।

(म) दंष्ट्रया—दीर्घदन्तेन, करालः,—भीषणः दंष्ट्राकरालः,—भीमदन्तः (विशे० । तृया तत्पु०)। अश्वत्थः,—अश्वत्थवृक्षः । लङ्घ्यते—अतिक्रम्यते, अवहेलयितुं शक्यते इत्यर्थः (लङ्घ+णिच्+कर्मणि लट्-ते), सोऽयम्—अश्वत्थवृक्षः । समाक्रम्य—अभिभूय, अवज्ञायेत्यर्थः, परिभुक्तः,—स्त्रीसम्भोगेन दूषित इत्यर्थः । अविनयं—पूज्यातिक्रमम्, औद्धत्यफलमिति भावः ।

(य) अपराद्धं—स्खलितम्, अपराधः कृत इत्यर्थः (अप+राध+क्तः)।

गतः, दास्यामि च ते ईप्सितं (र) पुरुषं पशुं, येन ते तृप्तिर्भविता ; तत् प्रसीद, क्रोधं परिहर"। इति राज्ञो वचनमाकर्ण्य स ब्रह्मराक्षसः शान्तकोपः,—"अस्तु, को दोषः ?" इति विविच्य प्रत्यभाषत,—"राजन् ! यः सप्तवर्षीयः महासत्त्वः विवेकवान् ब्राह्मणपुत्रः स्वेच्छया त्वदर्थमात्मानं दद्यात्, यश्च हन्यमाने तन्माता हस्तयोः, तत्पिता च पादयोः सुदृढं महीतले सन्निवेश्य (ल) अवष्टभ्नाति, सप्तदिनाभ्यन्तरे तादृशं पुरुषं स्वयं खड्गप्रहारेण मह्यमुपहारीकरोषि चेत्, तदा ते इमं न्यक्कारं क्षमिष्ये, अन्यथा त्वां सपरिच्छदं सद्यो नाशयिष्यामि"। श्रुत्वैतत् स राजा भयात्,—"तथा" इति प्रतिपेदे। सोऽपि ब्रह्मराक्षसः तत्क्षणात् तिरोबभूव।

अथ राजा चन्द्रावलोकस्तया इन्दीवरप्रभया सह हयाऽऽरूढः सुदुर्मना इतस्ततः सैन्यानि (व) विचिन्वन् प्रायात्। "अहो ! अहं मृगयया मदनेन च विमोहितः (श) अकाण्डे पाण्डुरिव विनाशं गतः, अस्य रक्षसः तादृशः उपहारः कुतो लभ्यते ? तदिदानीं निजमेव नगरं यामि, पश्यामि, किं भावि"

---

(र) पुरुष पशु—बलिनिमित्तकच्छागरूपेण कल्पित मानुषमित्यर्थः, "पशुर्मृगादिदेवाजे नाऽस्त्रिय पश दर्शने" इति मेदिनीवचनेन पशुशब्दस्य छागार्थकत्वात्, छागस्य च बलिकर्मणि प्रशस्तत्वात् पुरुषरूप छागमिति बोध्यम् ; अथवा दुर्गोत्सवतत्त्वे पुरुषस्य ग्राम्यपशुमध्ये पाठात्, पशुस्थाने तस्यापि निवेशस्य शास्त्रसम्मतत्वाच्च पुरुषपशुम् इति मन्तव्यम् ; तथा च—"गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः" इति।

(ल) अवष्टभ्नाति—धारयति [ अव+स्तम्भ+लट्-तिप् "अवाच्चालम्बनाविदूर्ययोः" (८।३।६८ पा०) इति षत्वम् ]। न्यक्कारं—नीचीकरणं, मर्यादालङ्घनमित्यर्थः, अवमाननमिति यावत्। सपरिच्छदं—सपरिवारम्।

(व) विचिन्वन्—अन्विष्यन् (वि+चि+लटः शतृ)।

(श) अकाण्डे—अनवसरे, अकाले इत्यर्थः। भावि—भविष्यतीत्यर्थः।

इति ध्यायन् सः समन्तात् अन्विष्यन् ससैन्यं सनगरं चित्रकूटञ्च प्राप। तत्र अनुरूपभार्य्यालाभेन परितुष्टाभिः प्रकृतिभिः महोत्सवे विहितेऽपि अन्तर्गतविषादस्य तस्य (घ) दुःखदुःखेनैव दिनशेषो व्यपगमत्। द्वितीयेऽहनि स रहसि मन्त्रिभ्यः तं सर्वं वृत्तान्तमाचचक्षे। तेषाञ्चैकः सुमतिर्मन्त्री प्रत्यब्रवीत्,—"देव! विषादस्ते मा भूत्, अहमन्विष्यन् तादृशमुपहारमानेष्यामि, विचित्रा हि मेदिनी"। एवं राजानमाश्वास्य स मन्त्री (ङ) सौवर्णीं शिशुप्रतिमामकरोत्। "यः (च) सप्तवर्षदेशीयः विप्रपुत्रः सत्त्ववान् आत्मानं मातापित्रोरनुज्ञया ब्रह्मरक्षसः उपहाराय प्रयच्छति, यश्च हन्यमानस्ताभ्यां मातापितृभ्यां हस्तपादे प्रगृह्यते, राजा तत्पित्रोरुपकारार्थं ग्रामशतसहितां रत्नयुक्तामिमां सौवर्णीं प्रतिमां तस्मै दास्यति" इति तां शिशुप्रतिकृतिं भ्रामयन् स मन्त्री अजस्रं पटहोद्घोषणमकारयत्।

एतदाकर्ण्य एकस्मिन् (छ) अग्रहारे कश्चित् द्विजशिशुः सप्तवर्षदेशीयोऽपि अतिधीरः अद्भुताकृतिः बाल्येऽपि सदा परहिते रतः प्रजानां पुण्यपरिपाक इव मूर्त्तिमान् उद्घोषकान् प्रोवाच,—"भद्राः! युष्मदर्थे अहमात्मानं ददामि, तिष्ठत, पितरौ बोधयित्वा द्रुतमागच्छामि" इति तानभिधाय, तेषाञ्चानु-

---

(घ) दुःखदुःखेनैव—निरतिशयदुःखेनैवेत्यर्थः।

(ङ) सौवर्णीं—सुवर्णविकारां, काञ्चनमयीमिति यावत् [सुवर्ण+"तस्य विकारः" (४।३।१३४ पा०) इत्यण्]।

(च) ईषदूनः सप्तवर्षः सप्तवर्षदेशीयः,—किञ्चिदपूर्णसप्तवर्षः ["ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" (५।३।६७ पा०) इति देशीयर्]।

(छ) अग्रहारे—ग्रामे। अद्भुताकृतिः,—अपरूपरूपः। प्रजानां—जनानां ("प्रजा स्यात् सन्ततौ जने" इत्यमरः), पुण्यपरिपाकः,—पुण्यपरिणामः, पुण्यानुष्ठानस्य फलमित्यर्थः, प्रजानां बहुपुण्यफलेन तादृशः परहितव्रती जायते

मतः स बालः गृहं गत्वा रचिताञ्जलिः पितरावब्रवीत्,—"अम्ब ! तात ! अहं सर्वसत्त्वार्थम् एतं विनश्वरं देहं ददामि, तन्मामनुजानीतम्, इमाञ्च राजदत्तां हेमरत्नमयीं ग्रामशतान्विताम् आत्मप्रतिकृतिं गृहीत्वा वां वितरामि, एवं सति मम युष्मदानृण्यं परार्थश्च सिध्यति, युवाञ्च चिरमदरिद्रौ बहून् पुत्रानवाप्स्यथः"। इतिवादिनं तं सहसा तौ पितरौ अवोचतां,—"पुत्र ! किमेतत् भाषसे ? वातेन किं (ख) क्षुभितोऽसि ? किं वा ग्रहगृहीतोऽसि ? अन्यथा कथमेवं प्रलपसि ? को हि अर्थैः शिशुं घातयेत् ? कश्च शिशुः देहं दद्यात् ?"। एतत् पित्रोर्वचः श्रुत्वा स बालः पुनरुवाच,—"नाहं बुद्धिमोहात् ब्रवीमि, शृणुतं मे (ग) अर्थवत् वचनम्, अवाच्याशुचिपूर्णं जुगुप्सितं दुःखक्षेत्रं शरीरमिदम् अचिरात् विनाशि, तदेतेन अल्पसारेण यदि किञ्चित् सुकृतमुपार्ज्यते, तदेव अस्मिन् संसारे सारमिति बुधैरुच्यते, सर्वभूतोपकारादन्यत् किमस्ति सुकृतम् ? तत्रापि पित्रोर्भक्तिश्चेत् साध्यते, तदा

---

इत्याशयः। बोधयित्वा—ज्ञापयित्वा (बुध+णिच्+क्त्वा)। रचिताञ्जलिः,—कृताञ्जलिः। अम्ब !—मातः [अम्बा इति शब्दस्य सम्बुद्धौ "अम्बार्थनद्योर्ह्रस्वः" (७।३।१०७ पा०) इति ह्रस्वः]। सर्वसत्त्वार्थं—सर्वप्राणिनिमित्तं, सर्वजीवोपकारार्थमिति यावत्। अनुजानीतम्—अनुमन्येथाम्। वां—युवाभ्यां ["युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" (८।१।२० पा०) इति चतुर्थीद्विवचनस्य युष्मदः वामादेशः]। अवाप्स्यथः,—लप्स्येथे (अव+आप+लृट्-थस्)।

(ख) क्षुभितः,—व्याकुलितः, आक्रान्त इति यावत्। ग्रहेण—पूतनादिबालग्रहेण, गृहीतः,—आक्रान्तः ग्रहगृहीतः,—पूतनादिग्रहपीडितः। प्रलपसि—अनर्थकं वक्षि (प्र+लप+लट्-सिप्। "प्रलापोऽनर्थकं वचः" इत्यमरः)।

(ग) अर्थवत्—युक्तियुक्तमित्यर्थः। अवाच्यानि—वक्तुमशक्यानि, न्यक्कारजनकत्वादिति भावः, यानि अशुचीनि—स्वेदमूत्रपुरीषाद्यपवित्रद्रव्याणि, तैः पूर्णम् अवाच्याशुचिपूर्णं—न्यक्कारजनकमूत्रपुरीषादिद्रव्यपूरितम्। सुकृतं—पुण्यं ("स्याद्धर्ममस्त्रियां

देशादन्यत् किमिव अधिकं सम्पत्स्यते ?"। इत्येवं धीरवचनैः सुदृढ़निश्चयः स शिशुः शोचन्तौ पितरौ (घ) स्वमनोषित-मङ्गीकारयामास; गत्वा च राजभृत्येभ्यः तां हिरण्मयीं शतग्रामशासनसहिताम् आनीय ताभ्यां पितृभ्यां प्रददौ।

अथ तान् राजभृत्यानग्रतः कृत्वा स बालकः पितृभ्याम् अन्वितः चित्रकूटं नगरं प्रति प्रायात्। तत्र प्राप्तम् (ङ) अखण्डिततेजसं तं बालकं रत्नारत्नमिव दृष्ट्वा नृपतिः भृशं ननन्द। तञ्च (च) रचितमाल्यविलेपनं गजपृष्ठमारोप्य सपितृकं तत् ब्रह्मरक्षसः सदनं निनाय। तत्र तस्याश्वत्थस्य पार्श्वतः (छ) मण्डलमालिख्य पुरोहितेन कृतपूजेन वह्नौ हुते स ब्रह्मराक्षसः मुक्ताट्टहासः, स्वाध्यायं पठन्, घूर्णन्, रक्तासवक्षीवः, मुहुः श्वसन्, जृम्भमाणः, नेत्रैर्ज्वलन्, दिशः देहच्छायया अन्धकारिताः कुर्वन् ज्वालामुखो महारौद्रदर्शनः

---

पुण्ये मेध्ये सुकृते वृषः" इत्यमरः)। भक्तिः,—सेवा। साध्यते—क्रियते इत्यर्थः (साध+कर्मणि लट्-ते), पुत्रैरिति शेषः।

(घ) स्वमनोषितं—निजाभिलषितम्, अङ्गीकारयामास—स्वीकारयामास। शतग्रामाणां शासनं—लेखम्, एते ग्रामाः अस्मै दत्ताः इत्येवं दानप्रतिपादकं पत्रं, लिपिविशेष इत्यर्थः, यद्वा,—शतग्रामा एव शासनानि—राजदत्तोर्व्यः ("शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु" इति मेदिनी), तत्सहितां शतग्रामशासन-सहितां—ग्रामशतदानपत्रसंयुक्ताम्।

(ङ) अखण्डिततेजसम्—अम्लानप्रभं, महाबलमिति यावत्। रत्नार्थे—निजजीवनलाभाय, रत्नं—बहुमूल्यमणिमिव रत्नारत्नमिव—रत्नाकरमिवेत्यर्थः।

(च) रचिते—दत्ते, माल्यविलेपने—मालाचन्दने यस्मै च तं रचितमाल्यविलेपनं—मालाचन्दनादिभूषितम्।

(छ) मण्डलं—कुङ्कुमरेखासन्निवेशेन रचितं पदार्थविशेषं, सर्वतोभद्र-मण्डलादिकमिति यावत्। स्वाध्यायं—वेदमित्यर्थः। रक्तं,—शोणितमेव, आसवः,—मद्यविशेषः, तेन क्षीवः,—मत्तः रक्तासवक्षीवः,—रक्तपानोन्मत्तः। जृम्भमाणः,

प्रादुरभूत्। ततो राजा तं दृष्ट्वा विनीतः प्राब्रवीत्,—"भगवन्! अयं तव अभिमतो नरोपहारः समानीतः, अद्य स सप्तमो दिवसस्ते प्रतिज्ञायाः, तत् प्रसीद, गृहाण इममुपहारं यथाविधि"। इति राज्ञाऽर्थितः स ब्रह्मराक्षसः जिह्वया (ज) सृक्कणी लिहन् तमुपहारभूतं विप्रसुतमव-लोकयामास। क्षणे च तस्मिन् स बालो महासत्त्वो हृष्टो व्यचिन्तयत्,—"अनेन स्वदेहदानेन यन्मया सुकृतम् अर्जितं, तेन मे स्वर्गो वा (झ) निरुपक्रियो मोक्षो मा भूत्, जन्मनि जन्मनि मे परार्थो देहो भूयात्"। इति तस्मिन् चिन्तयत्येव क्षणात् (ञ) पुष्पवृष्टिमुचां देवानां विमानैः नभस्तलमापूर्य्यत।

अथ तस्य ब्रह्मरक्षसः पुरतः स्थापितं तं बालं माता करयोः पिता चरणयोरग्रहीत्। ततो यावत् खड्गमाकृष्य राजा तं (ट) जिघांसति, तावत् स शिशुस्तथा जहास, यथा ब्रह्म-

—वदनं व्याददत् (वृध+लटः शानच्)। महारौद्रम्—अत्युग्र, दर्शनम्—अव-लोकनं यस्य सः महारौद्रदर्शनः,—अतिभयानकाकारः (विश०। बहुव्री०)।

(ज) सृक्कणी—ओष्ठप्रान्तौ ("प्रान्तावोष्ठस्य सृक्कणी" इत्यमरः), लिहन्—परामृशन् इत्यर्थः (लिह+लटः शतृ)।

(झ) निः,—नास्ति, उपक्रिया—उपकारः यस्मिन् स निरुपक्रियः,—उप-कारसामर्थ्यविरहितः, मोक्षे सञ्जाते पुनर्जन्माभावात् कदाऽपि कस्यापि उपकार-करणासम्भवात् मोक्षस्य निरुपक्रियत्वं, स्वर्गस्य तु न तथा, यतः नियमितकालस्वर्ग-भोगावसाने पुनर्जननात् परोपकारसम्भावना अस्ति इति स्वर्गस्य न निरुप-क्रियत्वमिति बोद्धव्यम्।

(ञ) पुष्पवृष्टिं—कुसुमवर्षणं, मुञ्चन्ति—निक्षिपन्तीति तादृशानां पुष्पवृष्टि-मुचां—कुसुमवर्षिणाम्। विमानैः,—व्योमयानैः। आपूर्य्यत—व्याप्यत (आ+पूर+कर्मणि लङ्-त)।

(ट) जिघांसति—हन्तुमिच्छति [हन+सन्+"सन्यङोः" (६।१।९ पा०) इति, द्वित्वं "अभ्यासाच्च" (७।३।५५ पा०) इति अभ्यासस्य अत इकारः;

राक्षसास्ते सर्वे स्वं स्वं कर्म त्यक्त्वा तन्मुखप्रेक्षिणः कृताञ्जलयः प्रह्वाश्चाभवन्”।

इति विचित्रां कथामाख्याय स वेतालस्तं पुनरब्रवीत्,—“राजन्! तेन बालकेन तादृशे तस्मिन् प्राणान्तसमये यत् हसितं, तस्य को हेतुः? महदत्र कौतुकं मम, यदि न वक्ष्यसि जानन्नपि, तदा ते मूर्द्धा शतधा विदलिष्यति”। एतदाकर्ण्य स राजा तं प्रत्यभाषत,—“शृणु तस्य शिशोर्हासे अभिप्रायम्: यो हि दुर्बलो जन्तुः भये प्रत्युपस्थिते प्राणार्थं मातरं पितरं, तदभावे राजानं त्राणार्थं विधात्रा निर्मितम्, (ठ) एषाञ्चालाभे देवतामाक्रन्दति, तस्य एकोऽपि एतेषु आश्रयो भवेत्, अस्य तु सर्वमेव अन्यथा जातम्; पितृभ्यां हस्तपादं धृतम् अर्थ-तृष्णया, राजा च आत्मानं त्रातुं स्वयं हन्तुमुद्यतः, त्राणरक्षः दैवतमपि तस्य भक्षणार्थमुपस्थितम्। (ड) अध्रुवस्य अन्तविरसस्य आधिव्याधियुक्तस्य देहस्यार्थे विमूढानामीदृक् विडम्बनं, यत्र

---

“अभ्यासाच्च” (७।३।५५ पा०) इति हस्य कुत्वम् “अञ्झनगमां सनि” (६।४।१६ पा०) इति हन्तेर्दीर्घः, ततः लट्-तिप्]। प्रह्वाः,—विनताः।

(ठ) एषां—मातापितृराज्ञाम्। आक्रन्दति—आह्वयति, क्रन्दति वा (आ+क्रन्द+लट्-ति। “आक्रन्दः क्रन्दने हाने मित्रदारुणयुद्धयोः। आर्त्तध्वपि च” इति मेदिनी)। अन्यथा—विपरीतम्। अर्थतृष्णया—धनलिप्सया (“तृष्णा स्यात्तर्ष-लिप्सयोः” इति मेदिनी)। दैवतं—देवता, देवयोनित्वात् तस्य देवतात्वमव-गन्तव्यम्।

(ड) अध्रुवस्य—अनिश्चितस्य, अस्थायिनः इति यावत्, अन्ते—परिणामे, वार्द्धक्यदशायामित्यर्थः, विरसस्य—अप्रीतिकरस्येत्यर्थः, सर्वकर्मसु असामर्थ्यात् विविधव्याधिपीडितत्वाच्चेति भावः, आधिः,—मानसी व्यथा (“पुंस्याधिर्मानसी व्यथा” इत्यमरः), आधिव्याधियुक्तस्य—मानसशारीरव्याधियुक्तस्य। विडम्बनं—तिरस्कारः, अर्थादिलालसया धर्मच्युतिरिति भावः।

---

ब्रह्मविष्णुरुद्रादयोऽपि अवश्यं विनाशिनः, तत्रैषाम् ईदृशानां शरीरस्थैर्य्यवासना काऽपि ? एतत् मोहवैचित्र्यमेषां दृष्ट्वा वाञ्छितं सिद्धम् मत्वा आश्चर्य्यहर्षोदयात् स द्विजशिशु-र्जहास"। इति राजवचनमाकर्ण्य स वेतालः तस्य स्कन्धात् भूयोऽपि स्वकं निलयमाससाद। राजाऽपि दृढ़सङ्कल्पस्तमनु-ययौ। अम्भोनिधीनामिव सतां हृदयमक्षोभ्यं हि।

---

## अथ एकविंशकथा।

अथ राजा पुनः शिंशपामूलं गत्वा तं वेतालं स्कन्धेनादाय सत्वरं प्रतस्थे। तञ्च प्रस्थितं दृष्ट्वा स्कन्धवर्त्ती स वेतालः प्राब्रवीत्,—"राजन्! (क) उद्गाढ़कन्दर्पामिकां कथां शृणु, कथयामि,—

अस्ति अमरावतीव परा (ख) सुकृतिनां दिवश्च्युतानां कृते धात्रा विहिता विशाला नाम पुरी। तस्यामासीत् (ग) सच्चक्रनन्दनः श्रीमान् आक्रान्तबलिराजकः पद्मनाभ इति विश्रुतो नृपतिः। तस्मिंश्च राजनि तस्यां नगर्य्यां महावणिक्

(क) उद्गाढः,—अत्यर्थः, कन्दर्पः,—कामः, कामप्रसङ्गः इति यावत्, यस्य ताहृशीम् उद्गाढकन्दर्पां—प्रगाढमन्मथविषयिणीम् (विश०। बहुव्री०)।

(ख) सुकृतिनां—पुण्यवतां, दिवश्च्युतानां—स्वर्गभ्रष्टानाम्।

(ग) सच्चक्राणां,—साधुसमूहानां, नन्दयतीति नन्दनः,—आनन्दप्रदः सच्चक्रनन्दनः,—सज्जनरञ्जनः, शिष्टपालयिता इति यावत्, अथवा,—सत—उत्कृष्टं विद्यमानं वा, चक्रं—सुदर्शनाख्यं, नन्दनः,—नन्दकाख्यः खड्गः इत्यर्थः, यस्य सः ("खड्गो नन्दकः" इत्यमरः)। आक्रान्तम्,—अभिभूतं, पराजितमिति यावत्, बलि—बलवत्, राजकं—राजसमूहः ("अथ राजकम्। राजन्यकञ्च नृपतिक्षत्रियाणां गणे क्रमात्" इत्यमरः) येन सः आक्रान्तबलिराजकः,—वशीकृतप्रबलराजमण्डलः,

अर्थदत्तो नाम धनैः (घ) विजितधनपतिः प्रतिवसति स्म। तस्य अनङ्गमञ्जरीति एका सुता उदपद्यत, (ङ) यया सुरसुन्दरी-प्रतिकृतिर्धात्रा दर्शिता। तेन वणिजा ताम्रलिप्तिनिवासिने मणिवर्मनाम्ने वणिजे सुता सा प्रदत्ता। एकापत्यतया च (च) अतिवत्सलः स वणिक् तां भर्त्तृयुक्तां कन्यामनङ्गमञ्जरीं न तत्याज। स तु मणिवर्मा रोगिणः कटुतिक्तमौषधमिव तस्या अनङ्गमञ्जर्य्याः (छ) द्वेष्यो बभूव। भर्त्तुस्तु तस्य सा सुन्दरी जीवितादपि कृपणस्य सुचिरसञ्चिता समृद्धिरिव प्रियतराऽभूत्।

एकदाऽसौ मणिवर्मा उत्कण्ठया पित्रोरन्तिकगमनाय ताम्रलिप्तिं प्रातिष्ठत। ततो दिनेषु गच्छत्सु (ज) तीक्ष्णसूर्य्यांशु-सायकैः प्रोषितानां निरुद्धमार्गः निदाघकालः समुपस्थितः।

---

अध्यव,—आक्रान्तः बलिराजः,—बलिनामा दैत्याधिपतिः येन सः, पद्मनाभः,—तदाख्यः राजा विष्णुश्च। विश्रुतः,—विख्यातः।

(घ) विजितः,—पराभूतः, अधरीकृत इति यावत्, धनपतिः,—कुबेरः येन सः विजितधनपतिः,—खर्वीकृतधनेश्वरः, कुबेरादपि धनवानिति भावः (विघ०। बहुव्री०)।

(ङ) यया—अनङ्गमञ्जर्य्या (करणे तृया०), सुरसुन्दरीप्रतिकृतिः,—देवाङ्गनाप्रतिमा, अनङ्गमञ्जरीं दृष्ट्वा देवाङ्गना अपि ईदृश्य एव भवन्ति इति विधात्रा ख्यापितम् इति निष्कर्षः, देवाङ्गनासदृशी सा आसीदिति भावः।

(च) अतिवत्सलः,—अतिस्निग्धः, अतिशयेन स्नेहपरायण इत्यर्थः। भर्त्तृयुक्ता—पतिसहितां, कन्यां जामातरं च गृहे एव ररक्ष इति समुदायार्थः।

(छ) द्वेष्यः,—विद्वेषपात्रम्।

(ज) तीक्ष्णाः,—प्रचण्डाः, सूर्य्यांशवः,—सूर्य्यकिरणाः, सायकाः,—शरा इव तैः तीक्ष्णसूर्य्यांशुसायकैः,—प्रखरसूर्य्यमयूखरूपबाणवर्षैः (करणे तृया०), प्रोषितानां—प्रवासिनाम्। निदाघकालः,—ग्रीष्मर्त्तुः, प्रखरसूर्य्यातपसन्तप्ताः पथिकजनाः अन्तुं नाशक्नुवन् इति फलितम्।

(झ) वसन्तविरहात् ककुभां मुखनिःश्वासा इव मल्लिका-पाटलाऽऽमोदमेदुरा मरुतो वान्ति स्म। (ञ) पवनोद्धूता रेणुराजयः तप्तया भुवा घनागमायेव गमनं प्रहिता दूत्य इव समुत्पेतुः। दिवसा अपि कठोरातपतापिताः (ट) आकाङ्क्षित-तरुच्छायाः पथिका इव चिरेण यान्ति स्म। (ठ) निशाश्च चन्द्रांशुपाण्डुरच्छायाः गाढाश्लेषसुखप्रदं हेमन्तं विना

---

(झ) वसन्तविरहात्—ग्रीष्मागमनेन वसन्तापगमनजनितशोकादिति भावः, मुखनिःश्वासा इव इति उपमानसाधर्म्यात् कान्तविरहादिति ध्वनिः, ककुभां—दिशां, दिगङ्गनानामिति यावत्, पूर्ववत् कासाञ्चिन्नायिकानामिति ध्वनिः ("दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः), मुखनिःश्वासा इत्यनेन निःश्वासस्य सौगन्ध्यं नायिकानाञ्च पद्मिनीत्वं व्यञ्जितं, पद्मिन्या एव मुखादिषु सौगन्ध्यस्य विद्यमानत्वादिति भावः; मल्लिकापाटलयोः,—तदाख्यपुष्पविशेषयोः, आमोदेन—अतिदूरप्रसारिमनोहरगन्धेन ("विमर्द्दोत्थे परिमलः गन्धे जनमनोहरे। आमोदः सोऽतिनिर्हारी" इत्यमरः), मेदुराः,—सान्द्रस्निग्धाः, प्रगाढहर्षजनना इत्यर्थः (विष०। ३या तत्पु०। "सान्द्रस्निग्धस्तु मेदुरः" इत्यमरः)। वान्ति—प्रवहन्ति (वा+लट् अन्ति), यथा काचित् कान्तवियोगविक्लवा दीर्घं निःश्वसिति, तथा दिगङ्गना अपि वसन्तकान्तवियोगात् मुखेन, मल्लिकापाटलामोदमेदुरमरुच्छलेन निःश्वसन्ति इति मन्तव्यम्।

(ञ) पवनोद्धूताः,—वातेन उत्क्षिप्ताः। तप्तया—आतपपीडितया, भुवा—पृथिव्या, घनागमाय—मेघानयनाय, सन्तापशान्त्यर्थं जलदस्य आह्वानायेत्यर्थः ("घनो मेघे मूर्त्तिगुणे त्रिषु मूर्त्ते निरन्तरे" इत्यमरः)। प्रहिताः,—प्रेरिताः, वातोत्क्षिप्ता धूलिराशयः आतपतप्तया पृथिव्या सन्तापशान्त्यर्थं मेघाह्वानाय प्रेरिता दूतीसमूहा इव प्रतीयिरे इति निष्कर्षः।

(ट) आकाङ्क्षिताः,—अभिलषिताः, तरूणां छायाः,—अनातपाः येषु यैश्च ते आकाङ्क्षिततरुच्छायाः,—इष्टतरुच्छायाशीतलभूभागाः (विष०। बहुव्री०), दिवसपक्षे,—येषु दिवसेषु तरुच्छाया आकाङ्क्षणीया इति, पथिकपक्षे,—यैः पथिकैः तरुच्छाया आकाङ्क्ष्यते इति अर्थः; आतपतापिताः पथिका यथा गन्तुमक्षमाः तरुच्छायायां विश्रम्य विश्रम्य सुदीर्घकालेन गन्तव्यमध्वानं यान्ति स्म, दिवसा अपि तथैव सुदीर्घकालेन अतिक्रामन्ति, ग्रीष्मदिवसस्य सुदीर्घत्वादेवमुत्प्रेक्षा इति मन्तव्यम्।

(ठ) निशाः,—रात्रयः, काश्चित् विरहिण्यश्चेति ध्वनिः, चन्द्रांशुना—चन्द्रकिरणेन,

अतिदुर्बलतां ययुः। एतस्मिन् समये चन्दनानुलिप्ताङ्गी (ड) परिहिततनुवसना स्वगृहवातायनस्थिता अनङ्गमञ्जरी केनापि आप्तेन सुहृदा सहितं भव्यं युवानं रतिप्रार्थये सञ्चरन्तं नवोत्पन्नं स्मरमिव कमलाकरनामानं राजपुरोहितसुतं ददर्श। सोऽपि (ढ) कमलाकरः इन्दोरिव मूर्त्तिमुपरिस्थितां तां कान्तां दृष्ट्वा सानन्दः कुमुदाकरतामभजत। तदा

---

ज्योत्स्नयेति यावत्, शुक्लपक्षे इति भावः, पाण्डुराः,—पाण्डुवर्णाः, छायाः,—कान्तयः यासां ताः, अन्यच,—चन्द्रांशुना—चन्द्रकिरणेन, चन्द्रोदयदर्शनेनेवति भावः, पाण्डुराः,—पाण्डुवर्णाः, छायाः,—कान्तयः यासां ताः, चन्द्रोदयस्य विरहिणीनामतिसन्तापकत्वादिति भावः, यद्वा,—चन्द्रांशुवत्—चन्द्रकिरणवत्, पाण्डुराः छाया यासां ताः, विरहसन्तप्तानां पाण्डुवर्णत्वादिति भावः, चन्द्रांशुपाण्डुरच्छायाः,—चन्द्रकिरणपाण्डुकान्तयः (विश०। बहुव्री०), गाढाश्लेषः,—निविडालिङ्गनं, सुखप्रदः,—प्रीतिदायकः, शैत्यनिवारणायेति भावः, यत्र तम्, अन्यच,—गाढाश्लेषेण—निर्दयालिङ्गनेन, सुखं प्रददातीति तादृशं गाढाश्लेषसुखप्रदं—प्रगाढालिङ्गनसुखदायकमित्यर्थः, हेमन्तं, कञ्चित् कान्तञ्चेति ध्वनिः। अतिदुर्बलताम्—अतिक्षीणताम्, एकत्र,—स्वल्पत्वदशाम्, अन्यत्र,—शरीरकार्श्यलक्षणमिति भावः, [illegible] अतीव कृशत्वादिवमुत्प्रेक्षेति बोद्धव्यम्।

(ड) परिहितं—पिधानीकृतं, तनु—सूक्ष्मं ("स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु" इत्यमरः), वसनं यया सा परिहिततनुवसना—परिहितसूक्ष्मवस्त्रा। आप्तेन—प्रत्ययितेन, विश्वस्तेनेत्यर्थः, ("आप्तः प्रत्ययितास्त्रिषु" इत्यमरः)। भव्यं—शुभं, सुन्दराकारमिति यावत्। रतेः,—कामपत्न्याः, प्रार्थये—लाभाय रतिप्रार्थये—[illegible]। नवोत्पन्नम्—अभिनवसञ्जातं, हरकोपानलेन भस्मीभवनानन्तरं पुनर्जातमित्यर्थः।

(ढ) कमलाकरः,—पद्माकरः, सपद्मसलिलाशय इत्यर्थः, यद्वा,—कमलाकरः,—पद्मनिवहः, पद्मसमूह इत्यर्थः ("आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते" इति मेदिनी), तन्नामा युवा च, इन्दोरिव मूर्त्ति—चन्द्रस्य मूर्त्तिमिव, चन्द्रवदाह्लादजननीं चन्द्राननाञ्चेति भावः। कान्ता—नारीं ("कान्ता भार्या प्रियङ्गौ स्त्री" इति मेदिनी)। कुमुदाकरतां—कैरवाकरतां, कैरवसमूहतामित्यर्थो वा, अभजत—प्राप्नोत्, कमलाकरः कुमुदाकरतामभजत इति विरोधः, कमलाकरनामा कश्चित् युवा, कुमुदाकरस्य भावः तत्तां कुमुदाकरतां—प्रफुल्लतामित्यविरोधः, निशि

तयोः (ग) यूनोरन्योन्यावलोकनं स्मरस्य गुरोरनुज्ञया अचूर्णं मनःसंवलनमभूत्। इत्थं तां दृष्ट्वैव स कमलाकरः सद्यो मदनाविष्टः सुहृदा तेन कथञ्चित् स्वं भवनमनीयत। सा चानङ्गमञ्जरी तथैव मन्मथमोहिता सख्या मुखात् तन्नामधामनी श्रुत्वा तयैव सह शनैः (त) वासकं विवेश। तत्र तं कान्तं सञ्चिन्तयन्ती कामज्वरातुरा शयनीये केवलं लुठन्ती किमपि नापश्यत् नाप्यशृणोत्।

इत्थं गतेषु द्वित्रेषु दिनेषु मत्रपा मभया विरहेण क्षशपाण्डुरा (थ) दुष्प्रापप्रियसम्भोगनिरास्था नक्तमेकदा गवाक्षप्रेरितकरेणेन्दुना आकृष्टेव सुप्ते परिजने निर्गत्य मरणानिश्चया

---

चन्द्रोदये कुमुदानां विकाशेन कुमुदाकराणामपि विकस्वरत्वेन प्रतीयमानत्वात् इति कुमुदसमूहानां विकशनशीलत्वादिति वा भावः, चन्द्रं पश्यन् कुमुदाकरो यथा मोदते, चन्द्रमूर्तिमिव अनङ्गमञ्जरीं पश्यन् कमलाकरोऽपि तथा मुमुदे इति निष्कर्षः।

(ग) युवती च युवा च तयोः यूनोः,—तरुणयोः ["पुमान् स्त्रिया" (१।२।६७ पा०) इति एकशेषः]। गुरोः,—गुरुरूपस्य इत्यर्थः। अचूर्णं—चूर्णं विनाऽपि, मनःसंवलनं—हृदयस्य सम्मेलनमित्यर्थः, न हि द्रवपदार्थादन्यत् किमपि द्रव्यं चूर्णीभूतं विना परस्परं मिलितं भवति, अत्र तु कामस्य गुरुरूपस्य प्रभावेण चूर्णं विनाऽपि परस्परमनसी संयोजनमभिति अपूर्वप्रभावः खलु गुरुरिति भावः।

(त) वास एव वासकः तं वासकं—वासगृहम् (स्वार्थे कन्)।

(थ) दुष्प्रापस्य—दुःखेन प्राप्तुमशक्यस्य, प्रियस्य—चित्तहर्त्तुः, सम्भोगे—सम्भोगविषये, निरास्था—निरपेक्षा, निराशा इत्यर्थः, यद्वा,—निरास्था—यत्नविरहिता, दुष्प्रापत्वबुद्धेरेवेति भावः, दुष्प्रापप्रियसम्भोगनिरास्था—दुर्लभप्रियसमागमनिराशा, प्रियसमागमं दुर्लभं मत्वा प्रतियत्नविरहिता इत्यर्थो वा। गवाक्षेण—वातायनमार्गेण, प्रेरितः,—चालितः, करः,—हस्त इव करः,—किरणो येन तेन गवाक्षप्रेरितकरेण—वातायनपथप्रसृतकिरणेन (विश०। बहुव्री०), आकृष्ट इति पदसामर्थ्यात् कर इव कर इति उपमितिसमासो बोद्धव्यः, यथा कश्चित् कमपि करेणाकृष्य बहिर्निःसारयति, तथा इन्दुरपि करेणेव करेण अनङ्गलेखा-

स्वगृहोद्यानवापीं तत्तलवर्त्तिनीमगात्। तत्र पित्रा कृत-प्रतिष्ठां कुलदेवतां चण्डीं समुपेत्य प्रणम्य स्तुत्वा च व्यजिज्ञपत्,—"देवि! अस्मिन् जन्मनि चेत् न मया कमलाकरः पतिः प्राप्तः, तदा अन्यस्मिन् जन्मनि स मम पतिर्भूयात्" इति प्रार्थ्य तस्या देव्याः पुरतः अशोकपादपे स्वोत्तरीयेण पाशं विरचयामास। तावच्च तस्याः सा आप्ता सखी प्रबुध्य वासके तामदृष्ट्वा (द) चिन्वती दैवात् तदुद्यानमगात्, तत्र चागत्य तां गले पाशं योजयन्तीं दृष्ट्वा "मा मा" इत्युक्त्वा प्रधाव्यैव तस्यास्तं पाशमच्छिनत्। साऽपि तां छिन्नपाशां निजां सखीं प्राप्तां दृष्ट्वा अतिदुःखिता भूमौ पपात।

ततश्च सख्या तया समाश्वासिता पृष्टा च दुःखहेतुं समुत्थाय तामकथयत्,—"सखि मालति! दुर्लभे तस्मिन् प्रियसङ्गमे पित्रादिपरतन्त्रायाः मे मरणात् परं सुखं नास्ति" इति ब्रुवाणा भृशमनङ्गशराग्निज्वलिता (ध) नैराश्यनिश्चयवती मोहं जगाम। "हा कष्टं! स्मरस्य (न) शासनं तथा दुर्लङ्घ्यं, यथा इयमेतां दशां नीता" इति विलपन्ती सा मालती सखी तां शीताम्बुपवनादिभिः शनैराश्वासयामास, चकार चास्याः

माकृष्य बहिरनयत् इति तात्पर्य्यम्; चन्द्रकिरणस्य विरहिणीनामतिसन्तापकत्वात् तदसहिष्णुतया मरणनिश्चया गृहान्निर्ययौ इति भावः।

(द) चिन्वती—अन्वेषयन्ती (चि+लटः शतृ, उगितश्चेति ङीप्)। पाशं—रज्जुम्। मा मा—न न, म्रियस्व म्रियस्व इति शेषः।

(ध) नैराश्यं—प्रियसमागमे निराशत्वमेव, निश्चयः,—निश्चितम् अस्ति अस्या इति नैराश्यनिश्चयवती—समधिकनिराशा सतीत्यर्थः (विश०। बहुव्री०। अस्त्यर्थे मतुप्)।

(न) शासनम्—आज्ञा, त्वमेतेन सह नूनं सङ्गच्छताम् इत्येवंरूप आदेशः इत्यर्थः ("शासनं राजदत्तोर्व्यां शिक्षाज्ञाशास्त्रशास्तिषु" इति मेदिनी)। नीता, कारितेति शेषः, शासनबलादिति भावः।

तापोपशान्तये नलिनीदलैः शय्यां, ददौ हृदये तुहिनशीतलं हारम्। ततः सा अनङ्गमञ्जरी लब्धसंज्ञा शनैः तां सखीम् उद्दिश्य प्रोवाच,—“सखि! हारादिभिः नायं मे अन्तर्दाहः प्रशाम्यति, यदि मां जीवितामिच्छसि, तदा सुयुक्त्या तेन कान्तेन योजय”। एवंवादिनीं तां स्नेहाऽऽर्द्रा मालती प्राब्रवीत्,—“सखि! प्रायेणाद्य निशा गता, तत् प्रातरेव इह तं ते प्रियतमं (प) सङ्केतेन आनेष्यामि, तस्मादालम्ब्य धृतिमधुना त्वं निवेशनं गच्छ” इत्युक्तवत्यै सख्यै साऽनङ्गमञ्जरी तुष्टा कण्ठादाकृष्य हारं पारितोषिकं दत्तवती। “गच्छावं इदानीं स्वगृहं, ततः प्रातः कार्यसिद्धये गन्तव्यं त्वया” इति तां सखीमुपदिश्य सा स्वमावासं प्राविशत्।

अथ प्रातः सा मालतिका केनाप्यनुपलक्षिता तस्य कमलाकरस्य भवनं चिन्वती गत्वा तत्रोद्यानतरुमूले चन्दनार्द्रपद्मिनीदलशय्यायां स्थितम्, एकेन (फ) रहस्यविदा सुहृदा कदलीदलवीजनैराश्वास्यमानं, कामाग्निना दन्दह्यमानं, तं कमलाकरमद्राक्षीत्। सा तु,—“मम सख्या विना एतस्य ईदृशी कामावस्था स्यात्, न वा” इति वेदितुं प्रच्छन्ना (ब) विनिश्चयं तस्थौ। तावत्

(प) सङ्केतेन—अभिसारेण, मनागतार्थसूचकस्य भावविशेषस्य इङ्गितादिना प्रकाशनेनेत्यर्थो वा। आलम्ब्य—आश्रित्य (आ + लबि + ल्यप्), धृतिं—धैर्यम्। निवेशनं—भवनम्।

(फ) रहस्यं—गोपनीयम्, अनङ्गमञ्जरीदर्शनेन निजं प्रच्छन्नमदनविकारविशेषमित्यर्थः (“रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्” इति मेदिनी), वेत्ति इति तेन रहस्यविदा—मर्मज्ञेन सखिना इत्यर्थः। कदलीदलैः,—रम्भापत्रैः कृतानि, वीजनानि—व्यजनवाय्वादीनि तैः कदलीदलवीजनैः,—रम्भापत्रकृतव्यजनानिलैः (शाकपा०)। दन्दह्यमानम्—अतिशयेन गर्हितं दहन्तं (दह + यङ् + शानच्; शानच्)।

(ब) विनिश्चयं—विशेषेण निश्चयं यथा तथा (क्रिया विशे०), वेदितुं मध्यनेनान्वयः, निश्चयरूपेण ज्ञातुमित्यर्थः।

सुहृत् स कमलाकरमवादीत्,—"मित्र! क्षणमत्र मनोरमे उद्याने दत्तदृष्टिः (भ) अन्तःकरणं विनोदय, मा भृशं व्याकुलतां गमः"। तदाकर्ण्य स सुहृदं तं जगाद,—"मम अनङ्गमञ्जर्य्या मनो हृतं, (म) तदिदं मदीये शरीरे एव नास्ति, कुतो विनोदयामि? स्मरेणाहं शून्यहृदयो बाणतूणीकृतोऽस्मि, तत् यथा तां मनश्चौरीं प्राप्नोमि, तथोपायं विधत्स्व"। इति तेनोक्ते सा मालती निःशङ्का सम्प्रहृष्टा समुपेत्य आत्मानं प्रदर्श्य तमुवाच,—(य) "सुभग! अनङ्गमञ्जर्य्या तवान्तिकं प्रहिताऽस्मि, निसृष्टाऽहं ते सन्देशं ब्रवीमि; क एष शिष्टधर्मः, यत् हठात् हृदयं प्रविश्य मुग्धाया मनः मुषित्वा गम्यते? चित्रमिदं, तथाऽपि वामदृशा तया अधुना मनोहराय तुभ्यं देहोऽपि प्राणैः सह दातुमिष्यते। सा हि सन्तप्तान् दिवानिशं हृदि ज्वलितस्य कामाग्नेर्धूमानिव निःश्वासान् विमुञ्चति, मुहुश्चास्याः

(भ) अन्तःकरणम्—अन्तरिन्द्रियं, मन इत्यर्थः।

(म) तदिदं—मनः। शून्यहृदयः,—शून्यमनाः ("चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः); अनङ्गमञ्जर्य्या हृदयहरणात् तस्य शून्यत्वमवगन्तव्यम्. बाणानां—शराणां, पञ्चसङ्ख्यकानामिति भावः, तूणीकृतः,—तूणीरीकृतः, आधारीकृत इत्यर्थः, बाणतूणीकृतः,—इषुधीकृतः (विण०), पञ्चशरः शून्यहृदयं मां वेदनाबोधरहितं मत्वा निजपञ्चसङ्ख्यकानामिव शराणामाधारीकृतवानित्यर्थः, मामजस्रं बाणैः पीड़यतीति भावः।

(य) सुभग!—कामिनीविमोहन!। प्रहिता—प्रेरिता (प्र+हि+क्त, स्त्रियां टाप्)। निसृष्टा—प्रेरिता, यद्वा,—निसृष्टा—मध्यस्था, उभयोरेव मङ्गलसाधने व्यापृता इत्यर्थः। सन्देशं—वाचिकम्। वामे—सुन्दरे, दृशौ—नेत्रे यस्याः तया वामदृशा—वामलोचनया, यद्वा,—वामः,—कामः, दृशोः,—नयनयोः अस्यस्याः तया वामदृशा—दर्शनेन जनितानङ्गया ("वामं धने पुंसि हरे कामदेवे पयोधरे। वल्गुप्रतीपसव्येषु त्रिषु नार्य्यां स्त्रियाम्" इति मेदिनी), अथच वामदृशा—विपरीतदर्शनया, विपरीतदर्शित्वञ्चेदं यत, यः खलु मनश्चौरः, तस्मै एव प्राणैः सह देहस्यापि दानेच्छा, चित्रमपीदमेव।

(र) साञ्जना वाष्पविन्दवः वदनाम्भोजसौरभलुब्धा मधुकराः इव सम्पतन्ति, तत् यदीच्छसि, तदा उभयोः शिवं वच्मि"। इति मालत्या तथोक्तः कमलाकरः प्रोवाच,—"भद्रे! तवेयं वाक् (ल) विधुरावस्थां बद्धभावाञ्च मे प्रियां वदन्ती भयं करोति, आश्वासयति च। तदेका त्वमेवात्र गतिः, तत् यथोपायं कुरुष्व"। इति तेनोक्ते मालती प्रत्यवोचत्,—"अद्य तामनङ्गमञ्जरीं गुप्तं नक्तं स्वभवनोद्यानं प्रापयिष्यामि, त्वं तत्र वाह्यतः तिष्ठेः, ततस्त्वां सुयुक्त्या तत्र प्रवेशयिष्यामि, इत्थं युवयोः समागमो भविता"। इति कथयित्वा तं विप्रपुत्रमानन्द्य मालती कृतार्था गत्वा तामनङ्गमञ्जरीम् अभ्यनन्दयत्।

अथाह्ना सह दिनपतौ (व) सन्ध्यानुरागिणि क्वापि गते वासवाशया स्वानने इन्दुतिलकेन प्रसाधिते, पद्माकरं त्यक्त्वा श्रीरिदानीं मां प्राप्तेति हर्षात् उत्फुल्लवदने विशदे कुमुदाकरे

(र) साञ्जनाः,—कज्जलमिश्राः, कज्जलयुक्तत्वेन वाष्पविन्दूनां कृष्णवर्णत्वात् सत मधुकरत्वोत्प्रेक्षा। शिव—मङ्गल, मङ्गलजनकं वाक्यमित्यर्थः।

(ल) विधुरावस्था—विकलदशां, कामसन्तापजामतिदुःखकरीमवस्थामित्यर्थः, बद्धभावां—ज्ञाताभिप्रायाम्, अनुरक्तामित्यर्थः, मे—मह्यम्। भयं करोति—कारयतीत्यर्थः (अन्तर्भूतण्यन्तप्रयोगोऽयं), विधुरावस्थतया भयं कारयति, बद्धभावतया च आश्वासयतीति क्रमोऽत्रानुसन्धेयः।

(व) सन्ध्याम् अनु—लक्ष्यीकृत्य, रागः,—रक्तता अस्यास्तीति तस्मिन् सन्ध्यानुरागिणि—सन्ध्यायामरुणवर्णे, अथच, सन्ध्यानाम्न्यां कन्यायामनुरागवति (अस्यर्थे इनिः), क्वापि गते—अदर्शनं गते, अस्तं गते इत्यर्थः, वासवाऽऽशया—पूर्वदिशा, इन्द्रस्य पूर्वदिगधिपतित्वात्। इन्दुः—चन्द्रः, तिलकमिव तेन इन्दुतिलकेन—तिलकवत् प्रतीयमानचन्द्रेण, यथा काचित् तरुणी प्रसाधनकाले कपोललालाटादिस्थाने तिलकादिकं रचयति, तथा वासवाशा युवतिरपीति भावः। पद्माकरं—पद्मसरोवरं, पद्मसमूहमिति वा ("आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते" इति मेदिनी)। श्रीः,—लक्ष्मीः, तस्याः पद्मालयत्वात्, अथ च, श्रीः,—शोभा, इदानीम्

हसति, स कामी कमलाकरः प्रसाधिताङ्गः समुत्सुकः स्वैरं कान्तायास्तस्या गृहोद्यानद्वारि समुपागमत् । मालती च तामनङ्गमञ्जरीं कृच्छ्रात् (श) गमितवासरां युक्त्या तत् गृहोद्यानमानिनाय, आनीय तां चूतशाखिनां तलेषु समुपवेश्य निर्गत्य तत्र तं कमलाकरं प्रावेशयत् । स च प्रविश्य पान्थ इव (ष) पत्रौघघनपादपमध्यवर्त्तिनीं छायामिव तामनङ्गमञ्जरीमद्राक्षीत् । यावच्च स तामुपैति, तावत् सा दृष्ट्वैव प्रधाव्य कामाऽऽवेशच्छिन्नव्रीड़ा कण्ठे तं सहसाऽग्रहीत् । "क्व यासि ? लब्धोऽसि मया मनस्तस्कर !" इत्यालपन्ती तत्क्षणं सा (स) अतिहर्षभरस्तब्धनिःश्वासा पञ्चतामगात्, पपात च महीपृष्ठे वातरुग्णा लतेव, विचित्रं बत कामस्य विषमः क्रमः । तत्

—अधुना, रात्रौ इत्यर्थः, पद्मानां दिवाविकाशित्वात् तत्र दिवसे शोभितत्वात्, रात्रौ पुनः चन्द्रोदये कुमुदसमूहे विकशिते पद्मसमूहे च मुदिते लक्ष्मीः कमलवनं त्यक्त्वा कुमुदाकरमागच्छतीत्याशयेत्यर्थः । स्वैरं—मन्दं मन्दम् ।

(श) गमितः,—अतिवाहितः, वासरः,—दिवसो यया ता गमितवासराम् —अतिक्रान्तदिवसां, धैर्यधारणासहिष्णुतयेति भावः । चूतशाखिनाम्—आम्रवृक्षाणाम् ।

(ष) पत्रौघेन—पत्रसमूहेन, घनानां—सान्द्राणां, निविड़ानामित्यर्थः, निरन्तरालानामिति यावत्, पादपानां—वृक्षाणां, मध्यवर्त्तिनीं—मध्यस्थां पत्रौघघनपादपमध्यवर्त्तिनीं—घनसन्निविष्टपत्रसमन्वितवृक्षमध्यस्थिता (विश० । बहुव्री०), छायामिव—अनातपमिव, सुशीतलामिति भावः, सश्रमः पथिक् यथा सुशीतलां वृक्षच्छायां दृष्ट्वा तृप्यति, तथा कमलाकरोऽपि कामसन्तापहारिणीं वृक्षाधःस्थां तां शैत्यसम्पादनीं दृष्ट्वा अतृप्यत् इत्याशयः ।

(स) अतिहर्षभरेण—प्रबलानन्दवेगेन, स्तब्धः,—रुद्धः, निःश्वासो यस्याः सा अतिहर्षभरस्तब्धनिःश्वासा—अत्यानन्दोदयनिरुद्धश्वासवेगा सतीत्यर्थः । वातेन—प्रबलवायुना, रुग्णा—भग्ना वातरुग्णा—वायुना भग्ना (विश० । ३या तत्पु०), लतेव—शाखेव । बत—खेदार्थकमव्ययम् । क्रमः,—आक्रमणं, शक्तिर्वा ("क्रमश्चानुक्रमे शक्तौ कल्पे चाक्रमणेऽपि च" इति मेदिनी) ।

अग्निपातमुखं दृष्ट्वा स कमलाकरः सद्यः,—"हा! हा! किमेतत्!" इत्युक्त्वा मूर्च्छितो निपपात। क्षणेन च लब्ध-संज्ञस्तां प्रियामङ्कमारोप्य आलिङ्गन् परिचुम्बन् बहु विलपंश्च तथा दुःखातिभारेण प्रसह्य न्यपीड्यत, यथा तस्यापि तदा हृदयमस्फुटत्। अथ तौ तथा (ङ) क्षीणौ दृष्ट्वा रजनी ह्रिया भिया च क्षीणेवाभवत्।

अथ प्रातरुद्यानपालेभ्यस्तं वृत्तान्तं ज्ञात्वा तयोर्बन्धुजनः (क) त्रपाऽऽश्चर्य्यदुःखमोहाऽऽकुलः तत्राऽऽगात्, कर्त्तव्यमूढश्च चिरमवाङ्मुखः समभवच्च। हा! कष्टं (ख) कुयोषितः कुल-खलीकारहेतवः। तस्मिंश्चावसरे तस्याः पतिः मणिवर्मा अनङ्गमञ्जर्य्यां सोत्कण्ठः तामन्वालिङ्गितः पितृगृहात् समाययौ। स श्वाशुरं गृहं प्राप्य तं व्यापारमवेक्ष्य च वाष्पाम्बुलोचनो (ग) ध्यायन् तदेवोद्यानमागत्य भार्य्यां तामन्यसहितामपि गतासुं दृष्ट्वा शोकाग्निज्वलिताङ्गः सद्यः प्राणान् विजहौ।

ततः सर्वस्मिन् जने कोलाहलाऽऽकुले क्रन्दति ज्ञात-वृत्तान्ताः सर्वे पौरास्तत्र समाययुः। अथ अनङ्गमञ्जर्य्याः पित्रा पूर्वं प्रतिष्ठापिता सन्निहिता देवी चण्डी निजैः

---

(ङ) क्षीणौ—विशीर्णौ, मृतौ इति यावत्। ह्रिया—लज्जया। क्षीणेव—क्षयं गतेव, रात्रिरवसितेति भावः।

(क) त्रपा—लज्जा, लोकवादजनितेति भावः, आश्चर्य्यं—कथमीदृग-घटनं घटितमिति विस्मय इत्यर्थः, दुःखमोहौ—तद्वियोगजनितौ इति भावः, तैः आकुलः,—व्याकुलः त्रपाऽऽश्चर्य्यदुःखमोहाकुलः,—लज्जाविस्मयादिभिराक्रान्त इत्यर्थः। अवाङ्मुखः,—अधोमुखः।

(ख) कुयोषितः,—दुश्चरित्राः स्त्रियः, कुलस्य—वंशस्य, खलीकारे—अप-कृतौ, अपवादविषयीकरणे इत्यर्थः, हेतवः,—कारणानि कुलखलीकारहेतवः,—वंशकलङ्ककारणानि।

(ग) ध्यायन्—चिन्तयन् (ध्यै+शतृ: कर्त्तृ)। गतासुं—मृताम्।

(घ) गणैः सकम्पैः विज्ञप्ताऽभूत्,—"मातः! त्वदाकारप्रतिष्ठापयिताऽयमर्थदत्तः सदैव ते भक्तो वणिक्, तदस्य अस्मिन् दुःखे दयां वितरतु भगवती" इति। एतत् गणेभ्यः श्रुत्वा (ङ) शरण्या सा शङ्करी,—"शान्तानङ्गास्त्रयोऽपि एते जीवन्तु" इति समादिशत्। अथ सर्वेऽपि सुप्तप्रबुद्धा इव क्षणात् तत्प्रसादात् जीवन्तो गतमन्मथाः समुत्तस्थुः। ततो दृष्ट्वा तद्व्यापारं सानन्दे तत्रत्ये सर्वस्मिन् जने, कमलाकरः लज्जाऽवनतमुखः स्वगृहं प्रायात्। अर्थदत्तोऽपि तां (च) ह्रीतां सुतामनङ्गमञ्जरीं भर्तृसहितामादाय सोत्सवं गृहं प्रविवेश"।

इति कथां कथयित्वा तस्यां रात्रौ पथि स वेतालः तं (छ) क्षौणीपतिमगदत्,—"राजन्! कस्यैतेषु अनुरागमरणे मोहातिरेकः? जानंश्च न चेत् वदसि, तदा स पूर्वोक्त एव शापः स्मरणीयः"। तदाकर्ण्य राजा तं प्रत्युवाच,—"योगीश्वर! एतेषु मणिवर्मा एवातिमूढः, यो हि भार्य्यामन्यपुरुषाऽऽसक्तां तां दृष्ट्वैव कोपकाले, (ज) प्रत्युत रक्तः शुचा प्राणानमुञ्चत्"।

(घ) गणैः,—डाकिनीयोगिनीगणैः, यद्वा,—गणैः,—प्रमथैः, शिवानुचरभेदैरित्यर्थः ("गणः प्रमथसङ्घौघे चमूसैन्यप्रभेदयोः" इति मेदिनी)।

(ङ) शरण्या—शरणागतरक्षणपरा। शान्तः,—निवृत्तः, अनङ्गः,—कामः येषां ते शान्तानङ्गाः,—प्रशमितकामसन्तापाः (विण०। बहुव्री०)।

(च) ह्रीतां—लज्जितां [ह्री+क्तः "नुदविदोन्दत्राघ्रा—" (८।२।५६ पा०) इति निष्ठा-तस्य वैकल्पिकः नकाराभावः, ताम्]।

(छ) क्षौणी—धरणी ("धरा धरित्री धरणिः क्षौणी ज्या काश्यपी क्षितिः" इत्यमरः), तस्याः पतिं क्षौणीपतिं—राजानम्। अनुरागेण—आसक्त्या हेतुना, मरणं तस्मिन् अनुरागमरणे—आसक्तिहेतुकमृत्यौ (३या तत्पु०), मोहः,—अविद्या, अविवेकिता इति यावत्, तस्य अतिरेकः,—आधिक्यं मोहातिरेकः,—मौढ्यप्राबल्यम्।

(ज) प्रत्युत—वैपरीत्येन, कोपोचितसमये कोपमकृत्वा इत्यर्थः (अव्य०),

इति निगदितवतस्तस्य नृपतेः स्कन्धात् स वेतालः सहसा स्वं निलयं प्रतस्थे। राजाऽपि भूयस्तथैव कृतप्रयत्नस्तमन्वधावत्।

---

## अथ द्वाविंशकथा।

---

अथ राजा तमेव शिंशपातरुं गत्वा तत्र वेतालमादाय स्कन्धे आरोप्य च गन्तव्यभूमिमभिप्रतस्थे। तत्र प्रस्थितं पथि पुनः वेतालः प्राक्रमत वक्तुं,—"राजन्! (क) साधु, सुसत्त्वस्त्वं, तदपूर्वामिमामपरां कथां कथयामि, श्रूयताम्,—

अस्ति कुसुमपुरं नाम नगरम्। तत्राऽऽसीत् धरणीवराहो नाम भूपतिः। तस्य (ख) ब्राह्मणभूयिष्ठे राज्ये ब्रह्मस्थलाभिधोऽग्रहारोऽभवत्। तत्र विष्णुस्वामी नाम कोऽपि द्विजः प्रतिवसति स्म, तस्य (ग) हविर्भुज इव स्वाहा नाम भार्य्याऽभूत्। तस्यां तस्य चत्वारः सुता जज्ञिरे। ते च कालक्रमेण पितरि

---

रक्तः,—अनुरक्तः ("रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु" इति मेदिनी), शुचा—शोकेन।

(क) साधु—शोभनम्, इति प्रशंसावादोऽयम्। सुसत्त्वः,—उत्तमसत्त्वः, महानित्यर्थः।

(ख) ब्राह्मणाः भूयिष्ठं—बाहुल्येन यत्र, तस्मिन् ब्राह्मणभूयिष्ठे—विप्रबहुले (विश०। बहुव्री०)।

(ग) हविः,—घृतं साम्नाय्यं वा, हवनीयद्रव्यमित्यर्थः ("हविर्होतव्यमात्रे च सर्पिष्यपि नपुंसकम्" इति मेदिनी), भुनक्ति—भक्षयति इति तस्य हविर्भुजः,—अग्नेः, स्वाहा नाम—यथैव स्वाहा नाम भार्य्या अस्ति, तथा विष्णुस्वामिनोऽपि स्वाहा नाम भार्य्या आसीत् इत्यर्थः।

स्वर्गते ज्ञातिभिर्हृतसर्वस्वा (च) मिथो मन्त्रयाञ्चक्रुः,—"इह अस्माकं गतिर्नास्ति, तदन्यत्र वयं व्रजामः" इति मन्त्रयित्वा यज्ञस्थलाभिधे ग्रामे मातामहस्याऽऽवासं बहुभिर्दिनैरगमन्, तत्र मातामहाभावात् मातुलैः सुसत्कृताः स्वाध्यायतत्परास्तस्थुः ।

कालक्रमेण ते (छ) अकिञ्चनाः भोजनाच्छादनादिषु तेषां मातुलानामवज्ञाभाजनतां जग्मुः । ततः (ज) स्वजनजेनावमानेन हतात्मनां तेषां ज्येष्ठः रहसि तानब्रवीत्,—"भ्रातरः! किं क्रियते? सर्वं विधिकृतमवधारयत; पुरुषस्येह कस्यचित् क्वचित् किमपि कर्त्तुं न शक्यम्। अहं हि उद्वेगेन भ्राम्यन् काननं प्राप्तः अद्य (झ) विपन्नस्थितं स्रस्ताङ्गं पुरुषं भुवि अद्राक्षम्, अचिन्तयञ्च तां गतिं स्पृहयन्,—'अयं हि धन्यः, यः दुःखभारं विमुच्य स्थितः' इति सञ्चिन्त्य तत्कालं मरणनिश्चयं कृत्वा वृक्षाग्रलम्बिना पाशेन आत्मानमुदलम्बयम्; यावच्च विसंज्ञस्य

(ज) मिथः,—परस्परम् । गतिः,—उपायः । सुसत्कृताः,—अतिशयेनादृताः, स्वाध्यायतत्पराः,—वेदाध्ययननिरता इत्यर्थः ।

(छ) नास्ति किञ्चन—किमपि येषां ते अकिञ्चनाः,—निर्धनाः, भोजनाच्छादनादिषु—अन्नवस्त्रादिषु ।

(ज) स्वजनजेन—आत्मीयजनकृतेन । हतः—प्रतिहतः, भग्नः इत्यर्थः ("मनोहतः प्रतिहतः प्रतिबद्धः हतश्च सः" इत्यमरः), आत्मा—धृतिः, धैर्य्यमित्यर्थः, मनो वा ("आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि" ॥ इति मेदिनी), येषां तेषां हतात्मनां—विलुप्तधैर्य्याणां भग्नमानसानां वा । विधिकृतं—दैवकृतम्, अस्माकमिदमवमाननमिति शेषः । पुरुषस्य—पुरुषेण [ "कृत्यानां कर्त्तरि वा" (२।३।७१ पा०) इति कर्त्तरि षष्ठी०] ।

(झ) विपन्नस्थितं—मृतमित्यर्थः, स्रस्ताङ्गं—स्खलितावयवं, विगलित-करपादादिकमित्यर्थः । गतिं—दशां, मृत्युमिति यावत्, स्पृहयन्—अभिलषन् (स्पृह+णिच्+शतृ)। उदलम्बयम्—ऊर्द्धमदोलयम्, उदबध्नामित्यर्थः (उत्+

मे असवो न निर्यान्ति, तावत् त्रुटितपाशोऽहं महीतले पतितोऽस्मि, लब्धसंज्ञश्च केनापि कृपालुना पुंसा तत्क्षणमागतेन पटमारुतैराश्वास्यमानमपश्यम्। ततः स मामब्रवीत्,—'सखे! कथय, विद्वानपि (ञ) कं प्रति एवं खिद्यसे? सुकृती सुखमाप्नोति, दुष्कृती दुष्कृतादेव दुःखमाप्नोति, नान्यतः। दुःखात् यदि तवेदृशः समुद्योगः, तत् सुकृतं समाचर, आत्मघातेन कथं (झ) नारकदुःखमभिवाञ्छसि?' इत्युक्त्वा मां समाश्वास्य स पुमान् क्वापि गतः। अहञ्च तादृशं मरणोद्यमं त्यक्त्वा इहाऽऽगतः। तदेवं विधौ अनिच्छति मरणमपि न लभ्यते; इदानीं तपसा तीर्थे तनुं दाहयामि, येन पुनरहं निर्धनतादुःखभागी न स्याम्"।

इत्युक्तवन्तं तं ज्येष्ठं कनिष्ठाः प्राब्रुवन्,—"आर्य्य! अर्थैर्विना कथं प्राज्ञोऽपि दुःखेन बाध्यते? किं न ज्ञायते, यदर्थानां (ञ) शरदभ्रचला गतिः, आहृत्य रक्ष्यमाणाऽपि यत्नेन अन्तविरसा असम्मैत्री च वेश्या श्रीश्च कस्य कदा स्थिरा? तत्

लबि+णिच्+लङ्-अम्)। असवः,—प्राणाः। त्रुटितपाशः,—छिन्नरज्जुः, बन्धनरज्जुं छित्त्वा इत्यर्थः (विश०। बहुव्री०)। पटोत्था मारुताः तैः पटमारुतैः,—वस्त्राञ्चलसञ्चालनजैः वायुभिः (शाकपा०), आश्वास्यमानं—सान्त्वयमानम् (आ+श्वस+णिच्+कर्मणि लटः शानच्), आत्मानमिति शेषः।

(ञ) कं प्रति—किमुद्दिश्य इत्यर्थः, खिद्यसे—क्लिश्यसे (खिद+लट्-से)। दुष्कृती—पापी।

(झ) नारकं—नरकसम्बन्धि, दुःखं नारकदुःखं—नरकभोगयातनाम्, "असूर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः"॥ इतीशोपनिषद्वचनात् आत्मघातिनो नरकभोगस्यावश्यम्भावित्वं बोध्यम्।

(ञ) शरदभ्रवत्—शरत्कालिकमेघवत्, चला—चञ्चला, अचिरस्थायिनीत्यर्थः, शरदभ्रचला—शारदीयमेघवत् चञ्चला अस्थायिनीत्यर्थः। आहृत्य—समुपार्ज्य (आ+हृ

उद्योगिना मनस्विना स गुणश्च कोऽपि उपार्जनीयः, येन हठात् बद्धा अर्थहरिणः सुखमानीयते"। इति भ्रातृभिरुक्तो ज्येष्ठः पश्चात् धैर्य्यमवलम्ब्य उवाच,—"को गुणस्तादृक् अर्जनीयो भवेत्?" इति। ततः सर्वे ते विचिन्त्य परस्परं वदन्ति स्म,—"पृथ्वीं (ट) विचित्य किमपि विज्ञानं वयं शिक्षामहे"। एवं निश्चित्य सर्वे (ठ) समागमे सङ्केतस्थानमुक्त्वा एकैकशः ते चत्वारो भ्रातरश्चतस्रो दिशः प्रययुः।

अथ गच्छति काले सर्वे सङ्केतनिकेतने मिलिताः,—"केन किं शिक्षितम्?" इति अन्योन्यमपृच्छन्। अथैषामेकोऽब्रवीत्,—"मया ईदृक् विज्ञानं शिक्षितं, येन (ड) अस्थिशकलं प्राप्य यस्य कस्यचिदपि प्राणिनः तस्मिन् तदुचितानि मांसानि उत्पादयामि"। एतदाकर्ण्य तेषु द्वितीयोऽवदत्,—"अहं तथा

+ल्यप्)। अन्ते—परिणामे, विरसा—दुःखदायिनी, अथवा,—अन्ते—परिणामे, धननाशान्ते इत्यर्थः, विरसा—विगतरागा अन्तविरसा—परिणामे पीडाकारिणी (विण०। ७मी तत्पु०), असति—असाधौ, नीचजने इति यावत्, मैत्री—मित्रता, अनुराग इत्यर्थः, यस्याः सा असन्मैत्री—नीचपुरुषानुरक्ता। स्थिरा—अचञ्चला, एकपुरुषानुरक्ता इति भावः, वेश्या लक्ष्मीश्च कदाऽपि एकस्मिन् पुरुषे चिरं तिष्ठतीति न दृश्यते इत्याशयः। गुणः,—विद्याशौर्य्यादिरुत्कर्षापादको भावविशेषः, रज्जुश्च ("गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागे शौर्य्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु" इति मेदिनी)। अर्थः,—धनं, हरिण इव स अर्थहरिणः,—हिरण्यादिरूपो मृगः (कर्म्म०। उपमिति स०), सुखम्—अक्लेशेन।

(ट) विचित्य—अनुसन्धाय [वि+चि+ल्यप् "ह्रस्वस्य पिति—" (६।१।७१ पा०) इति तुक्]।

(ठ) समागमे—प्रत्यावृत्य परस्परमेलने इत्यर्थः, सङ्केतस्थानं—निर्द्धारितस्थानविशेषमित्यर्थः, प्रत्यावृत्य सर्वे अमुकस्थाने सङ्गता भविष्यामः, यः अग्रे आगमिष्यति, स अन्यान् प्रतीक्ष्य स्थास्यति इत्येवंरूपं नियमविशेषमिति यावत्।

(ड) अस्थिशकलम्—अस्थिखण्डम्। तस्मिन्—अस्थिशकले, तदुचितानि—यस्य जन्तोरस्थि, तज्जन्तुपर्य्यागीनीत्यर्थः।

विज्ञानमस्तीति, यथा सञ्जातमांसे अस्थिशकले तत्प्राणिसम्भव-लोमानि त्वचञ्च जनयितुं पारयामि"। तृतीयोऽवदत्,—"मया ईदृशं विज्ञानमधिगतं, येन (ढ) जातत्वङ्मांसलोमनि प्राण्य-वयवान् चक्षुरादीन् स्रष्टुं जाने"। चतुर्थोऽवादीत्,—"अहम् उत्पन्नावयवं प्राणैर्युक्तं कर्त्तुं शक्नोमि"। एवं ते परस्परमुक्त्वा विज्ञानपरीक्षणाय चत्वारोऽपि अस्थिखण्डमानेतुमटवीं ययुः। विधिवशाच्च ते तत्र सिंहस्य अस्थिखण्डं प्रापुः, जगृहुश्च अवि-ज्ञातविशेषास्तदेव। एकस्तत्समुचितैर्मांसैस्तदस्थिखण्डमयोज-यत्। द्वितीयस्तस्य त्वचां लोमानि च उदपादयत्। तृतीयोऽपि समग्रैरिन्द्रियैस्तदपूरयत्। चतुर्थस्तु यदा तस्य सिंहीभूतस्य जीवितमदात्, तदा (ण) उद्भूतसटाभारोऽतिभयङ्करः दंष्ट्राकराल-वदनः खरनखाङ्कुशः सिंहः समुत्तस्थौ। स च स्वोत्पादकान् तान् चतुरोऽपि समुत्थाय अवधीत्, प्राविशच्च सद्योऽरण्यम्।

एवं ते द्विजपुत्राः सिंहनिर्माणदोषात् सर्वे एव विनाशं गताः। दुष्टं जन्तुमुत्थाप्य कस्य वा सुखं भवेत्? इत्थं प्रति-कूले विधौ यत्नेनोपार्जितो गुणः न सम्पत्तये, प्रत्युत विपत्तये एव भवति। (त) मूले दैवे अविकृते प्रज्ञानवारिणा सिक्तः पौरुषपादपः नयाऽऽलवालः प्रायः फलति"।

(ढ) जातानि त्वङ्मांसलोमानि यत्र तादृशं जातत्वङ्मांसलोमानि—उत्पन्न-चर्म्मपिशितलोमानि (विश०। बहुव्री०), प्राणिनि इति शेषः।

(ण) उद्भूतः,—उत्पन्नः, सटाभारः,—केशरसमूहः ("सटा जटाकेशरयोः" इति मेदिनी) यस्य सः उद्भूतसटाभारः,—सञ्जातकेशरराशिः (विश०। बहुव्री०)। खराः,—तीक्ष्णाः, नखाः अङ्कुशाः,—अस्त्रविशेषा इव यस्य सः खरनखाङ्कुशः,—अङ्कुशाकारतीक्ष्णनखरः (विश०। बहुव्री०)।

(त) मूले—मूलस्वरूपे, कार्य्यसिद्धौ प्रधानकारणे इति यावत्। अविकृते—प्रगुणीभूते, अनुकूले इति यावत्, प्रज्ञानं—प्रकृष्टं ज्ञानं, वारि इव तेन प्रज्ञानवारिणा—विशिष्टज्ञानरूपजलेन। पौरुषं—पुरुषकर्म्म प्रयत्नादिकं, पादपः,—वृक्ष इव

इति कथां समाख्याय निशि गच्छन्तं तं भूपतिमपृच्छत्,—"राजन्! पूर्वकृतं शापं स्मृत्वा वद, क एषां सिंहनिर्माणे विशेषेण अपराध्यति?"। इति श्रुत्वा राजाऽसौ मौनी व्यचिन्तयत्,—"अयं पुनर्गन्तुमिच्छति, यातु, पुनरहमेनमानेष्यामि" इति निश्चित्य तमवादीत्,—"यस्तेषां मध्ये सिंहस्य प्राणदाता, स एव पापकृत्; प्राणिविशेषमबुद्धा युक्तिबलात् यैर्मांसत्वग्लोमावयवनिर्माणं कृतं, तेषामज्ञानात् नैव दोषोऽस्ति, येन तु सिंहाकारं दृष्ट्वाऽपि विद्याप्रकाशकामेन प्राणास्तस्य दत्ताः, तेनैव ता ब्रह्महत्याः कृताः"। इति राज्ञो वचनं निशम्य स वेतालः स्वमेव धाम प्रायात्। राजाऽपि पुनस्तमनुसरन् शिंशपाऽन्तिकमगात्।

---

## अथ त्रयोविंशकथा।

ततः स राजा शिंशपातरुमुपेत्य मौनी (क) दर्शितानेकवैकृतं तं वेतालं स्कन्धे नीत्वा प्रातिष्ठत। वेतालोऽपि कन्धे स्थितः तम् अब्रवीत्,—"राजेन्द्र!

पौरुषपादपः,—पौरुषवृक्षरूपवृक्षः, नयः,—नीतिः, आलवालं—वृक्षमूले सेकार्थं मृदादिनिर्म्मितः जलाधारः इव यस्य सः नयाऽऽलवालः,—नीतिरूपालवालशोभितः।

---

(क) दर्शितं—राज्ञे प्रदर्शितम्, अनेकं वैकृतं—विकारः, विकृतरूपादिकमिति यावत्, येन तं दर्शितानेकवैकृतं—प्रदर्शितविविधविकृताकारम्।

(ख) अकार्य्येऽप्येतस्मिन् ते दुर्वारो ग्रहः, तत्ते श्रमविनोदाय कथामिमां कथयामि, शृणु,—

आसीत् कलिङ्गदेशे शोभावती नाम पुरी, यस्यां (ग) दिवीव सुकृतिनः प्रतिवसन्ति स्म। (घ) प्रद्युम्न इव ऐश्वर्य्यवीर्य्यातिशयेन विश्रुतः प्रद्युम्नो नाम नृपतिः समूर्जित-शासनस्तां शशास। यस्मिंश्च राजनि (ङ) चापेषु गुणापकर्षः, मुरजेषु कराऽऽहतिः, युगेषु कलिः, प्रज्ञासु च तीक्ष्णता

(ख) अकार्य्ये—अनिष्टोत्पादके कर्म्मणीत्यर्थः। दुःखेन वारयितुं शक्यः दुर्वारः,—दुर्निवारः (दुर्+वृ+घञ्), ग्रहः,—निर्बन्धः, आग्रहः इत्यर्थः ("ग्रहोऽनुग्रह-निर्बन्धग्रहणेषु रणोद्यमे" इति मेदिनी)।

(ग) दिवीव—स्वर्गे इव।

(घ) प्रद्युम्न इव—कामदेव इव, रुक्मिणीगर्भजः कृष्णात्मज इवेति यावत्, अतिरूपवानिति भावः। समूर्ज्जितं—समधिकबलवत्, शासनम्—आज्ञा यस्य सः समूर्ज्जितशासनः,—अव्याहताज्ञः (विण०। बहुव्री०)।

(ङ) चापेषु—धनुःषु, न तु मानवेषु इति भावः, गुणस्य—मौर्व्याः, अपकर्षः,—आकर्षणं, धनुःषु गुणाकर्षणं, न तु मानवेषु गुणस्य—शौर्य्यदाक्षिण्यादेः, अपकर्षः,—उत्कर्षाभावः, न्यूनता इति यावत्, गुणापकर्षः,—गुणाभावः, तत्र सर्वे वीराः विशेषेण गुणवन्तश्च आसन् इति भावः। मुरजेषु—मृदङ्गाख्यवाद्यभेदेषु, न तु नरेषु इति भावः, करेण आहतिः,—आघातः कराऽऽहतिः,—कराघातः, वाद्यकाले करतलेन ताड़नमित्यर्थः, मुरजेषु कराऽऽहतिः, न तु प्राणिषु कराऽऽहतिः,—चपेटाघातः, तत्र सर्वे गीतवाद्यतत्पराः अकार्य्यजुगुप्सिताश्च आसन् इति भावः। अथवा,—कराय—राजदेयकराय इत्यर्थः, आहतिः,—पीड़नं कराऽऽहतिः,—राजग्राह्यषष्ठभागार्थं पीड़नमित्यर्थः, सर्वे सम्पन्नतया यथानिर्द्दिष्टकरप्रदातारः आसन्निति भावः। युगेषु—सत्यादिषु चतुर्षु, न तु प्रजासु इति भावः, कलिः,—तदाख्यजघन्ययुगः, युगेषु कलिः, न तु प्रजासु कलिः,—कलहः ("कलिः स्त्री कलिकायां ना शूराजिकलहे युगे" इति मेदिनी), सर्वाः प्रजाश्च परस्परं मित्रभावेन व्यवसन्निति भावः। प्रज्ञासु—बुद्धिषु, न तु आचरणेषु इति भावः; तीक्ष्णता—कुशाग्रवत् खरता, प्रज्ञासु तीक्ष्णता, न तु अन्योऽन्याचरणेषु तीक्ष्णता—उग्रता इत्यर्थः, सर्वे तत्र शान्तिप्रिया आसन्निति भावः।

अश्रूयत। (च) तस्याञ्च पुनः क्वचित् प्रदेशे यज्ञस्थलाभिधानो बहुद्विजः कश्चिदग्रहारः नृपेण प्रतिष्ठापितः। तत्र कश्चित् वेदपारगो महाधनो(छ) अग्निहोत्री पूजितातिथिदेवः यज्ञसोमो नाम ब्राह्मणः समवात्सीत्। तस्य वार्द्धके अनुरूपायां भार्य्यायाम् एक एव सुतः समुदपद्यत। स च बालः पितुः प्रयत्नात् दिने दिने वर्द्धमानः शुभलक्षणयुतः देवसोम इति पित्रा कृतनामधेयःऽपित्रोरतिस्नेहपात्रतामगात्।

अथ प्राप्ते षोड़शे वर्षे स बालकः विद्याविनयादिभि-रावर्जितसमस्तजनः सहसा ज्वरेणाऽऽक्रान्तः पञ्चतामवाप। ततः परासुं तं दृष्ट्वा समाश्लिष्य च "हा हा" इति रुदन् यज्ञसोमः भार्य्यया सहितः स्नेहात् दाहाय न जहौ। "ब्रह्मन्! (ज) गन्धर्वनगरस्येव संसारस्य गतिं परावरज्ञोऽपि किं न वेत्सि?। ये हि राजानः (झ) अमरम्मन्या अस्मिन् भूलोके

(च) तस्याः,—शोभावत्याः। बहवः द्विजाः,—ब्राह्मणा यत्र तादृशः बहुद्विजः,—अनेकब्राह्मणाधिष्ठित इत्यर्थः।

(छ) अग्नये हूयते अत्र इति अग्निहोत्रं—मन्त्रकरणकवह्निस्थापनपूर्वक-तदुद्देश्यकहोम, तदस्य अस्तीति अग्निहोत्री—अग्निस्थापनपूर्वकं प्रातरादिकालत्रये अग्निहोत्रहोमकर्त्ता, साग्निक इत्यर्थः (अग्निहोत्र + मत्वर्थे इनिः)। समवात्सीत्—समवाप्सीत (सम + वस + लुङ्-द)।

(ज) गन्धर्वनगरस्येव—गन्धर्वपुरस्येव, अशुभसूचनाय शून्याधिष्ठानकस्य नगराकारस्य नीलपीतादिमेघरचनाभेदस्येवेत्यर्थः, अलीकस्य क्षणविनाशिनश्चेति भावः, यद्वा,—गन्धर्वनगरस्य—गन्धर्वनगरवत् मायामयस्य इन्द्रजालस्येत्यर्थः। परं—श्रेष्ठम्, अवरं—निकृष्टं, जानातीति तथाविधोऽपि परावरज्ञोऽपि—इह जगति किं सारं किमसारमिति विशेषेण ज्ञातोऽपीत्यर्थः।

(झ) आत्मनः अमरान् मन्यन्ते ये ते अमरम्मन्याः,—निजान् देववत् मृत्युरहितान् मन्यमानाः [अमर + मन + "आत्ममाने खश्च" (३।२।८३ पा०) इति खश् "अरुर्द्विषदजन्तस्य मुम्" (६।३।६७ पा०) इति खिदन्ते उत्तरपदे परे

व्यलसन्, तेऽपि एकैकशः श्मशानेषु रुदत्प्रेतानुयायिपूर्णेषु चिताधिरूढ़ाः क्रव्यात्कृशानुना दग्धाः, शिवाभिश्च कालेन कवलीकृताः, केचिदपि न रोद्धुं शकिताः, का कथा अन्येषाम् ? हे विद्वन् ! तदेतं प्रेतमाश्लिष्य किं करोषि ? वद"। इत्येवं वृद्धा बन्धवः मिलितास्तं प्राबोधयन्। ततः कथंचित् तेन मुक्तं तं सुतं शिविकामारोप्य ते बान्धवाः कोलाहलसमाकुलाः श्मशानं निन्युः।

अत्रान्तरे तत्र श्मशाने कोऽपि तापसः (ञ) पाशुपतव्रती, मठिकायां कृतनिवासः, वयसा तपसा चातिभूयसा कृशां तनुं बिभ्राणः, भङ्गभीत्येव शिराभिः परिवेष्टितः, विद्युत्पिशङ्गजटः, द्वितीयो महेश्वर इव प्रतिवसति स्म। तस्मिंश्च काले स

अमरशब्दात् सुम् "दिवादिभ्यः श्यन्" (३।१।६९ पा०) इति शिति प्रत्यये परे दैवादिकात् सनधातोः श्यन्]। व्यलसन्—व्यराजन् (वि+लस+लङ्-अन्)। रुदद्भिः,—क्रन्दद्भिः, प्रेतानुयायिभिः,—मृतानां राज्ञाम् अनुगामिभिः, मृतानां स्वजनवर्गैरित्यर्थः, पूर्णेषु—व्याप्तेषु रुदत्प्रेतानुयायिपूर्णेषु—मृतस्य रोदनपरायणात्मीय-समूहपूर्णेषु (विण०। ३या तत्पु०)। क्रव्यात्—मांसाशी, शवमांसभक्षक इति यावत् ("क्रव्यात् मांसाशिरक्षसोः" इति शाश्वतः), यः कृशानुः,—अग्निः तेन क्रव्यात्कृशानुना—आमिषलोलुपानलेन, देहस्य विलोपसाधनात् अग्नौ मांसाशित्वोपचारः, "क्रव्यादो मृतभक्षणे" इत्यग्निनामभेदं श्रवणात् बोद्धव्यः। शिवाभिः,—शृगालैः, चकारोऽत्र भिन्नक्रमे, अथवा दाहमकृत्वा श्मशाने निक्षिपन्ति चेदित्यर्थः। शकिताः,—समर्था इत्यर्थः (शक+क्तः), का कथा अन्येषाम् ?—अमरमान्या राजानोऽपि मृत्युवशं गताः, इतरेषामल्पप्राणानामस्माकं मृत्युसम्बन्धे कः सन्देहः ? अवश्यमेव यातव्यं काले पूर्णे इति भावः।

(ञ) पाशुपतव्रतं—शिवार्चनासम्बन्धिनियमः अस्य अस्तीति पाशुपतव्रती—शैवनियमवानित्यर्थः (मत्वर्थे इनिः)। भङ्गभीत्येव—अतीव कृशतनुत्वात् भङ्गभयेनेवेत्यर्थः, शिराभिः परिवेष्टितः,—शिरासमूहद्वारा परिवृतः, यथा किमपि द्रव्यं भग्नोन्मुखं कोऽपि रज्ज्वादिभिः आवेष्ट्य स्थापयति तद्वदित्यर्थः।

तापसः तं जनकोलाहलं श्रुत्वा (ट) दृप्तोपालम्भबृंहितं भिक्षाफलधरमन्तिकवर्त्तिनं शिष्यं जगाद,—"वत्स! कथमयं जनकोलाहलः श्रूयते, गत्वा बहिर्विज्ञाय सत्वरमागच्छ, कुतोऽयमश्रुतपूर्वः तुमुलो रवः?"। इति तेन गुरुणोक्तः स शिष्यस्तं प्रत्युवाच,—"नाहं यामि, त्वं स्वयमेव याहि, मे भिक्षासमयोऽतिक्रामति"। तदाकर्ण्य स गुरुरब्रवीत्,—"धिक् मूर्ख! (ठ) उदरम्भरे! अह्नः अर्द्धप्रहरे याते का तव भिक्षावेला?"। श्रुत्वैव क्रुद्धः स कुशिष्यस्तं तापसं प्रत्यवदत्,—"धिक् जराजीर्ण! नाहं ते शिष्यः, त्वञ्च मे न गुरुः, अहमन्यत्र यास्यामि, त्वं स्वयम् इदं (ड) पात्रं वह" इत्युक्त्वा स क्रुद्धः अग्रे दण्डकुण्डिकां त्यक्त्वा समुत्थाय प्रायात्।

(ट) दृप्तेन—गर्वितेन, उपालम्भेन—निन्दायुक्तभाषणेन, बृंहितं—वर्द्धितं, परिपुष्टमित्यर्थः, दृप्तोपालम्भबृंहितं—सगर्वनिन्दायुक्तभाषाप्रयोगदक्षमित्यर्थः, अविनीतं परकुत्सानिरतञ्चेति भावः (विशे०। ३या तत्पु०)।

(ठ) उदरम्भरे!—स्वोदरमात्रपूरणव्यापृत!, औदरिक इति यावत् ["फलेग्रहिरात्मम्भरिश्च" (३।२।२६ पा०) इति सूत्रस्य चूर्णके "चात् कुक्षिम्भरिः। चान्द्रास्तु आत्मोदरकुक्षिषु इति पेठुः। ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः इति मुरारिः" इति मतमनुसृत्य कौमुदीकारेण "अप्रतिषिद्धं परमतमनुमतमेव" इति न्यायात् उदरम्भरिरिति पदं समर्थितं, तेन उदर+भृ+इन् मुमागमश्च भृञो निपात्यते इति बोध्यम्। "अनुक्तसमुच्चयार्थश्चकारः। कुक्षिम्भरिः। उदरम्भरिः" इति काशिकाकारश्च]। याते—गते (या+क्तः तस्मिन्)।

(ड) पात्रं—भिक्षाफलाधारम्। दण्डकुण्डिकां—दण्डः—प्रकाण्डः, दण्डे—लगुडे इति वा, सम्बद्धा इति शेषः ("दण्डोऽस्त्री लगुडे पुमान्। व्यूहभेदे प्रकाण्डे—" इति मेदिनी), या कुण्डिका—देवीमूर्त्तिभेदः तां दण्डकुण्डिकां—प्रकाण्डदेवीमूर्त्तिं लगुडसंलग्नदेवीमूर्त्तिं वा, "दण्डकुण्डिकाम्" इत्यत्र "दण्डकुञ्चिकाम्" इति पाठः कथमपि सङ्गच्छते, पूर्वोक्तपाठस्य प्रसङ्गाभावात्, दण्डः—प्रकाण्डः, कुञ्जं—गृहभित्तौ प्रोथिते दण्डविशेषे इत्यर्थो वा, कुञ्चिका—कुञ्चिका, "चावि" इति प्रसिद्धः उद्घाटनीविशेष इति यावत्, तां दण्डकुञ्चिकां—दण्ड-

ततः स तापसः विहसन् तस्मात् मठात् निर्गत्य तत्रागात्, यत्र दाहार्थं स मृतो (ढ) द्विजार्भकः समानीतः। तं (ण) जनतया शोच्यमानाग्र्ययौवनं दृष्ट्वा जराऽर्दितः स योगी तद्देहं प्रवेष्टुं मतिमकरोत्; ततः एकान्ते गत्वा मुक्तकण्ठं प्ररुद्य च यथोचितैरङ्गहारैर्ननर्त्त। ततः क्षणेन स तपस्वी पुनः यौवन-सुखम् (त) अनुबुभूषुः योगात् स्वां जीर्णां तनुं विहाय तत् द्विज-पुत्रकलेवरं प्राविशत्। क्षणे च तस्मिन् स द्विजयुवा रचितायां चितायां सहसा लब्धजीवः समुत्तस्थौ। तदवलोक्य बन्धुवर्गस्य सर्वस्य,—"दिष्ट्याऽयं बालको जीवति जीवति" इति सहर्ष-निनादः समुदचरत्।

अथ विप्रपुत्रशरीरान्तःस्थः स योगीश्वरः तान् बन्धूनब्रवीत्,—"लोकान्तरगतस्य मम (थ) शर्वेण जीवितं दत्त्वा 'महापाशुपतव्रतं त्वया धार्य्यम्' इति समादिष्टम्। अधुनैव मया एकान्ते गत्वा तद्व्रतं धार्य्यं, नो चेत् मे जीवितं

---

सत्यां कुचिकां, यद्वा,—दण्डा—यष्टिस्वरूपा, कुचिका—वंशशाखा, ब्रह्मचारिधार्य्या इति भावः, तां दण्डकुचिकां—वंशयष्टिमित्यर्थः।

(ढ) द्विजार्भकः,—ब्राह्मणकुमार इति यावत्।

(ण) जनतया—जनसमूहेन [जन+"ग्रामजनबन्धुभ्यस्तल्" (४।२।४३ पा०) इति तल्], शोच्यमानम्—अकालमृततया शोकविषयतामापद्यमानम्, अग्र्ययौवनं—प्रथमयौवनं यस्य तादृशं शोच्यमानाग्र्ययौवनं—शोकविषयीभूताभिनवतारुण्यं, यौवनोद्गमे एव मृततया क्रियमाणशोकमित्यर्थः (विशे०। बहुव्री०)। एकान्ते—निर्जनस्थाने। यथोचितैः,—तत्कालोपयोगिभिरित्यर्थः, अङ्गहारैः,—अङ्गविक्षेपैः, हस्तपादचालनादिभिः सहेत्यर्थः ("अङ्गहारोऽङ्गविक्षेपः" इत्यमरः)।

(त) अनुबुभूषुः,—अनुभवितुमिच्छुः सन्नित्यर्थः [अनु+भू+सन् "सनाशंसभिक्ष उः" (३।२।१६८ पा०) इति उः], योगात्—योगमवलम्ब्येत्यर्थः (ल्यब्लोपे पञ्ची०)।

(थ) शर्वेण—शिवेन।

(द) नास्ति, तद्यूयं गृहं यात, अहमपि यामि" इति सर्वान् तत्रस्थान् सम्बोध्य, दृढ़निश्चयः हर्षशोकाऽऽकुलान् तान् स्वगृहं प्रेषयामास ; स्वयञ्च गत्वा तत् पूर्वकलेवरं श्वभ्रे चिप्त्वा गृहीतव्रतो युवीभूय अन्यतो ययौ"।

इति कथां समाख्याय वेतालः निशि पथि यान्तं तं त्रिविक्रमसेनं नृपं पुनरब्रवीत्,—"राजन्! ब्रूहि, स योगीन्द्रः परदेहे प्रविशन् कथं वा पूर्वं प्रारुदत्? किमर्थं वा अनृत्यत्? अत्र मे महत् कौतुकं वर्त्तते"। इति वेतालात् श्रुत्वा शापशङ्की राजा मौनं विमुच्य तमवादीत्,—"शृणु वेताल! चिरधिकारकं बाल्ये पितृभ्यां लालितम् अद्य इदं त्यजामीति दुःखितः तुल्यजदैहिकस्नेहात् प्रथमं रुरोद ; नवं देहं प्रविश्य अधिकं व्रतं साधयिष्यामि इति यौवनलाभहर्षात् ननर्त्त च"। एतत् तस्य राज्ञः वचनं निशम्य स वेतालः पुनः सहसा तं शिंशपापादपमगमत्। राजाऽपि अविचलितोत्साहः पुनस्तमन्वसरत्।

## अथ चतुर्विंशकथा।

ततः स राजा तां (क) तिमिरश्यामां चिताग्निज्वलितेक्षणां

(द) नास्ति—न विद्यते, न स्थास्यतीत्यर्थः (भविष्यत्सामीप्ये लट्)। हर्षः,—तज्जीवनप्राप्तिजनितानन्दः, शोकः,—तस्य गृहपरित्यागजनितः मन्युः, ताभ्याम् आकुलान्—व्याकुलान् हर्षशोकाऽऽकुलान्—आनन्दविषादविपर्यस्तान् (विश०। ३या तत्पु०)। श्वभ्रे—गर्त्ते। अयुवा युवा भूत्वा युवीभूय—तरुणीभूय, यौवनं लब्ध्वा इत्यर्थः (अभूततद्भावे च्विः, ततो ल्यप्)।

(क) तिमिरैव—अन्धकारैव, श्यामा—कृष्णवर्णा तां (विश०। ३या तत्पु०), अथवा,—तिमिरवत् श्यामाम् (उपमिति स०) तिमिरश्यामां—गाढान्ध-

घोरां रजनिराक्षसीमगणयन् वीरः तस्मिन् भीषणे श्मशाने तां शिंशपां गत्वा तं वेतालं स्कन्धमारोप्य पूर्ववत् प्रातिष्ठत। वेतालोऽपि गच्छन्तं तं (ख) नरदेवमुवाच,—"भो राजन्! अहं गतागतैर्भृशमुद्विग्नः, न पुनस्त्वं, तदेकं मे महाप्रश्नं कथयतः समाकर्णय,—

आसीत् पुरा दक्षिणापथे धर्मो नाम (ग) मण्डलेश्वरः साधूनां धुरन्धरः बहुगोत्रजः नरपतिः। तस्य चन्द्रावती नाम मालवदेशभवा भार्य्याऽऽसीत्,(घ) तस्यां कन्यैका प्रसूता। तस्याञ्च कन्यायां (ङ)प्रदेयायां स धर्मनरपतिः राष्ट्रभेदिभिर्दायादैर्मिलितैरुन्मूलितः पलाय्य सुदृशा भार्य्यया तया च दुहित्रा सह रात्रौ सङ्गृहीतरत्नसञ्चयः स्वराष्ट्रात् निरगात्। मालवे श्वाशुरं गृहं प्रति स्वैरं गच्छन् स तया पत्न्या सुतया च सह विन्ध्याटवीमास-

काराभित्यर्थः, अतिक्रान्तवानित्यर्थश्च, चिताग्निः ज्वलितं—प्रदीप्तम, ईक्षणं—नेत्रमिव यस्यास्ताम, अन्यत्र—चिताग्निवत् ज्वलितम् ईक्षणं यस्यास्तां चिताग्निज्वलितेक्षणां—चितानलरूपप्रदीप्तनेत्रां, चितानलवत् प्रदीप्तनेत्राञ्च (विश०। बहुव्री०)। रजनिः राक्षसीव, अन्यत्र,—रजनिरिव राक्षसी तां रजनिराक्षसीं—राक्षसीरूपां रात्रिं, रात्रिरूपिणीं राक्षसीञ्चेत्यर्थः, अगणयन्—अवजानन्नित्यर्थः (न+गण+णिच्+लटः शतृ)।

(ख) नरः नरेषु वा देव इव तं नरदेवं—राजानम्। उद्विग्नः,—उद्वेजितः।

(ग) मण्डलेश्वरः,—भूम्येकदेशाधिपतिः, द्वादशराजमण्डलाधीश्वरो वा। धुरं—भारं, धरति—वहति इति धुरन्धरः,—पालयिता, बहवः,—अनेके, गोत्रजाः,—सगोत्राः, ज्ञातय इत्यर्थः, यस्य सः बहुगोत्रजः,—प्रभूतस्वजनः (विश०। बहुव्री०)।

(घ) तस्यां कन्यैका प्रसूता इत्यत्र तस्येति शेषः।

(ङ) प्रदेयायां—प्रदानयोग्यायां, विवाहयोग्यायां सत्यामित्यर्थः। राष्ट्रं—विषयं, जनपदमित्यर्थः, राज्यस्य प्रकृतिवर्गमिति यावत्, भिन्दन्ति—उपजापयन्तीति तैः राष्ट्रभेदिभिः,—राज्यापहारार्थं प्रकृतिकोपं जनयद्भिरित्यर्थः (राष्ट्र+भिद+ताच्छील्ये णिनिः)।

साद ; तस्यां कथञ्चित् श्रान्तया भार्य्यया सुतया च परिखिन्नः निशामनयत् ।

अथ प्रातः भगवान् (च) विभावसुः करान् प्रसारयन्,—"मा गाश्चौराटवीमिताम्" इति तं राजानं वारयन्निव पूर्वां दिशमाकरोत् । ततो राजा (छ) पदातिः वसन्त्या सुतया जायया च सह कुशकण्टकैः क्षताङ्घ्रिः भिल्लानां परेषां प्राणसर्वस्वहारिभिः पुरुषैराहृतां धार्मिकजनरहितां कृतान्तनगरीमिव दुर्गां पल्लीमगच्छत् । तत्राऽऽगच्छन्तं वसनाऽऽभरणान्वितं तं दूरात् दृष्ट्वैव बहवो दस्यवः सायुधा मुषितुं प्राधावन् । राजा तानागच्छतो विलोक्य (ज) भार्य्यासुते जगाद,—"म्लेच्छा इमे मा युवां स्पृशन्तु, एतत् गहनं वनं विशतम्" इति राज्ञाऽभिहिता राज्ञी तया लावण्यवत्या तनयया सह भयात् वनमध्यं विवेश । वीरः स राजा तु (झ) अभिमुखाऽऽयातान् शरवर्षिणस्तान् शवरान् खड्गचर्मधरः बहून् न्यवधीत् । ततः (ञ) पल्लीपतिनाऽऽज्ञप्ताः सर्वे दस्यवः निपत्य प्रहारक्षतसर्वाङ्गं

(च) विभावसुः,—सूर्य्यः, करान्—अंशून्, किरणानित्यर्थः, हस्तांश्च ("बलिहस्तांशवः कराः" इत्यमरः)। चौरपूर्णां अटवीं तां चौराटवीं—तस्करसङ्कुलारण्यं (शाकपार्थिवा०)।

(छ) पद्भ्याम् अतति—गच्छतीति पदातिः,—पादचारी, वसन्त्या—तिष्ठन्त्या (वस+लटः शतृ, उगितश्चेति ङीप्)। भिल्लानां—"भील" इति ख्यातम्लेच्छजातिविशेषाणाम् । दुःखेन गच्छतीति तां दुर्गां—दुर्गमां [दुर्+गम+"सुदुरोरधिकरणे" (वा०) इति डः। "दुर्गं कोटे दुर्गमे स्यात्" इति हेमचन्द्रः]।

(ज) भार्य्या च सुता च ते भार्य्यासुते—भार्य्यां सुतां च। गहनं—दुःखं, दुर्गमित्यर्थः। विशतं—प्रवेशं कुरुतं (विश्+लोट्-तम्)।

(झ) अभिमुखाऽऽयातान्—सम्मुखाऽऽगतान्। शवरान्—म्लेच्छजातिविशेषान्।

(ञ) पल्लीपतिना—क्षुद्रग्रामाध्यक्षेण, दस्युराजेन इत्यर्थः ("पल्ल्यल्पग्रामकुट्योः स्त्री" इति मेदिनी), आज्ञप्ताः,—आदिष्टाः (आ+ज्ञा+णिच्+क्तः)।

तमेककं नृपं निजघ्नुः। ततः गृहीताऽऽभरणे दस्युसैन्ये प्रयाते सा राज्ञी वनगुल्मान्तरस्थिता भर्त्तारं निहतं दृष्ट्वा सुतया सह विह्वला पलायमाना भयात् दूरं गहनमरण्यं विवेश। तत्र मध्याह्नभानुतापितेषु (ट) अध्वगेषु शाखिनां छायासु निषण्णेषु एकदेशे कस्यचित् पद्मसरसस्तीरे अशोकतरुतले सा राजमहिषी चन्द्रावती सुतया लावण्यवत्या नितरां श्रान्तया भयशोकव्याकुलया सह समुपाविशत्। तावत् (ठ) अभ्यर्णनिवासी कोऽपि महामनुष्यः चण्डसिंहो नाम सपुत्रः अश्वाऽऽरूढः मृगयार्थं तद्वनमभ्यागात्। स सिंहपराक्रमं नाम पुत्रं तयोः राजभार्य्यासुतयोः (ड) पादपद्धती दृष्ट्वा प्रोवाच,—"पुत्र! एते सुरेखे सुभगे पादपद्धती अनुसृत्य यदि स्त्रियौ प्राप्नुवः, तदा तयोरेकां यथारुचि स्वीकुरुष्व"। इत्युक्तवन्तं तं पुत्रः सिंहपराक्रमः प्रोवाच,—"तात! यस्याः सूक्ष्मौ पादौ रेखयाऽनया दृश्येते, सा भार्य्या ममैव प्रतिभाति; बृहत्यौ यस्याः पादपद्धती दृश्येते, एषा ज्येष्ठवयास्तव योग्या"। इति सूनो-

निजघ्नुः,—मारयामासुः [नि+हन+लिट्-उस् "अभ्यासाच्च" (७।३।५५पा०) इति हस्य कुत्वम्, "गमहनजनखनघसां लोपः क्ङित्यनङि" ... "अल्लोपोऽनः" (६।४।१३४ पा०) इति हन्तेरकारलोपः]।

(ट) अध्वगेषु—पथिकजनेषु, शाखिनां—वृक्षाणाम्। निषण्णेषु—उपविष्टेषु [नि+षद्+क्तः "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" (८।२।४२ पा०) इति तकारस्य दकारस्य च नः]। एकदेशे—वनैकप्रान्ते।

(ठ) अभ्यर्णे—अन्तिके, समीपे इत्यर्थः ("उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" इति समीपपर्य्यायेऽमरः), निवसितुं शीलमस्य इति अभ्यर्णनिवासी—अरण्यासन्नदेशवासीत्यर्थः (विश०)। महान्—प्रधानः, मनुष्यः महामनुष्यः,—प्रभूतधनताशाली पुरुषः, राजपुरुष इति यावत्।

(ड) पादपद्धती—चरणपङ्क्ती, चरणचिह्नश्रेण्यौ इति यावत् ("पद्धतिः पथि पंक्तौ च" इति हैमः)। सु—शोभना, रेखा ययोः तादृश्यौ सुरेखे—सुन्दररेखासमन्विते इत्यर्थः, सुलक्षणे इति यावत्, सुभगे—मनोरमे इत्यर्थः।

वचनमाकर्ण्य स चण्डसिंहस्तं जगाद,—"पुत्र! कैषा कथा तव? जननी तव प्रत्यक्षमेव दिवं गता, तादृशे (ढ) सुकलत्रे गते अन्यवासना मे केव?"। तदाकर्ण्य सोऽपि तं पितरमुवाच,—"तात! मैवम्, (ण) अभार्य्यं हि गृहपतेः गृहं शून्यम्। अन्यच्च, (त) मूलदेवोक्ता कथा त्वया किं न श्रुता? यत्र घनस्तनजघना मार्गावलोकिनी कान्ता नाऽऽस्ते, कः अजडः तत् अनिगडं गृह-संज्ञकं दुर्गं प्रविशति? तत् तात! मम जीवितेन शापितोऽसि, यदि मदभीष्टाया द्वितीयां भार्य्यां त्वं न स्वीकरिष्यसि"। एतत् पुत्रवचः श्रुत्वा स चण्डसिंहः "तथा" इति प्रतिपद्य, ससुतः तां पादपद्धतिमनुसरन् शनैः ययौ। प्राप्य तत् सरःस्थानं तां (थ) श्यामां चन्द्रावतीं राज्ञीं रूपलावण्यविभासिनीं

(ढ) सुकलत्रे—सुस्त्रियि, उत्तमायां भार्य्यायामित्यर्थः। अन्यवासना—द्वितीयकलत्रलिप्सा। केव?—नास्त्यन्यवासना इत्यर्थः।

(ण) नास्ति भार्य्या यत्र तत् अभार्य्यं—विपत्नीकं, गृहपतेः,—गृहस्थस्य ("भवेत् गृहपतिः पुंसि गृहस्थेऽपि च सत्रिणि" इति मेदिनी)।

(त) मूलदेवः,—तन्नामा कश्चित् कामशास्त्रकारः, तेन उक्ता मूलदेवोक्ता—मूलदेवकथिता। घने—निविड़े, मांसोपचिते इत्यर्थः, स्तनजघने—पयोधर-कटीपुरोभागौ यस्याः सा घनस्तनजघना—मांसलकुचश्रोणिका (विश०। बहुव्री०), मार्गं—भर्तुरागमनपथम्, अवलोकयितुं शीलं यस्याः सा मार्गावलोकिनी—अन्यत्र स्थितस्य पत्युरागमनप्रतीक्षणशीला, उत्कण्ठितेति भावः। जडः,—अज्ञः, स न भवतीति अजडः,—अनज्ञः, प्राज्ञ इत्यर्थः। अनिगडं—शृङ्खलशून्यं, लोह-शृङ्खलादिबन्धनपरिशून्यमिति भावः (विश०), गृहसंज्ञकं—गृहम् इति नाममात्रे-णाख्यातं, वस्तुतस्तु निरानन्दकारागृहमिति भावः, दुर्गं—कोटं, कारागृह-मिति भावः ("दुर्गं कोटे दुर्गमे स्यात्" इति हेमचन्द्रः)। शापितः,—शपथी-कारितः। मदभीष्टायाः,—मम प्रियायाः, भार्य्यात्वेन ग्रहीतुमिष्टायाः सुन्दरचरणायाः स्त्रियमपेक्ष्येत्यर्थः (ल्यब्लोपे पञ्चमी), द्वितीयां—इत्यादपद्धतिमन्यामित्यर्थः, स्त्रियमिति शेषः।

(थ) श्यामा—"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतला। तप्तकाञ्चन-

ददर्श, उपाययौ च सकौतुकः सह पुत्रेण ताम्। साऽपि तं दृष्ट्वा चौरशङ्किनी वित्रस्ता समुत्तस्थौ। "अलं त्रासेन (द) नौ, एतौ चौरौ न, सौम्याकृती सुवेशाङ्कौ कौचित् आखेटकृते नूनमिहाद्य प्राप्तौ"। इति सुतया बुद्धिमत्याऽभिहिता राज्ञी यावत् (ध) दोलायते, तावदश्वावतीर्णश्चण्डसिंहः पुरोवर्त्ती तामुवाच, —"सुन्दरि! अलं सम्भ्रमेण, आवाम् इह मृगयार्थमागतौ, तत् विश्वस्य निराशङ्कं वदतं, के युवां स्मरनेत्रानलज्वालादग्धमन्मथदुःखिते रतिप्रीती इव अरण्यमेवमुपागते? कथं वा इह अमानुषे वने प्रविष्टे स्थः? इदं हि युवयोर्वपुः रत्नप्रासादवासार्हं,

---

वर्णाभा सा शोभा परिकीर्तिता" ॥ इत्युक्तलक्षणाम्। रूपलावण्याभ्यां—सौन्दर्यकान्तिविशेषाभ्यां, विभासितं शीलमस्या इति तां रूपलावण्यविभासिनीं—सौन्दर्यकान्तिभ्यां दीप्तिशालिनीं (ताच्छील्ये णिनिः)।

(द) नौ—आवयोः ["युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ" (८।१।२० पा०) इति षष्ठीद्विवचनविशिष्टस्यास्मदः नावादेशः]। सुवेशः,—उत्तमपरिच्छदः, अङ्कः,—चिह्नं, सज्जनज्ञापक इति भावः, ययोः तौ सुवेशाङ्कौ—सुपरिच्छदधारिणौ इत्यर्थः (विश०। बहुव्री०)। आखेटकृते—मृगयानिमित्तम् ("आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्" इत्यमरः)।

(ध) दोला—दोलनम्, इमौ चौरौ वा साधू वा इत्येवं चलचित्ततामित्यर्थः, अयते—गच्छतीति दोलायते—सन्देग्धि इत्यर्थः (दोला+अय+लट्-ते)। सम्भ्रमेण—भयेन ("भये सम्भ्रममिच्छन्ति भयं संवेगमादरम्" इति शाश्वतः)। स्मरस्य—शिवस्य, नेत्रानलज्वालया—नयनाग्निशिखया, दग्धाय—भस्मीभूताय, मन्मथाय—कामाय, मन्मथमन्वेष्टुमित्यर्थः, दुःखिते—एकस्थानानवस्थिते, इतस्ततः भ्रमिते इत्यर्थः, यद्वा,—दग्धेन मन्मथेन हेतुना दुःखिते—दुःखिते, शोकार्त्ते इत्यर्थः, स्मरनेत्रानलज्वालादग्धमन्मथदुःखिते—शिवनयनाग्निशिखादग्धकामशोकेन इतस्ततः परिभ्रान्ते दुःखिते वा (विश०। ४र्थी तत्पु० ३या तत्पु० वा), रतिः,—कामपत्नी प्रसिद्धा, प्रीतिः,—कामपत्नी, रतेः सपत्नी इति यावत् ("प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्" इति मेदिनी), ते इव रतिप्रीती इव—कामपत्नीद्वयमिव। अमानुषे—मानुषसमागमरहिते, निर्जने इति यावत्। स्थः,—भवथः। [अस+लट्-थस् "श्नसोरल्लोपः"

किमिति वराङ्गनविचरणयोग्यौ चरणौ कण्टकिनीमिमां भुवमवतारितौ ? (न) चित्रमिदम्, एषा युवयोराननं पतन्ती वातोद्धूता धूलिरावयोर्मुखं हतच्छायं कुरुते ; भवत्योरङ्गेऽस्मिन् चण्डांशोरुच्चण्डः किरणः पतन् अस्मान् दहति ; तदात्मवृत्तान्तं ब्रूतम्, आवयोर्हृदयं भवत्यौ एतामवस्थां गते दृष्ट्वा भृशं दूयते। अस्मिन् श्वापदावृतेऽरण्ये (प) वां स्थितिं द्रष्टुं न शक्नुवः"।

इति चण्डसिंहेनोक्ता राज्ञी निःश्वस्य लज्जाशोकाऽऽकुला शनैः स्वं वृत्तान्तमवर्णयत्। ततश्चण्डसिंहः (फ) निःस्वामिकां तां मत्वा, समाश्वास्य च मधुरैर्वाक्यैरनुरञ्जयन् ससुतां स्वीचकार।

---

(६।४।१११ पा०) इति अस्तेरकारलोपः]। रत्नप्रासादवासार्हे—मणिमयसौधावस्थानयोग्यम्। वरे—श्रेष्ठे, मणि दिनिबद्धे इत्यर्थः, अङ्गने—चत्वरे, प्राङ्गणभूमौ इत्यर्थः, विचरणयोग्यौ—भ्रमणार्हौ वराङ्गनविचरणयोग्यौ—रत्नकुट्टिमविहरणोचितौ (विण०। ७मी तत्पु०)। कण्टकाः सन्ति अस्यामिति तां कण्टकिनीं—कण्टकाऽऽकीर्णामित्यर्थः (कण्टक+अस्त्यर्थे इनिः)।

(न) चित्रम्—आश्चर्यम्। वातोद्धूतः—अनिलोत्क्षिप्ता। हतच्छायं—विगतकान्ति, मलिनम् इत्यर्थः, युवयोर्मुखे धूलिराशिः पतति आवयोर्मुखं मलिनं भवति इत्येव चित्रं, यतः यत्रैव धूलिपतनरूपं कारणं, तत्रैव मालिन्यरूपस्य कार्यस्य औचित्येऽपि तद्विपर्य्ययात्; अत्र कार्य्यकारणयोर्भिन्नदेशित्वात् असङ्गतिनामालङ्कारः। युवयोः क्लेशं दृष्ट्वा दुःखेन आवयोर्मुखं मलिनं भवति इति तात्पर्य्यम्। चण्डांशोः,—सूर्य्यस्य, उच्चण्डः,—अतिप्रखरः। दहति—सन्तापयति, अत्रापि पूर्ववत् भावालङ्कारौ बोद्धव्यौ। ब्रूतं—कथयतं (ब्रू+लोट्-तम्)। दूयते—तप्यते (दिवा० दू+कर्त्तरि लट्-ते)।

(प) वां—युवयोः ["युष्मदस्मदोः—" (८।१।२० पा०) इति षष्ठीद्विवचनविशिष्टस्य युष्मदः वामादेशः]।

(फ) निः,—नास्ति, स्वामी—पतिः यस्याः सा तां निःस्वामिकां—स्वामिविरहिताम् ["इनः स्त्रियाम्" (५।४।१५२ पा०) इति कप्]। अनुरञ्जयन्—प्रीणयन् (अनु+रञ्ज+णिच्+शतृ: प्रथ)। स्वीचकार—आत्मीयत्वेन प्रतिजग्राहेत्यर्थः (स्व+च्विः+कृ+लिट्-णल्)।

सपुत्रीं तां पुत्रः सः अश्वयोरारोप्य (ब) वित्तपपुरीसमृद्धां निजां पुरीं निनाय। साऽपि (भ) जन्मान्तरगतेव अवशा अनाथा कृच्छ्रपतिता अङ्गीचकार; किं करोतु तपस्विनी? ततस्तस्याः राज्ञ्याः सूक्ष्मपादत्वात् चण्डसिंहसुतः सिंहपराक्रमः राज्ञीं चन्द्रावतीं भार्य्यां व्यधात्, तत्सुताञ्च लावण्यवतीं राजकन्यां पादयोर्वृहत्त्वात् चण्डसिंहो भार्य्याञ्चकार; पूर्वप्रतिज्ञातं हि सत्यं कोऽतिवर्त्तते?। एवं (म) पादविपर्य्यासात् तयोः पिता-पुत्रयोः ते दुहितामातरौ भार्य्ये तदा श्वश्रूस्नुषे जाते। कालेन च तयोः ताभ्यां पतिभ्यां द्वयोरेव पुत्रा दुहितरश्च क्रमात् जज्ञिरे"। इति कथामाख्याय स वेतालः तं नृपं पप्रच्छ,—"राजन्! अनयोर्मातादुहित्रोस्ताभ्यां पितृभ्यां पितापुत्राभ्यां ये (य) जन्तवो जाताः, ते अन्योऽन्यं के किंसम्बन्धाश्च भवन्ति? यदि जानन्न ब्रवीषि, तदा पूर्वोक्त एव स शापः स्मरणीयः"।

---

(ब) वित्तं—धनं, पाति—रक्षति इति वित्तपः,—धनाधिपः कुबेरः, तस्य पुरी—अलका, तस्याः समृद्धाम्—अधिकैश्वर्य्यसम्पन्नां वित्तपपुरीसमृद्धां—कुबेरस्य अलकानगरीतोऽपि सम्पच्छालिनीं (विण०। ६मी तत्पु०)।

(भ) जन्मान्तरगतेव—पुनर्जन्मप्राप्तेव (२या तत्पु०), अवशा—अस्वाधीना। कृच्छ्रपतिता—क्लेशकरदशायां निपतिता (७मी० तत्पु०), अङ्गीचकार—स्वीचकार, चण्डसिंहस्य वधूतामिति शेषः (अङ्ग+च्वि+कृ+लिट्-णल्)। तपस्विनी—अनुकम्पनीया, दुःखिनीति भावः ("तपस्वी तापसे चानुकम्प्ये त्रिषु" इति मेदिनी)।

(म) पादविपर्य्यासात्—चरणवैपरीत्यात्, वयोऽधिकाया मातुर्वृहच्चरणत्वो-चित्येऽपि सूक्ष्मचरणत्वरूपात्, कनिष्ठायाः कन्यायाश्च सूक्ष्मचरणत्वौचित्येऽपि वृहच्चरणत्वरूपाच्च विपर्य्ययादित्यर्थः। श्वश्रूश्च स्नुषा—वधूश्च, पुत्रवधूरित्यर्थः ("समाः स्नुषाजनीवध्वः" इत्यमरः), ते श्वश्रूस्नुषे—पत्नीजननीपुत्रवध्वौ (द्वन्द्व०)।

(य) जन्तवः,—प्राणिनः, पुत्रकन्यादय इत्यर्थः। कः सम्बन्धो येषां ते किं-सम्बन्धाः,—कियत्सम्बन्धविशिष्टा इत्यर्थः (विण०। बहुव्री०)।

इति वेतालवचः समाकर्ण्य बहु (र) विमृषन् राजा किमपि वक्तुमशक्नुवन् तूष्णीक एव प्रययौ। ततः स वेतालः तं प्रश्नोत्तरदाने असमर्थं दृष्ट्वा हृदि हसन् समचिन्तयत्,—"अयं राजा अस्मिन् महाप्रश्ने उत्तरं दातुं न हि शक्नोति, तेन तूष्णीं व्रजत्येव; न चायं मां वञ्चयितुं शक्तः, शापस्य प्रभावात्। तत् प्रीतोऽस्मि अस्य महासत्त्वस्य सत्त्वातिरेकेण, तदस्य (ल) तं दुरात्मानं वञ्चयित्वा उपागतां तत्सिद्धिं भाविकल्याणे अस्मिन् राजनि निवेशयामि"। इत्यालोच्य स वेतालस्तं नृपमवदत्,—"राजन्! (व) कृष्णनिशाघोरेऽस्मिन् श्मशाने गतागतैः क्लिष्टस्त्वं सुखीव दृश्यसे, कोऽपि ते विकल्पो न विद्यते, तदाश्चर्य्येण धैर्य्येण च ते तुष्टोऽस्मि, त्वमिमं शवं नीत्वा इदानीं व्रज, अहमतो निर्गच्छामि, इदञ्च तव हितं यत् वदामि, तत् कुरुष्व।

---

(र) विमृषन्—विचारयन् (वि+मृष+लटः शतृ)। तूष्णीकः,—तूष्णींशीलः, मौनावलम्बीत्यर्थः [तूष्णीं+"शीले को मलोपश्च" (वा०) इति कः, मकारलोपश्च। "केऽणः" (७।४।१३ पा०) इति ह्रस्वस्तु भाष्यकारप्रयोगात्, "न कपि" (७।४।१४ पा०) इत्यत्र "न" इति योगविभागाद्वा न भवति। "तूष्णींशीलस्तु तूष्णीकः" इत्यमरः]।

(ल) तं—पूर्वोक्तं क्षान्तिशीलं योगिनम्। उपागतां—समीपागतां, तस्य—क्षान्तिशीलस्य, सिद्धिं—योगसफलतां, भावि—भविष्यत्, कल्याणं—मङ्गलं, महाफलत्वादिति भावः, यस्य तस्मिन् भाविकल्याणे—स्वकीयगुणोत्कर्षात् अचिरकालेनैव:सम्पद्दि इत्यर्थः (विण०। बहुव्री०)।

(व) कृष्णनिशायां—कृष्णपक्षीयरात्रौ, घोरे—भीषणे (७मी तत्पु०), यद्वा,—कृष्णनिशया—कृष्णपक्षीयरात्र्या हेतुना, घोरे (३या तत्पु०) कृष्णनिशाघोरे—कृष्णपक्षीयरात्रौ अन्धकारराशिहेतुतया वा अतिभीमदर्शने। विकल्पः,—विविधकल्पनं, चित्तविकाराद्विकमिति यावत्, यद्वा,—विकल्पः,—भ्रान्तिः, घोरश्मशाने समागतस्य चित्तभ्रमादिरूप इत्यर्थः ("विकल्पः पुंसि भ्रान्तौ च कल्पने" इति मेदिनी)।

(श) यदर्थं भवता एतत् नृकलेवरं नीयते, कुभिक्षुः सः अद्य अस्मिन् मामाहूय अर्चयिष्यति, त्वाञ्च उपहारीचिकीर्षुः 'भूमौ साष्टाङ्गं प्रणामं कुरु' इति वक्ष्यति। महाराज! स दुरात्मा तावत् त्वया एवं वक्तव्यः, 'नाहं (ष) तथा प्रणामं जानामि, प्राक् त्वं दर्शय, ततोऽहं तथा करिष्यामि" इति। ततो निपत्य भूमौ यावत् स त्वां प्रणामं दर्शयिष्यति, तावत् त्वमसिना तस्य शिरः (स) छिन्द्याः; ततो विद्याधरैश्वर्यसिद्धिर्या तस्य वाञ्छिता, तां त्वमेव प्राप्स्यसि, अन्यथा तु स भिक्षुस्त्वामुपहारीकृत्य स्वेष्टसिद्धिं करिष्यति। एतदर्थं तव एतावान् विलम्बः कृतो मया, तत्ते सिद्धिरस्तु, गच्छेदानीम्" इति उक्त्वा स वेतालः तस्य स्कन्धात् निर्गत्य प्रययौ।

अथ स नरपतिर्वेतालवचसा तं क्षान्तिशीलं भिक्षुं तथा

---

(श) यदर्थं—यस्य भिक्षोर्निमित्तम्। अस्मिन्—शवे। उपहारीचिकीर्षुः,—उपायनीकर्त्तुमिच्छुः, बलिं दातुमिच्छुरित्यर्थः (उपहारः+च्विः+कृ+सन्)। अष्टाङ्गेन—जान्वाद्यष्टावयवेन सह वर्त्तते इति साष्टाङ्गम्—अष्टाभिरङ्गैः कृतं, प्रणामं—"जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया। शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः"॥ इत्युक्तलक्षणमित्यर्थः।

(ष) तथा—तादृशं, साष्टाङ्गमित्यर्थः।

(स) छिन्द्याः,—छेदयेः [ रुधा० छिद+विधिलिङ्-यास् "रुधादिभ्यः श्नम्" (३।१।७८ पा०) इति श्नम् ]। विद्यायाः,—गुटिकाञ्जनादिविषयिण्याः, धरः,—धारकः ते तेषां विद्याधराणां—देवयोनिविशेषाणां (विद्याधरोऽप्सरोयक्षरक्षोगन्धर्वकिन्नराः। पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः), यत् ऐश्वर्यं—विभूतिः, "अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वञ्च वशित्वञ्च तथा कामावसायिता" इत्यष्टविधशक्तिविशेषः इत्यर्थः, तस्य सिद्धिः,—निष्पत्तिः, प्राप्तिरित्यर्थः, विद्याधरैश्वर्यसिद्धिः,—विद्याधराणां शक्तिविशेषस्य लाभ इत्यर्थः। तस्य—तेनेत्यर्थः [ "क्तस्य च वर्त्तमाने"(२।३।६७ पा०) इति वर्त्तमानविहितक्तप्रत्ययनिष्पन्नस्य 'वाञ्छिता' इत्यस्य कर्त्तरि ६ष्ठी०.], वाञ्छिता—ईप्सिता [ वाञ्छि+क्तः "मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८ पा०) इति वर्त्तमाने क्तः ]।

(ङ) स्वाहिताय समुद्यन्तं विविच्य तत् मृतकलेवरं गृहीत्वा प्रहृष्टः तत् वटतरुतलं प्रतस्थे।

---

## अथ पञ्चविंशकथा।

---

ततः स राजा त्रिविक्रमसेनः शवं स्कन्धे वहन् क्षान्तिशीलस्य श्रमणस्य पार्श्वं प्राप, ददर्श च तं (क) मार्गावलोकिनमेकं कृष्णपक्षरात्रौ श्मशानतरुमध्यगम्। स राजा (ख) असृग्लिप्तस्थले, गौरेण अस्थिचूर्णेन निर्मिते, विन्यस्तपूर्णशोणितकुम्भे, महातैलकृतप्रदीपे, कृतानलहोमे, सम्भृतोचितसम्भारे, कृतेष्टदैवतपूजने मण्डले समुपविष्टं तमुपागात्।

(ङ) स्वाहिताय—निजाभिष्टसाधनाय, समुद्यन्तं—सम्प्रवृत्तमित्यर्थः (सम्+उत्+इ+लटः शतृ, ततो द्वितीयैकवचने नुमागमश्च)।

---

(क) मार्गं—राज्ञः आगमनपथम्, अवलोकयितुं शीलमस्येति तं मार्गावलोकिनं—राज्ञः प्रत्यागमनप्रतीक्षणपरमित्यर्थः (ताच्छील्ये णिनिः)।

(ख) असृजा—रक्तेन, लिप्तं—मृष्टं, स्थलं—भूप्रदेशः यत्र तस्मिन् असृग्लिप्तस्थले—शोणितदिग्धभूमिके (विशे०। बहुव्री०); गौरेण—शुभ्रेण। विन्यस्तः,—स्थापितः, पूर्णशोणितः,—रक्तपूर्णः, कुम्भः,—घटो यत्र तस्मिन् विन्यस्तपूर्णशोणितकुम्भे—स्थापितरक्तपूर्णघटे (विशे०। बहुव्री०), महातैलेन—मनुष्यवसया इत्यर्थः, कृतः,—रचितः, प्रदीपः यत्र तस्मिन् महातैलकृतप्रदीपे—नरमांसस्नेहप्रज्वालितदीपे (विशे०। बहुव्री०), सात्त्विकपूजाविधौ प्रवृत्ताः साधकाः गोमयादिलिप्तभूमौ तण्डुलचूर्णपिष्टेन पञ्चवर्णचूर्णेन वा निर्मिते विन्यस्तजलपूर्णमङ्गलघटे घृतादिकृतप्रदीपे मण्डले समुपविश्य स्वेष्टदैवतं पूजयन्ति, अस्य तु पैशाचिककर्म्मणि प्रवृत्तत्वात् तामसपूजाविधौ पूर्वोक्तरूपं मण्डलं बोद्धव्यम्। कृतः अनले होमो यत्र तस्मिन् कृतानलहोमे—हुताग्नौ, सम्भृताः,—सम्यगाहृताः,

भिक्षुश्च तम् (ग) आनीतमृतकं नृपं समुत्थाय प्रोवाच,—"राजन्! त्वया अन्यदुष्करो महान् अनुग्रहो मे विहितः, त्वादृशाः क्व? क्व च इयं चेष्टा? क्व च वा ईदृशौ देशकालौ?" "सत्यमेव त्वां कुलभूभुजां मुख्यमाहुः, एवमात्मानपेक्षेण येन परार्थः साध्यते। एतदेव महतां महत्त्वमुच्यते, यत् (घ) प्रतिपन्नादचलनं प्राणानामत्ययेऽपि"। इति ब्रुवन् स भिक्षुः (ङ) सिद्धार्थमानी तस्य स्कन्धात् तं शवमवतारयामास। ततस्तं स्नापयित्वा (च) बद्धमाल्यं विधाय तस्य मण्डलस्य अन्तः स्थापयामास।

---

उचिताः,—योग्याः, स्वकर्मसिद्धौ आवश्यकीया इत्यर्थः, सम्भाराः,—द्रव्याणि यत्र तस्मिन् सम्भृतोचितसम्भारे—सङ्गृहीतप्रयोजनीयद्रव्यसमूहे (विण०। बहुव्री०)। मण्डले—चक्रवाले, चक्राकाररेखामध्ये इत्यर्थः, देशे वा ("चक्रवालन्तु मण्डलम्" इत्यमरः। "स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च। कुष्ठप्रभेदेऽप्युपसूर्य्यकेऽपि भुजङ्गभेदे शुनि मण्डलः स्यात्" इति विश्वः)।

(ग) आनीतः,—उपस्थापितः, मृतः,—शवदेहो येन तम् आनीतमृतकम्—उपस्थापितशवदेहं [विण०। बहुव्री०। "उरःप्रभृतिभ्यः कप्" (५।४।१५१ पा०) इति कप्]। कुले—सत्कुले, सद्वंशजाता इत्यर्थः, ये भूभुजः,—राजानः तेषां कुलभुजां—कुलीननृपतीनां (शाकपार्थिं०), मुख्यं—श्रेष्ठम्। आत्मनि अनपेक्षा—एतत्कर्म्मकरणे मम इष्टः स्यात्, एतत्कर्म्मकरणे ममानिष्टः स्यादित्यादि विचाररहित्यमित्यर्थः, यद्वा,—आत्मनि अनपेक्षा—अयं निजः अयं परः, एतस्य कर्म कर्त्तव्यमेतस्याकर्त्तव्यमित्यादि भेदबुद्धिराहित्यमित्यर्थः, यद्वा,—आत्मनि न अपेक्षा—ममत्वबोधः यस्य तेन आत्मानपेक्षेण—आत्मनिरपेक्षेण, अगणितनिजजीवनेनेत्यर्थो वा (विण०। बहुव्री०)।

(घ) प्रतिपन्नात्—अङ्गीकृतात् ("प्रतिपन्नोऽन्यलिङ्गः स्यात् विज्ञातेऽङ्गीकृतेऽपि च" इति मेदिनी), अचलनम्—अस्खलनम्, अनिवृत्तिरित्यर्थः।

(ङ) आत्मानं सिद्धार्थं—कृतकृत्यं, साधितनिजप्रयोजनमित्यर्थः, मन्यते यः सः सिद्धार्थमानी—इष्टसिद्धिबोधवानित्यर्थः [सिद्धार्थ+मन+"आत्ममाने खश्च" (३।२।८३ पा०) इति णिनिः]।

(च) बद्धं,—परिधापितम् इत्यर्थः, माल्यं यस्य यस्मै वा तादृशं बद्धमाल्यं—माल्यभूषितमित्यर्थः (विण०। बहुव्री०)।

ततः भस्मालेपितगात्रः केशयज्ञोपवीती (छ) प्रावृतप्रेतवसनः भूत्वा क्षणं ध्याननिभृतं स्थितः। अथ ध्यानबलात् तस्मिन् मृतकलेवरे प्रविष्टं तं वेतालं स भिक्षुः क्रमेण पूजयामास। प्रथमं तस्मै (ज) कपालेन पात्रेण अर्घ्यं, ततः शुभ्रैर्नरदन्तैः पुष्पं, शोणितं सुगन्धिविलेपनं, मानुषनेत्रं धूपं, मांसानि च नैवेद्यानि दत्त्वा पूजनं यथाविधि समाप्य पार्श्वगं राजानं प्रोवाच,—"राजन्! इहास्य मन्त्राधिराजस्य कृताविर्भावस्य अष्टाभिरङ्गैः निपत्य भूतले प्रणामं कुरु, येन अभीष्टसिद्धिं तेऽयं वरप्रदो दास्यति"। श्रुत्वैतत् मृतवेताल-

(छ) प्रावृतम्—आच्छादितम्, अङ्गाच्छादनीकृतमिति यावत्, प्रेतानां—मृतनराणां, वसनं येन तादृशः, यद्वा,—प्रावृतं—प्रावारीकृतम्, उत्तरीयीकृतमित्यर्थः, प्रेतवसनं येन तादृशः प्रावृतप्रेतवसनः,—शववस्त्रेणाच्छादितसर्वाङ्ग इत्यर्थः (विण०। बहुव्री०)। ध्यानेन—समाधिना, निभृतं—मौनमिति भावः, ध्याननिभृतं—समाधिमग्नमिति भावः (क्रिया विण०)।

(ज) कपालेन—मानुषशिरोऽस्थ्ना ("कपालोऽस्त्री शिरोऽस्थ्नि स्यात् घटादेः शकले व्रजे" इति मेदिनी), पात्रेण—कपालरूपेण भाजनेन, अर्घ्यं—दूर्वाऽक्षतादिरूपमित्यर्थः, अर्घार्थं दीयमानं जलमिति वा। नरदन्तैः,—मानवाणां दशनैः, बालानां शुभ्रैर्दन्तैरिति भावः, कल्पितमिति शेषः, पुष्पं—नरदन्तरूपं कुसुममिति भावः, शोणितं—रक्तरूपमित्यर्थः। मानुषनेत्रं धूपं—नराणां चक्षुर्भिरेव कल्पितं धूपमित्यर्थः, नेत्रस्य तेजोमयत्वादिति भावः; मांसानि—मांसरूपाणि इत्यर्थः, अत्र भूतयोनिविशेषस्य वेतालस्य पूजाकरणात् मृतस्य अङ्गादिकं पूजोपकरणं बोद्धव्यम्। पार्श्वगं—पार्श्वस्थितम्। अस्य—मत्पूजितदेवताविशेषस्येत्यर्थः, मन्त्राणाम् अधिराजा—अधिष्ठात्री देवता तस्य मन्त्राधिराजस्य—मन्त्राधिष्ठातृदेवस्य (समासान्त टच्), कृतः आविर्भावः,—अधिष्ठानं, शवशरीरे इति भावः, येन तस्य कृताविर्भावस्य—कृताधिष्ठानस्य, यद्वा,—अस्य—शवशरीरस्येत्यर्थः, मन्त्रेण—मन्त्रबलेन, अधि—अधिकं, राजते—शोभते तस्य मन्त्राधिराजस्य—मन्त्रशक्त्या अतिशक्तिसम्पन्नस्येत्यर्थः, कृतः,—मया कारित इत्यर्थः (अन्तर्भूतणिजन्तः), आविर्भावः,—अधिष्ठानं, देवताविशेषस्येति भावः, यत्र तस्य कृताविर्भावस्य—देवताविशेषाधिष्ठितस्येत्यर्थः, अष्टाभिः,—

वचन: स राजा तं भिक्षुमब्रवीत्,—"भगवन्! नाहं तादृशं प्रणामं वेद्मि, तत् पूर्वं भवान् प्रदर्शयतु, ततस्तथाऽहं करिष्ये" इति। ततः स भिक्षुः यावत् तथा प्रणामं दर्शयितुं भुवि पतितः, तावत् स राजा खड्गप्रहारेणास्य शिरः (झ) अच्छिनत्, आकर्षंश्चास्य हृत्पद्मं पाटितम्; तैस्तत् शिरः तच्च हृत्पद्मं वेतालाय प्रददौ। ततः समन्तात् भूतगणैः हृष्टैः साधुवादे प्रदत्ते स वेतालः परितुष्टस्तस्मात् नृकलेवरात् तं नृपमब्रवीत्,—"राजन्! भिक्षोरस्य यत् विद्याधरेन्द्रत्वमोप्सितमासीत्, तत्तावत् (ञ) भूमिसाम्राज्यभोगान्ते ते भविष्यति"। इत्युक्तवन्तं तं वेतालं स राजा प्रत्यवादीत्,—"योगीन्द्र! त्वञ्चेत् प्रसन्नः, तदा को (ट) नाम अभीष्टो वरः न सिध्येत्? तथाऽपि अमोघवचनं त्वाम् इदमभ्यर्थये, एतास्ते नानाऽऽख्यानमनोरमाः प्रश्नकथाः चतुर्विंशतिः पञ्चविंशति-

---

जान्वादिभिरष्टभिः। ते—तुभ्यं ["तेमयावेकवचनस्य" (८।१।२२ पा०) इति चतुर्थ्येकवचनान्तस्य युष्मदः ते आदेशः]।

(झ) अच्छिनत्—अत्रोटयत, द्विधाऽकरोदित्यर्थः (रुधा० छिद+लङ्-द)। हृत्पद्मं—कमलमुकुलाकारं हृदयमित्यर्थः, पाटितं—द्विधाकृतम्, उत्पाटितमित्यर्थो वा [चुरा० पट+णिच्+क्तः "निष्ठायां सेटि" (६।४।५२ पा०) इति इदि परे णेर्लोपः]।

(ञ) भूमौ—पृथिव्यां, यत् साम्राज्यं—सार्वभौमत्वं, तस्य भोगान्ते—उपभोगानन्तरं भूमिसाम्राज्यभोगान्ते—पृथ्वीराज्यसम्भोगावसानमित्यर्थः।

(ट) नाम—सम्भावनायां, मन्ये इत्यर्थः (अव्य०)। अमोघम्—अव्यर्थं, वचनं यस्य तम् अमोघवचनं—सिद्धवाक्यं, वाक्सिद्धमित्यर्थः (विश०। बहुव्री०)। अभ्यर्थये—याचे (अभि+अर्थ+स्वार्थे णिच्+लट्-ए)। नाना—विविधैः, आख्यानैः,—इतिवृत्तकथनैः, मनोरमाः,—मनोहराः नानाऽऽख्यानमनोरमाः,—विविधोपाख्यानरमणीयाः (विश०। ३या तत्पु०)। पञ्चविंशत्या—पञ्चविंशतिः सङ्ख्यापूरिकया कथया इत्यर्थः, समाप्तिं—सम्पूर्णतां, गच्छन्तीति तादृश्यः पञ्चविंशति-

समाप्तिगाः भूतले ख्याताः पूजनीयाश्च भवन्तु"। इति तेन राज्ञाऽर्थितो वेतालः प्रत्यभाषत,—"राजन्! एवमस्तु, विशेषञ्च वच्मि, शृणु, याश्चतुर्विंशतिः पूर्वाः, या च (ठ) एषा कामदायिनी, यः अस्याः कथाऽंशमात्रमपि सादरः कथयिष्यति वा श्रोष्यति, स सद्यो मुक्तपापो भविष्यति; यत्रैषा कथा कीर्त्यते, तत्र यक्षराक्षसडाकिनीवेतालकुष्माण्डब्रह्म-राक्षसादयो न प्रभविष्यन्ति" इत्युक्त्वा स वेतालस्तस्मात् नृकलेवरात् निर्गत्य यथारुचि योगमायया स्वं धाम प्रायात्।

ततः सर्वैर्देवगणैः सह महेश्वरः परितुष्टः तत्राऽऽविरभूत्, प्रणतञ्च तं नृपम् (ड) आदिशत्,—"साधु वत्स! यत् त्वयाऽयं विद्याधरमहाचक्रचक्रवर्त्तिताहठकामुकः कूटतापसः निहतः।

---

समाप्तिगाः,—पञ्चविंशतिसङ्ख्यापूरणार्थम् अन्याध्यायसंयुक्ताः, समाप्तिसूचकपञ्चविंशतिकथासंयुक्ता इत्यर्थः।

(ठ) एषा—एतदध्यायोक्ता, कामदायिनी—अभीष्टसिद्धिकारिणी, राज्ञः सिद्धिलाभादध्यायस्यास्य कामदायित्वमवगन्तव्यम्। अस्याः,—वेतालपञ्चविंशतेः। कुष्माण्डः,—शिवस्य गणदेवताविशेषः. ("कुष्माण्डुमाया स्त्री पुंसि ककारौ च गणान्तरे। भूषान्तरे" इति मेदिनी)। प्रभविष्यन्ति—समर्था भविष्यन्ति, अनिष्टमाचरितुमिति शेषः (प्र+भू+लृट्-अन्ति)। योगः,—चित्तवृत्तिनिरोधः, स एव माया—अचिन्त्यशक्तिः तया योगमायया—योगबलेनेत्यर्थः। धाम—स्थानं ("धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः" इति मेदिनी)।

(ड) आदिशत्—व्यपदिशदित्यर्थः (आ+दिश+लङ्-द)। विद्याधराणां यत् महाचक्रं—महत् राष्ट्रं, विस्तीर्णराज्यमित्यर्थः ("चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः॥ जलावर्त्तेऽपि" इति मेदिनी), तत्र चक्रवर्त्तितायाः,—सार्वभौमत्वस्य, विद्याधरराज्ये एकाधिपत्यस्येत्यर्थः ("चक्रवर्त्ती सार्वभौमः" इत्यमरः), हठात्—प्रसभात्, बलात्कारादित्यर्थः, तत्र योग्यो न वा इति अविचार्य्यैवेति भावः ("प्रसभन्तु बलात्कारो हठः" इत्यमरः), कामुकः,—प्रार्थी विद्याधरमहाचक्रचक्रवर्त्तिताहठकामुकः,—विद्याधरसाम्राज्यप्रार्थीत्यर्थः (विध०। षष्ठी तत्पु०), कूटेन—छलेन, कपटेनेत्यर्थः ("मायानिश्चल-

त्वं मया (ढ) स्वांशतः विक्रमादित्यः सृष्टः म्लेच्छरूपावतीर्णानामसुराणां शान्तये, उद्दामदुर्वृत्तानां दमनाय च। अतः (ण) सद्वीपपातालां महीं वशे स्थापयित्वा विद्याधराणामधिराजो भविष्यसि ; तत्र च चिरं दिव्यान् भोगान् भुक्त्वा, स्वेच्छया च तान् त्यक्त्वा अन्ते ममैव सायुज्यमवाप्स्यसि। एतच्च अपराजितं नाम खड्गं (त) मत्तो गृहाण, अस्यैव प्रसादात् यत् यदुक्तं, तत् सर्वं ते सेत्स्यति” इत्युक्त्वा तं खड्गरत्नं तस्मै दत्त्वा, वाक्-पुष्पैश्च तेनार्चितः शम्भुः देवैः सह तिरोदधे।

अथ कथोपसंहारः।—

अथ सर्वं कार्य्यं समाप्तं निशाञ्च प्रभातां दृष्ट्वा राजा स्वपुरं

---

यन्त्रघ् कतवामृतराशिषु। अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्” इत्यमरः), तापस,—तपस्वी कूटतापसः,—कपटयोगी (३या तत्पु०)।

(ढ) स्वांशतः,—निजांशात, स्वदेहं विभज्येत्यर्थः। उद्दामानः,—उच्छृङ्खलाः, अत्युग्रा इत्यर्थः, ते च ते दुर्वृत्ताः,—दुराचाराः तेषाम् उद्दामदुर्वृत्तानाम्—उच्छृ-ङ्खलानां, दुष्टानामित्यर्थः।

(ण) द्वीपैः,—जम्बुशाककुशक्रौञ्चशाल्मलीप्लक्षपुष्कराख्यैः सप्तभिः द्वीपैः, पातालैः,—“अतल वितलञ्चैव नितलञ्च गभस्तिमत्। महातलञ्च सुतलं पातालं सप्त कीर्त्तितम्” इत्युक्तैः सप्तभिः पातालैश्च, सह विद्यते इति तादृशीं सद्वीपपातालां—सप्तद्वीपसप्तपातालसहिता (विश०। बहुव्री०)। अधि—अधिकः, राजा अधिराजः,—राजश्रेष्ठः, चक्रवर्त्तीति यावत् (प्रादिस०)। सह युनक्ति—युक्तो भवति इति सयुक्, तस्य भावः सायुज्यं—सारूप्यसालोक्यादिपञ्चविधमुक्तिमध्ये एकत्वरूपं मुक्तिभेदमित्यर्थः [सह+युज्+क्विप् “सहस्य सः संज्ञायाम्” (६।३।७८ पा०) इति सहस्य सः, ततः ष्यञ्]।

(त) मत्तः,—मत्सकाशात् (अस्मत्-शब्दात् पञ्चम्यास्तसिल्)। सेत्स्यति—सम्पत्स्यते, सफलीभविष्यतीत्यर्थः (सिध+लृट्-स्यति)। खड्गेषु रत्नं—श्रेष्ठं खड्गरत्नं—प्रशस्तासिं (७मी तत्पु०)। “रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्” इति मेदिनी)। वाचः पुष्पाणीव तैः वाक्पुष्पैः,—वचनकुसुमैः, स्तुतिभिरिति भावः। तिरोदधे—अन्तर्दधे, अन्तर्हितवानित्यर्थः (तिरस्+धा+लिट्-ए)।

प्रतिष्ठानं प्रविवेश। तत्र (थ) प्रकृतिभिर्विहितोत्सवाभिरभ्यर्चितः स्नानदानगिरिशार्चनगीतवाद्यादिभिः तत् सर्वं दिनमनयत्। ततः स्वल्पैरेव दिवसैः भगवतः शङ्करस्य प्रसादात् महीपां सपातालां सर्वां महीं (द) निष्कण्टकां वशीकृत्य बुभुजे। अथ महतीं विद्याधरसमृद्धिं सम्प्राप्य चिरं तत्सुखानि सम्भुज्य (ध) भगवत्सायुज्यमन्ते ययौ।

इति बि, ए उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता वेतालपञ्चविंशतिः।

(थ) प्रकृतिभिः,—अमात्यादिभिः ("प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गेऽपि" इति मेदिनी), विहितः,—अनुष्ठितः, उत्सवः,—आनन्दजनकव्यापारः याभिः ताभिः विहितोत्सवाभिः,—प्रकाशितविविधानन्दसूचकव्यापाराभिः।

(द) निष्कण्टकां—शत्रुशून्याम्।

(ध) भगवत्सायुज्यं—भगवता—ऐश्वर्य्यवता शिवेन सह, सायुज्यम्—ऐक्यरूपमुक्तिभेदम्।

इति वेतालपञ्चविंशतिकथायाः व्याख्या समाप्ता।

---

